# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]






पञ्चदशवर्षे १-२, ३-४ अङ्काः

संवत् २०१७

प्रकाशनतिथिः

श्रावणपूर्णिमा, संवत् २०१६






# विषयानुक्रमणिका

## पञ्चदशवर्षीयप्रथमद्वितीयाङ्कयोः

## पञ्चदशवर्षीयतृतीयचतुर्थाङ्कयोः

———

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१५ वर्षः | भाद्रपदपूर्णिमा, संवत् २०१७ | १-२ अङ्कौ


# बौद्धन्याये प्रामाण्यविमर्शः

श्रीसातकड़िमुखोपाध्यायः, नलनालन्दामहाविहारस्य निर्देशकः।

श्रीरामकृष्णाङ्घ्रिसरोजयुग्मे पीयूषमत्युत्तममस्त्यदभ्रम्।
तुच्छेन्द्रियार्थान् प्रविहाय तस्मिन् गाढं पिबन्मज्जतु चित्तभृङ्गः॥

सत्यानन्दं नमस्कृत्य ध्यात्वा तत्पदपङ्कजम्।
प्रवर्ते दुःखसाध्येऽर्थे स मामुत्तारयिष्यति॥

विद्यागुर्वोः पदद्वन्द्वे श्रीयोगेन्द्रसुरेन्द्रयोः।
नामं नामं समारिप्से प्रमातत्त्वस्य चिन्तनम्॥

मातः सरस्वति पुनः पुनरेव नत्वा
बद्धाञ्जलिश्चरणयोर्विनयेन याचे।
वाक्चेतसोर्मम तथा भव सावधाना
काश्यां न विज्ञसदसि स्खलतो यथैते॥

अयि भो विद्वत्तल्लजा निरन्तरशास्त्रानुशीलनशाणकषणनिर्मलीकृतशेमुषीकाः शास्त्ररहस्यपारदृश्वानः प्रवक्तारोऽध्येतारश्च !

यद्यपि विपुलमतिमहिमशालिनामत्रभवतां सकाशे यस्य कस्य वा विषयस्य विवेचनं पिष्टपेषायितं भवेत्, केवलं ज्ञातचरस्यैव प्रख्यापनेन वाचालत्वमेव समुद्भावितं भविष्यति, तथापि समुदाचारपरिपिपालयिषया स्वात्ममतिवैमल्यसम्पिपादयिषया वा यत्किमपि निवेदयामि। अनाख्यातमपि ज्ञायत एतद् यदाशङ्क्यमानं स्खलनजातं क्षमाधनैः सुधीवर्यैरुपेक्षिष्यत इति। पूर्वस्मिन्नवसरे मयका बौद्धन्यायस्य विमर्शनमनुष्ठितम्, भवद्भिश्च सादरावधानेन समाकर्णितम्। तत्रैवाभ्युपपत्त्या प्रोत्साहितः खल्वयं जनस्तस्मिन् प्रबन्धेऽनालोचितं बौद्धसंमतं प्रामाण्यवादं समासेन परीक्षितुमुपक्रमते। अलमप्रस्तुतप्रपञ्चनेनेति प्रकृतमनुसरामि।

सर्वदर्शनसंग्रहे एतत् कारिकाद्वयमुपलभ्यते—

प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः॥
प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः।
प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम्॥

(स० सं० पृ० २७९)

तत्र ज्ञानानामप्रामाण्यं स्वतः प्रामाण्यं परत इति सौगतानां राद्धान्त उपक्षिप्तः। प्रयत्नेनान्विष्यन्तोऽपि वयं नास्य वादस्य मूलं सौगतन्यायग्रन्थेषूपालभामहि। धर्मकीर्तेः प्रमाणवार्तिकव्याख्यातारः शान्तरक्षितकमलशीलौ च सर्वथाऽन्यादृशं मतं प्रतिपादयन्ति। न हि न्यायप्रस्थाने बौद्धा ज्ञानस्य स्वाभाविकमप्रामाण्यमभ्युपगच्छन्ति। तेषां मतं न खल्वेकान्ततः स्वतः परतः पक्षयोर्निक्षेप्तुं शक्यम्, किन्तु विभज्यैव वचनीयम्। तथा हि—अर्थक्रियाज्ञानरूपं संवादज्ञानं स्वसंवेदनं तार्किकानुमतानुव्यवसायस्थानीयम्, अनुमानमाभ्यासिकप्रत्यक्षज्ञानं च स्वतः प्रमाणमितरत्परत इति सौगताः सङ्गिरन्ते (त०सं० पञ्जिका, पृ० ७७५)। एतदेव मतमार्हतैः स्वसिद्धान्तत्वेन प्रत्यपादि। प्राचीननैयायिकप्रस्थानधुरन्धरेण वाचस्पतिमिश्रेण तात्पर्यटीकायामयमेव पक्षः स्वसिद्धान्तत्वेनाङ्गीकृतः (न्याय० तात्पर्यटीका, पृ० १२-१३)। स्वसंवेदनं तु नैयायिकानामसम्मतम्। अतस्तत्स्थानेऽनुव्यवसाय एव प्रतिभटीकृतः। अन्यत्तु अविशिष्टम्। उदयनाचार्येण न्यायकुसुमाञ्जलौ (स्त० २ श्लो० १) महता संरम्भेण प्रामाण्यमप्रामाण्यं चोभयमुत्पत्तौ ज्ञप्तौ च परत एव सिद्धमिति पक्षमवष्टभ्य

## बौद्धन्याये प्रामाण्यविमर्शः

मीमांसकोपज्ञः सकलवेदान्तप्रस्थानानुयायिभिश्चोररीकृत उत्पत्तौ ज्ञप्तौ च स्वतः प्रामाण्यवादोऽपहस्तितः। गङ्गेशोपाध्यायेन उदयनमेव मतं सूक्ष्मेक्षिकया व्युत्पादितम्। न्यायप्रस्थाने वाचस्पतेर्मतं न केनापि नैयायिकेनाङ्गीकृतं दृश्यते। संक्षेपेण एते पक्षाः संभाव्यन्ते--(१) उभे अपि प्रामाण्याप्रामाण्ये स्वत एव, (२) उभे अपि परतः, (३) प्रामाण्यं परतः, अप्रामाण्यं तु स्वत एवेति तृतीयः, (४) प्रामाण्यं स्वतः, अप्रामाण्यं परत इति चतुर्थः, (५) पञ्चमस्तु पक्षो बौद्धादिसम्प्रतिपन्नः प्रागेवावेदितः। एतेष्वाद्यः पक्षो न युक्तिमनुरुणद्धि। तथा हि—एकस्यां ज्ञानव्यक्तौ परस्परविरुद्धं प्रामाण्यमप्रामाण्यं च न सम्भवदुक्तिकम्, तयोः परस्परपरिहारेणैवावस्थानात्। व्यक्तिभेदेन तयोरवस्थानाङ्गीकारे नियामकाभावेन "अन्यानपेक्षत्वे किं क्वेति न निरूप्यते" (श्लो० वा० पृ० ५६, श्लो० ३७)। अस्य च पक्षस्य युक्तिसम्पत् श्लोकवार्तिककारेण प्रदर्शिता। तस्याश्चानुपादेयत्वमपि—"स्वतस्तावद् द्वयं नास्ति विरोधात्" इति प्रतिपादितम् (तत्रैव, पृ० ५५, श्लो० ३५)। सत्कार्यवादिनां सांख्यानामयं पक्ष इति सुचरितमिश्रेण प्रतिपादितं स्वव्याख्यायाम्। नह्यसतः प्रामाण्यस्य अप्रामाण्यस्य वा उत्पत्तिः संभविनीत्येतद्द्वयं ज्ञानस्य स्वाभाविकमिति हृदयम्। द्वितीयश्च पक्षो नैयायिकाभ्युपगतः परस्तात्प्रतिपादयिष्यते। तृतीयः पक्षोऽपि न सामञ्जस्यमियर्ति। स्वभावतोऽप्रमाणभूतस्य न कथमपि प्रामाण्यं शक्योत्पादम्, स्वभावस्यानपायित्वात्। परतस्तस्य प्रामाण्ये उत्पद्यमाने द्वितीयस्यापि स्वतः प्रामाण्याप्रामाण्यानुयोगे दोषस्य दुष्परिहरत्वात्। तथा हि—यदप्रमाणभूतं तत् स्वाङ्गमेव धारयितुमसमर्थं कथं परस्य प्रामाण्यमुत्पादयेत्। परतस्तस्य प्रामाण्ये उपजनितेऽनवस्थादौस्थ्यमपरिहरणीयं स्यात्। चतुर्थस्तु पक्षः स्वतः प्रामाण्यवादिनाम्। जन्यज्ञानस्योत्पत्तौ प्रामाण्यं तु स्वकारणादेवासाध्यते। अत्र चेयं स्वतस्त्वनिरुक्तिः—विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्व जन्यत्वं प्रमायाः स्वतस्त्वं नाम (चित्सुखी, पृ० २१५)। दोषस्त्वागन्तुकः। तत्प्रयोज्यं ज्ञानस्याप्रमात्वम्। दोषरहिता स्वाभाविकी विज्ञानसामग्री प्रमां जनयति। कारणदोषाभावे ज्ञानस्य प्रमात्वमौत्सर्गिकम्। तथा चोक्तं भट्टपादैः—

> स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्।
> नहि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते॥ इति।

(श्लो० वा० पृ० ५६, श्लो०४७)

न च दोषाभावस्यापि प्रमाकारणत्वेन न ज्ञानसामग्रीमात्रजन्यत्वं प्रमाया इति वाच्यम्, दोषाभावस्तु विरोध्यप्रमाप्रतिबन्धकत्वेनोपक्षीणसामर्थ्यो नानन्यथासिद्ध-कारणतां बिभृयात्, दोषस्याप्रमाहेतुत्वे तदभावस्य प्रतिबन्धकाभावविधया अन्यथासिद्ध-त्वम्। अत एव ज्ञानकारणगुणानामपि प्रमाहेतुत्वं नैयायिकैर्नापादनीयम्, गुणानां दोषाभावसम्पादनेनैवान्यथासिद्धत्वात्। तथा चोक्तं भट्टपादैः—

तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः।
अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः॥ इति।
(तत्रैव, पृ० ६६ श्लो० ६५)

दोषाभावादप्रामाण्यद्वयस्य मिथ्यात्वसंशयत्वलक्षणस्यासत्त्वमेव जायते। तेन ज्ञानसामग्रीमात्रप्रयुक्तत्वलक्षणप्रमास्वभावरूप उत्सर्गो नापोदितो भवतीति भट्ट-वार्त्तिकार्थः।

अत्र प्रसङ्गे सौगतानामपि सम्प्रतिपत्तिरुल्लेखमर्हति। ज्ञानस्य मेयबोधात्मिका शक्तिः स्वकारणादेवोपजायते। एतदेव च प्रामाण्यस्योत्पत्तौ स्वतस्त्वम्। तथा चोक्तम्—

अथ शक्तिः स्वहेतुभ्यः प्रमाणानां प्रजायते।
( तत्त्वसं० २८२७ )

तदत्र न विवादो नः को ह्यनंशस्य वस्तुनः।
स्वहेतोरुपजातस्य शक्तिं पश्चात्प्रकल्पयेत्॥ इति।
( तत्रैव, २८२८ )

यदेव ज्ञानकारणं तदेव प्रमाकारणमित्यत्र मीमांसकादिभिः सौगतस्यैकवाक्यता। नैयायिकास्तु कारणगतगुणानामेव ज्ञाने प्रमात्वप्रयोजकत्वमभिमन्यन्ते। तत्र च को वा गुणः को वा दोषाभावरूप एवेति नेषत्करं विवेचनं संभवति। गुणैर्दोषाभावः सम्पाद्यते। दोषस्तु प्रतिबन्धकः। तदपनयनेन गुणस्य नान्यथासिद्धत्वं शङ्कनीयम्। दोषाभावः प्रतिबन्धकाभाव एव। स च कार्यमात्रं प्रति हेतुः। तस्माद् गुणं वा दोषाभावं वान्तर्भा-व्यैव ज्ञानसामग्र्या प्रमाहेतुत्वम्, न तु तदनपेक्ष्यैवेति ज्ञानसामग्र्यतिरिक्तगुणदोषान्य-तरापेक्षायां न प्रमाया उत्पत्तौ स्वतस्त्वमिति नैयायिकानामाशयः। अनयोः कतरः पक्षः समीचीन इति न सर्ववादिसम्प्रतिपत्त्या शक्यनिर्णयः। कुमारिलस्तु एवं

स्वाशयमाविष्करोति—गुणकृतं ज्ञानस्य प्रामाण्यं दोषकृतं चाप्रामाण्यमिति मते गुणदोषविवर्जितकारणजन्यं ज्ञानं न प्रमाणं न वाऽप्रमाणमिति निःस्वभावमेव प्रसज्येत। "सर्वं हि ज्ञानं राशिद्वये शक्यमन्तर्भावयितुम्—प्रमाणमप्रमाणं वेति। तदुभयरहितं ज्ञानं किमात्मकं स्यादिति" (न्या० रत्ना० पृ० ५५)। न च गुणदोषयोरन्यतरेणावश्यं भवितव्यं ज्ञानसामग्र्यामिति वाच्यम्, तथा सति ज्ञानसामग्र्यविनाभावी गुण उत्पत्तौ परतः प्रामाण्यपक्षमपहस्तयेत्। दोषस्यापि तथात्वेऽप्रामाण्यस्याप्युत्पत्तौ परतस्त्वं दुरुपपादम्। यद्येवं सति तयोर्ज्ञानसामग्रीबहिर्भूतत्वमभ्युपगम्येत तदा गुणदोषवर्जितकारणेण जन्यं ज्ञानं नापह्नोतुं शक्यम्। अतस्तदवस्थ एव निःस्वभावत्वदोषः, नव्यनैयायिकानां मते नेदमनिष्टापादनमुपपन्नम्, प्रमाणाप्रमाणव्यतिरिक्ततृतीयराशिसंभवात्। तथा चोक्तम्--

तत्प्रमा नाऽप्रमा नापि भ्रमः स्यान्निर्विकल्पकम्।

(भाषापरिच्छेद, का० १३५)

अयं तु विशेषो मीमांसकमतस्य निर्विकल्पकप्रत्यक्षस्यापि प्रमाणाप्रमाणान्यतरकोटौ यदन्तर्भावः। बौद्धानामद्वैतवेदान्तिनां च निर्विकल्पकस्यैव प्रामाण्याभ्युपगमात् सविकल्पकस्याप्रमात्वप्रतिज्ञानात् तदुभयबहिष्कृतस्य खपुष्पायमाणत्वात्। प्रतिबन्धकाभावस्य कारणत्वं वा कारणतावच्छेदकत्वेन दण्डत्वादिवद्धटेऽन्यथासिद्धत्वं वेति स्वतः परतः प्रामाण्यवादिनां स्वस्वमताभिनिवेशेन विवदमानानां को वा विनिगमको भवेदृते स्वानुभवात्। अत्र निर्णयं खलु स्थेयभूतेषु विद्वत्सु निक्षिप्य तिष्ठामहे वयम्।

अथ ज्ञप्तिपक्षं विचारयितुं प्रक्रमामहे। नैयायिकानां मते प्रामाण्यस्य ज्ञप्तिरुत्पत्तिवत्परसाध्यैव। सर्वत्र च ज्ञाने प्रामाण्यग्रहणं समर्थप्रवृत्तिजनकत्वलिङ्गेनानुमानेनैव सम्पाद्यते। ज्ञप्तौ स्वतस्त्वनिरुक्तिः—"ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यम्" (त० चि० पृ० ५४) इति गङ्गेशोपाध्यायेनोपन्यस्ता। निरुक्त्यन्तरसंभवेऽप्येतयैव प्रकृतिसिद्धं संभावयन्त एतामेव विचारयामः। यदि ज्ञानग्राहकेणानुव्यवसायेन साक्षिणाऽनुमानेन वा तद्गतं प्रामाण्यमप्यवश्यं ग्राह्यं भवेत्तदा स्वग्राहकसामग्रीग्राह्यत्वरूपं स्वतः प्रामाण्यं ज्ञानमात्रस्य भवेदेव। ज्ञानं

ज्ञातं सत् प्रमात्वेन ज्ञायत एवेति स्वतस्त्ववादिनां सामान्यतः प्रतिज्ञा। अत्रोदयन एवं प्रत्यवतिष्ठते—"प्रामाण्यं परतो ज्ञायतेऽनभ्यासदशायां सांशयिकत्वात्, अप्रामाण्यवत्। यदि तु स्वतो ज्ञायेत कदाचिदपि प्रामाण्यसंशयो न स्यात्, ज्ञानत्वसंशयवत्, निश्चिते तदनवकाशात्" (न्या० कु० पृ० २१८, २२७) इति। अनभ्यासदशोत्पन्नज्ञान-प्रामाण्यं न स्वाश्रयग्राहकसामग्रीमात्रग्राह्यमित्युदयनस्य पक्षः। न्यायमते ज्ञानमनुव्यवसायेन गृह्यते। तेनापि यदि तत्प्रामाण्यमपि गृहीतं स्यान्न कदापि तद्विषये संशयः प्रादुर्भवेत्। संशयश्चानुभवसिद्ध एवानभ्यासदशोत्पन्ने ज्ञाने। तथा हि—इदं रजतमिति ज्ञाने रजतत्वं प्रकारः पुरोवर्ति धर्मी च ज्ञानग्राहकेणानुव्यवसायेन गृह्यत इत्यत्र न विवादः, किन्तु विशेष्यस्य यद्रजतत्ववैशिष्ट्यं तदनुव्यवसायस्य विषयो न वेति विप्रतिपत्तिः। संशयदर्शनाद्रजतत्वप्रकारकज्ञानस्य रजतत्ववद्विशेष्यकत्वे नानुव्यवसायस्य सामर्थ्य-मिति नैयायिकानामाशयः। स्वतस्त्ववादिनस्तु व्यवसायविषयभूतं धर्मधर्मिवैशिष्ट्य-मनुव्यवसायस्य तद्ग्राहकविषयो विशेष्यवदित्यध्यवस्यन्ति। अत्र रजतत्वादि-वैशिष्ट्यमनुव्यवसायस्य न कदापि विषय आहोस्विद् व्यवसायविषयतया तद्विषयकत्वेऽपि न स्वातन्त्र्येण तद्विषयकत्वं बहिरर्थे मनसः स्वातन्त्र्याभावात्। अस्मिन् विकल्पद्वये नाद्यः कल्पः स्वतस्त्ववादिनां सम्प्रतिपन्नः, विषयनिरूप्यं हि ज्ञानमिति विषयमविषयी-कृत्य तज्ज्ञानस्य ग्रहणमसंभवीत्यनुव्यवसायेन व्यवसाये गृह्यमाणे तद्विषयस्यापि ग्रहण-मवर्जनीयम्। किञ्च, धर्मधर्मितद्वैशिष्ट्यानां व्यवसायेन विषयीकृतानां व्यवसाय-विषयकानुव्यवसायेनापि ग्रहणे न काप्यनुपपत्तिः। धर्मधर्मिरूपांशद्वयस्यैव ग्रहणं न तु वैशिष्ट्यस्येति नैयायिकानां सिद्धान्तोऽनुग्राहकतर्काभावाद् बाधकसत्त्वाच्च नाङ्गी कतव्यः। तथा हि—रजतं जानामीत्यनुव्यवसाये रजतरजतत्वयोः स्वरूपेण सम्बद्धतयैव-भाने पुरोवर्तिनं रजतत्वं च जानामीति समूहालम्बनज्ञानाद्विशेष्यविशेषणभावा-ग्रहणस्य तुल्यत्वान्न किमपि विषयतो वैलक्षण्यं स्यात्। किञ्च, व्यवसायस्य रजतत्व-वैशिष्ट्यं विषय इत्यस्यानुव्यवसायमन्तरेण कथं सिद्धिः?

ननु व्यवसायो वैशिष्ट्यविषयकस्तद्विषयकव्यवहारहेतुत्वादित्यनुमानेनेदं ज्ञानं रजतत्ववति रजतत्वप्रकारकं समर्थप्रवृत्तिहेतुत्वादिति व्यवसायगतप्रामाण्यानुमित्या वा वैशिष्ट्यस्य पुरोवर्तिनो रजतत्ववत्त्वस्य सिद्धेर्न काप्यनुपपत्तिः। अनुव्यवसायेन रजतत्व-वत्त्वस्य ग्रहणे इदं रजतं न वेति रजतत्ववत्त्वे संशयानुपपत्तिः, भवन्मतेऽनुव्यवसायेनैव

तस्य निश्चितत्वात् । वस्तुतस्तु इदं रजतत्वेन जानामीति हि तदाकारो न त्विदं रजतमिति । तृतीयार्थश्च न वैशिष्ट्यं किन्तु तत्प्रकारकत्वम् । ततो वैशिष्ट्यं नानुव्यवसायस्य विषयः । अतश्चानुव्यवसायो व्यवसायस्य रजतत्ववद्विशेष्यकत्वं ग्रहीतु न शक्नोतीति चेत्, मैवम्, वैशिष्ट्यविषयकत्वस्यानुमेयत्वेऽनुमितितः प्राक् कदाचित् संशयदर्शनापत्तेः । प्रकारत्वं च भासमानवैशिष्ट्यप्रतियोगित्वरूपान्नान्यत् । इदं रजतत्वेन जानामीति तृतीयाविभक्त्यर्थस्य वैशिष्ट्यविषयकत्वस्यैवानुभवोऽङ्गीक्रियताम् । व्यवसायविषयस्य धर्मधर्मितद्वैशिष्ट्यरूपत्रितयस्य भानेऽनुव्यवसायेनैव सिद्धेः । वैशिष्ट्यस्य त्यागेनासम्बद्धतया रजतत्वतत्प्रकारत्वकल्पने पुनश्चानुमानेनैव वैशिष्ट्यसिद्धेरङ्गीकारे धर्मधर्मिरूपांशद्वयस्याप्यनुमानेनैव सिद्धिः कल्प्यताम्, कृतमनुव्यवसायेन । किं तावत्प्रकारत्वम् ? "न च १—व्यावर्तकत्वं वा, २—तद् (वैशिष्ट्य)-ज्ञानजनकज्ञानविषयत्वं वा, ३—विशेष्यानिष्ठो रजतत्वादिनिष्ठो ज्ञानेन सह स्वरूपसंबन्धविशेषो वा प्रकारत्वमिति वाच्यम्" (तर्कताण्डव) १ पृ० ६६–६७) । व्यावर्तकत्वं व्यावृत्तिबुद्धिजनकत्वम् । तच्चातीतादिस्थले विशेष्यस्य विशेषणस्य चाभावान्न संभवति, जनकस्य कार्यात् प्राक्सत्त्वनियमात् । किञ्च, बहिरर्थे मनसोऽस्वातन्त्र्यान्न स मानसप्रत्यक्षविषयः । द्वितीयोऽपि कल्पो विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वपक्षे एव घटते । तृतीयो यद्यपि न बहिरर्थस्तथापि स्वरूपसम्बन्धकल्पने न किमपि बीजम् । भासमानवैशिष्ट्यप्रतियोगित्वमेव प्रकारत्वमिति क्लृप्तं पक्षं परित्यज्य स्वरूपसम्बन्धविशेषत्वकल्पने न किमपि विनिगमकम् । न च व्यवसायगतस्य रजतत्ववद्विषयकत्वस्य वैशिष्ट्यस्यानुव्यवसाये भानेऽपि रजतत्ववद्विशेष्यकत्वं न भासते । रजतत्ववद्विशेष्यकत्वं च ज्ञानस्य प्रामाण्यम्, पूर्वस्य भ्रमसाधारण्यात् । तथा हि—शुक्तौ रजतत्वारोपेऽन्यथाख्यातिवादिमते तदाश्रयस्य सत्यरजतस्यापि विषयत्वान्न रजतत्ववद्विषयकत्वं प्रामाण्यस्य गमकम् । रजतत्ववद्विशेष्यकत्वमेव तथा । एवं नैयायिकेन परतः प्रामाण्यानुरोधेनानुव्यवसायस्य रजतत्ववैशिष्ट्यग्रहणेऽसामर्थ्यमभ्युपेत्यानुमानेनैव तद्ग्रहणमास्थीयते । तत्र च मूलं व्यवसायानन्तरभावि संशयज्ञानमेव । यद्यनुव्यवसायः पुरोवर्तिनि रजतत्ववत्त्वं गृह्णीयात्तदा संशयो नोदियात्, प्रामाण्यनिश्चयेनैव तदनुत्पत्तिसंभवात् । संशयस्य चान्यथोपपत्तिसंभवेऽनुव्यवसायेनापि विशेष्यस्य तद्वत्त्वग्रहणे न किमपि प्रतिबन्धकम् । किञ्च, दोषशङ्कावतारे संशये समुत्पद्य-

माने यद्यप्यनुव्यवसायेन तद्वैशिष्ट्यं न गृह्यते, तथापि शङ्काभावे रजतं रजतत्वेन जानामीत्यनुव्यवसायोऽनुभवसिद्धो नापह्नवनीयः।

नन्वेवं व्यवसायद्वारेणैवानुव्यवसायस्य धर्मिणो धर्मवैशिष्ट्यज्ञानेऽपि साक्षात् तन्निश्चयरूपत्वं नास्ति। तदेव च संशयविरोधि। अतस्तस्य न व्यवसायगतं प्रामाण्यं विषयः। न ह्यन्यस्य विषयोऽन्येन गृहीतः सत्त्वं निश्चाययति। अन्यथा गेहे घटज्ञानं ममास्तीति वाक्यश्रवणाज्जायमानं ज्ञानं घटसत्त्वनिश्चयं जनयेत्। एतच्च ज्ञानं श्रुतसाक्षिवाक्यसमानशीलं न बहिरर्थं प्रत्यक्षादिकमनाश्रित्य विषयसत्यतां निश्चेतुं शक्नोति। एवं स्थिते स्वतस्त्ववादीत्थं प्रतिविधत्ते। श्रुतसाक्षिवाक्येऽपि न सव्यवधानत्वमात्रेणार्थनिश्चयाभावः कल्पनीयः। यदि साक्षी आप्तवाक्यात्प्रामाण्येनार्थसत्त्वं निश्चित्य तमर्थं प्रतिपादयेत्तदा तद्वचनस्य विषयसत्त्वप्रतिपादकत्वमेव। एवमनुव्यवसायो दोषशङ्कानास्कन्दितव्यवसायद्वारेणार्थसत्त्वं निश्चिन्वन् सव्यवधानत्वदोषेण न प्रामाण्यात्प्रच्यावनीयः। साक्षाद्ग्रहणस्य द्वारसापेक्षप्रमात्वज्ञानात्प्रामाण्यग्रहणविषये न कोऽपि सामर्थ्यातिशयः। तथात्वेऽनुमानस्य व्याप्तिपक्षं धर्मताज्ञानद्वारेण प्रामाण्यापकर्षो बलादापतेत्। इष्यते चानुमानस्यापि प्रत्यक्षेण तुल्यबलत्वम्। तथा चोक्तं धर्मोत्तरेण प्रत्यक्षमनुमानं चेति न्यायबिन्दुसूत्रे चकारस्य तुल्यबलत्वज्ञापकत्वम् ( न्या० बि० टी० पृ० ४० )। धर्मकीर्तिनापि कण्ठत उक्तम्—

अर्थस्यासंभवेऽभावात्प्रत्यक्षेऽपि प्रमाणता।
प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयम्॥ इति। ( प्रा० वा० )

तस्मादर्थसत्त्वनिश्चयत्वमात्रेण तद्घटितप्रामाण्यनिश्चयत्वोपपत्तौ स्वातन्त्र्यमतन्त्रमेव प्रामाण्यग्रहणे। यदि द्वारापेक्षत्वमात्रेण धर्मधर्मिवैशिष्ट्यमनुव्यवसायस्य न प्रामाण्यनिश्चयस्तदा धर्मिण्यपि कथं स्यात्? किञ्च प्रवृत्तिसामर्थ्याज्ज्ञानस्य प्रामाण्यानुमाने रजतत्वादिधर्मवद्विशेष्यकत्वं व्यवसायस्य मनसैव परिच्छिद्यते। एवं प्राथमिकव्यवसायोपनीते धर्मिणो धर्मवैशिष्ट्येऽनुव्यवसायोऽपि सत्तानिश्चयरूपोऽस्तु। तथा च धर्म्यंश इव वैशिष्ट्यांशेऽप्यनुव्यवसायः सत्तानिश्चयरूपो भवतीति काममभ्युपेयम्। अन्यथा व्यवसायस्येदं वैशिष्ट्यं विषय इति लोकसिद्धव्यवहारो विसंस्थुलो भवेत्।

## स्वतस्त्वे संशयोपपादनम्

ननु प्रामाण्यस्य स्वाश्रयज्ञानग्राहकग्राह्यत्वेऽनभ्यासदशायां संशयो न स्यात्। ज्ञानग्रहे प्रामाण्यग्रहात्तद्ग्रहे धर्मिज्ञानाभावादेव न संशयः संभवेदिति चेदुच्यते— दोषशंकया प्रतिबद्धा प्रामाण्यग्राहिका शक्तिर्न प्रामाण्यं गृह्णाति। न च प्रतिबन्धाद् यथा प्रामाण्यस्याग्रहस्तथा ज्ञानत्वस्यापि स्याज्ज्ञानप्रामाण्ययोरेकवित्तिवेद्यत्वनियमादिति वाच्यम्। यथा हि जातिव्यक्त्योरेकवित्तिवेद्यत्वनियमेऽपि दोषवशादिदं रजतमिति भ्रमे इदमोल्लिखितशुक्तिग्रहेऽपि न शुक्तित्वग्रहः, एवं ज्ञानत्वप्रामाण्ययोरेकवित्तिवेद्यत्वनियमेऽपि दोषशंकायां ज्ञानत्वग्रहे सत्यपि न प्रामाण्यस्य ग्रहणम्। प्रतिबन्धाभावसहकृतैव ज्ञानग्रहणसामग्री प्रामाण्यग्राहिकेति स्वतस्त्वस्य निर्वचनात्। एवं ज्ञानत्वज्ञानस्य प्रामाण्यानिश्चयस्य च संभवेन संशयो युक्त एव। न च ज्ञानत्वप्रमात्वग्रहणशक्त्योरेकप्रतिबन्धकप्रतिबध्यत्वम्। अथात्र ज्ञानत्वग्राहिका शक्तिः प्रामाण्यग्राहिका शक्तिश्च भिन्नाऽभिन्ना वेति कल्पद्वयं संभवति। तत्र तयोरभेदेऽन्यतराग्रहणे द्वयोरप्यग्रहणमवर्जनीयमेव, भेदे तु ज्ञानग्रहणशक्त्यतिरिक्तशक्तिग्राह्यत्वे प्रामाण्यस्य स्वतस्त्वहानिरिति चेत्, न। उभे अपि शक्ती सहजे एव, न तु अप्रामाण्यग्रहणशक्तिरिवागन्तुकहेतुजन्येति न स्वतस्त्वहानिः। शक्तिभेदे च प्रतिबन्धकभेद उपपन्न एव। दृश्यते च वह्नेर्दाहप्रकाशनशक्त्योः सहजत्वेऽपि प्रतिबन्धकभेदः। अथ भवतु ज्ञानत्वप्रमात्वयोरेकैव ग्राहिकाशक्तिस्तथापि न काचिदनुपपत्तिः। तथापि विषयभेदेन प्रतिबन्धकभेदो नानुपपन्नः। मणिमन्त्रादिनाऽग्नेः पुरुषविशेषं प्रति दाहशक्तेः प्रतिबन्धेऽपि पुरुषान्तरं प्रत्यप्रतिबन्धदर्शनात्। न चैवं प्रतिबन्धकाभावरूपस्याधिकस्य हेतोरपेक्षणान्न ज्ञानग्राहकमात्रग्राह्यत्वं प्रामाण्यस्येति परतस्त्वापात इति शंकनीयम्। प्रतिबन्धकाभावो न हेतुः किन्तु हेतुतावच्छेदक एव। अदग्धं वेत्रबीजं वेत्राङ्कुरं जनयति, दग्धं त्वन्यदिति दाहाभावो वेत्रांकुरस्य कारणं भवतीति न केनापि उत्प्रेक्ष्यते, किंतु दाहाभावे विपरीतकार्यस्यानुत्पादे सति वेत्रबीजं स्वसामर्थ्येनैवांकुरं जनयतीति निर्विवादोऽनुभवः। अतो न प्रतिबन्धकाभावो हेतुः। एवं न स्वतस्त्वहानिः। इत्थं यत्र पूर्वं दोषशंकाद्यनवतारे पश्चाद्दोषोपनिपातनात् संशयः। तत्र पूर्वं प्रामाण्यं निश्चीयत एव, अनन्तरं प्रतिबन्धकात्तन्नाशे संशयः संभवति। एतेन प्रामाण्यनिश्चये जाग्रति कथं संशय इति प्रत्यवस्थानं निरस्तम्। उत्तरकाले दोषनिपा-

तात्प्रामाण्यनिश्चयस्य विनाशात्। प्राक्तनप्रामाण्यनिश्चयस्यानन्तरं प्रामाण्यसंदेहात् संशयोपपत्तिः। एतेनैव हेतुना "न च प्रामाण्यसंशयाद्विषयसंशयवत्प्रामाण्यज्ञाने प्रामाण्यसंशयात् प्रामाण्यसंशय इति वाच्यम्। प्रामाण्यज्ञानेऽपि स्वतः प्रामाण्यग्रहे संशयानुपपत्तेः(त० चि० ६४-६५) इति गङ्गेशाक्षेपः प्रत्युक्तो वेदितव्यः। दोषोपनिपाते सति प्राक्तनप्रामाण्यनिश्चये प्रतिहते प्रामाण्यसंशयोपपत्तेः।

न च स्वतस्त्वहेतवोऽप्रयोजका विपक्षबाधकाभावादिति वाच्यम्। परतस्त्वे प्रामाण्यग्रहस्यासंभव एवानुकूलस्तर्कः। तथा हि परतस्त्वे संवादेन प्रामाण्यज्ञाने जाते तस्यापि प्रामाण्यसंशये संवादादिलिङ्गान्तरेण प्रामाण्ये साध्ये, एवं तस्याप्यन्येन प्रामाण्यसाधने फलमुखी अनवस्था, संवादजन्यप्रामाण्यज्ञानानामानन्त्यात्। एवं प्रामाण्यस्यानुमेयत्वे तत्साधकलिङ्गव्याप्त्यादिज्ञानस्य प्रामाण्यसंशये तन्निश्चयार्थं लिङ्गाद्यन्तरज्ञानमपेक्षणीयम्। एवं तस्य तस्यापि प्रामाण्यसंशये तत्तल्लिङ्गाद्यनुसरणे कारणमुखी अनवस्था दुष्परिहरा स्यात्। न च यत्र दोषशंकादिरूपाकांक्षा समुदियात्तत्रैव संवादापेक्षेति नानवस्थेति वाच्यम्। तथात्वे प्रतिबन्धनिरासार्थमेव संवादापेक्षा न तु प्रामाण्यग्रहार्थमिति स्वतस्त्ववादिमतप्रवेशापत्तिः। न च ज्ञानस्यावश्यवेद्यत्वमिति तदभावान्नानवस्थेति वाच्यम्, ज्ञानमवश्यवेद्यं योग्यत्वात्सामग्रीसमवधानाच्चेति परप्रकाशत्वपक्षे प्रयोगः, स्वप्रकाशत्वे तु तदवेदनमसम्भवदुक्तिकम्। ज्ञानवेदनेनैव च तत्प्रामाण्यज्ञानावश्यम्भावान्नानवस्था। न चार्थसन्देहादपि प्रवृत्तिसंभवे न तदर्थप्रामाण्यनिश्चयापेक्षा कृष्यादौ तथादर्शनादिति धर्मोत्तरमतावष्टम्भेन "अर्थसंशयोऽपि हि प्रवृत्त्यङ्गं प्रेक्षावताम्" इति (न्या० बि० टी० पृ० १३) अनवस्था शक्यपरिहारा। बहुवित्तव्यायाससाध्ये पारत्रिकाभ्युदयफलके यागादौ तत्त्वजिज्ञासूनां निष्कम्पप्रवृत्त्यर्थं प्रामाण्यस्यावश्यवेद्यत्वात्। अन्यथाऽर्थनिश्चयादेव प्रवृत्तिसंभवे प्रामाण्यविचारो निरर्थकः स्यात्। पीतशंखभ्रमे निश्चयरूपे संशयभिन्ने सत्यपि पीतार्थिनस्तादृशार्थदर्शनमात्रेण प्रवृत्त्यभावदर्शनात्। तथा हि एते विकल्पाः संभवन्ति—(१) किमर्थनिश्चय एव प्रवर्तकः, (२) उत प्रामाण्यविरोधिज्ञानविरहसहकारिसहितः, (३) अथ प्रामाण्यविरोधिज्ञानविरहः प्रवृत्तिकारणतावच्छेदकः, (४) आहोस्विदर्थनिश्चय एव प्रवर्तकोऽप्रामाण्यादिज्ञानं प्रतिबन्धकम्। आद्यस्तु पक्षः पीतशंखदृष्टान्तेन निरस्तः। द्वितीयपक्षेऽप्रामाण्यस्यानुमेयत्वेन तदनुमित्यभावे पीतार्थिनः शंखे प्रवृत्तिः स्यात्। किञ्चाप्रामाण्यज्ञानाभावमात्रात्प्रवृत्तिसंभवे

प्रामाण्याज्ञानान्निवृत्तिरपि भवतु। अप्रामाण्यज्ञानाभावस्तु अनेकाभावघटितत्वेन प्रामाण्यापेक्षया गुरुः, प्रामाण्यनिश्चयस्तु न तथेति लघुः। यद्यप्रामाण्यज्ञानाभावेनैव प्रवृत्तेरुपपत्तिस्तर्हि अनुमितौ व्याप्तिज्ञानं न हेतुः, किन्तु सहचारदर्शनं व्यभिचाराज्ञान-सहकृतमिति। एवं पक्षधर्मताज्ञानमपि न हेतुः, किन्तु पक्षे लिङ्गासंसर्गाग्रहः। इत्थमर्था-भावाज्ञानं प्रवर्तकं न त्वर्थनिश्चय इत्यादिकुकल्पनानामनिवारणप्रसङ्गात्। अनेनैव हेतु-नाऽर्थनिश्चय एव प्रवृत्तिहेतुः, अप्रमात्वेनाज्ञातत्वं कारणतावच्छेदकमिति तृतीयो विकल्पो निरस्तः। लाघवेन प्रमात्वेन ज्ञातत्वस्यैव तदवच्छेदकत्वमुचितम्, अन्यथाऽ-भावमुखेन कारणतानिर्णयेऽनुमितौ सहचारज्ञानमेव हेतुः, व्यभिचारित्वादिनाऽज्ञातत्वं कारणतावच्छेदकमित्यपि कल्पयितुं शक्यम्। चतुर्थकल्पोऽपि न युक्तः। अर्थनिश्चय-स्यैव प्रवर्तकत्वमप्रामाण्यज्ञानस्य प्रतिबन्धकत्वमिति कल्पनापि न साधीयसी। तथा हि— मण्यादेर्ज्ञानभिन्नत्वेन विषयग्राहित्वाभावाज्जात्यैव प्रतिबन्धकत्वम्। प्रतिबन्धकत्वं च कारणविघटनद्वारेण कार्यानुत्पत्तिप्रयोजकत्वम्। व्यभिचारादिज्ञानस्य त्वनुमित्या-दिजनकीभूतव्याप्त्यादिज्ञानविघटनद्वारा प्रतिबन्धकत्वं सर्वमतसिद्धम्। एवं सत्यप्रामा-ण्यज्ञानं प्रवृत्तिहेतुभूतज्ञानविघटकमिति विषयद्वारेणैव ज्ञानानां विरोधित्वमङ्गीकर्तव्यम्। तथा चाप्रामाण्यज्ञानं प्रवृत्तिहेतुभूतज्ञानं विघटय्यैव तत्प्रतिबन्धकं भवतीति स्वेनैव विघटनीयस्य प्रामाण्यज्ञानस्यैव हेतुत्वं साधयति। किञ्चाप्रामाण्यशङ्कानन्तरं प्रवृत्तौ प्रामाण्यनिश्चयो हेतुरिति नैयायिकस्यापि सम्प्रतिपत्तिः। न च प्रामाण्यनिश्चयोऽ-प्रामाण्यशङ्कानिरासेनोपक्षीणः। तस्मिन् सति च प्रवृत्तिरिति प्रामाण्यनिश्चयस्य न प्रवृत्तिहेतुत्वमिति कल्पनाऽतीवाश्रद्धेया। तथा सति प्रामाण्यनिश्चयस्य प्रवृत्तावनु-पयोगात्तद्ग्रहणचिन्ताऽनर्थिकैव भवेत्। किञ्चाभ्यासदशोत्पन्नज्ञानस्य प्रवृत्तिहेतुत्वम-प्रामाण्यशङ्काविरहस्य सहकारित्वं कारणत्वावच्छेदकत्वं वा यथा नैयायिकस्यापि सम्मतमेवं तत्समानशीलेन निरस्तप्रतिबन्धेनानुव्यवसायेन गृहीतप्रामाण्यं ज्ञानमेव प्रवर्तकमित्यङ्गीक्रियताम्। न चाप्रामाण्यशङ्काभावेनैव प्रवृत्तिरिति कल्पना साधीयसी। नहि प्रामाण्यनिश्चयं विना तत्संभवः। न च प्रामाण्यज्ञानस्याज्ञातस्यैव प्रवर्तकत्वम्, तदर्थं च न प्रामाण्यनिश्चयोऽपेक्षणीय इति कल्पनेनानवस्थापरिहारात्। तथा चोक्तम्— "चरमज्ञानप्रामाण्यस्य ज्ञानाभावेन कोटिस्मरणाभावेन विषयान्तरसञ्चारेण वा प्रामा-ण्यसंशयानवश्यंभावात्" ( त० चि० पृ० १५२ ) इति वाच्यम्, प्रामाण्यज्ञानरूपस्य

धर्मिणोऽज्ञानं न युज्यते। प्रत्यक्षयोग्यस्य धर्मिभूतज्ञानस्य मनःसंयुक्तात्मसमवाय-रूपसंप्रयोगस्य च सत्त्वे ज्ञानसामग्रीसम्पत्त्या तस्य ज्ञानमवश्यम्भावि। न च बुभुत्साया अभावान्न ज्ञानस्य ज्ञानमिति वदनीयम्, न हि ज्ञानज्ञाने बुभुत्सा सर्वत्रैव हेतुः, ज्ञानस्थ सुखादिवदबुभुत्सितस्यैव ग्रहणात्। अपि च, बुभुत्सायाः स्वविषयज्ञानसाध्यत्वाद् बुभुत्साहेतुज्ञानस्य च तद्विषयबुभुत्सासाध्यत्वे, एवं तस्यास्तस्या विषयज्ञानसाध्यत्वेऽन-वस्था अपरिहरणीया प्रसज्यते। किञ्च वर्तमानस्वीयज्ञाने बुभुत्साया अदर्शनान्न तस्या ज्ञानज्ञाने हेतुत्वं कल्पनीयम्। एतेन बुभुत्सारूपसहकारिविरहान्न प्रामाण्यग्राह-कज्ञानस्य ज्ञानं तद्गतप्रामाण्यस्य वा ज्ञानं प्रवृत्तौ हेतुरिति निरस्तम्।

न च प्रतिबन्धकसत्त्वेन चरमज्ञानस्य ज्ञानं न जायते। तथाहि—व्यवसायरूपधर्मिणो ज्ञाने जनिष्यमाणे तदनन्तरोपस्थिता सुखादिसामग्री तज्ज्ञानसामग्री वा फलबलात् प्रतिबन्धिका कल्पनीयेति वाच्यम्, तथा सति मम ज्ञानं वृत्तं न वेति संशयः कदाचिन्नो-दयेत। भवति च संशयः। तदर्थं ज्ञानस्य ज्ञानमवश्याङ्गीकरणीयम्। यच्च कोटिस्मरणा-भावेन न संशय इत्युक्तं तदप्यनुपपन्नम्, ज्ञानस्यावश्यवेद्यत्वस्य प्रतिपादितत्वाद् ज्ञानत्व-रूपसाधारणधर्मस्य ज्ञाने यागादौ निष्कम्पप्रवृत्त्यर्थं प्रामाण्यविशेषजिज्ञासायाः सत्त्वेन कोटिस्मरणस्यानिवार्यत्वात्। न वा विषयान्तरसञ्चारात् कोट्यन्तरस्मरणाभावादसन्देह इति सम्यक्, निष्कम्पप्रवृत्तिहेतुसन्देहाभावस्य विशेषबुभुत्सायाः सत्त्वेन तयैव विषयान्त-रसञ्चारस्य प्रतिरोधात्। न हि प्रेक्षावन्तो बहुवित्तव्ययायाससाध्ये कर्मणि विषयान्तर-सञ्चारमात्रेण सम्पादितादसन्देहाच्चैत्यवन्दनादौ प्रवर्तन्ते। उक्तञ्च प्रागेव यज्ज्ञानज्ञान-सामग्रीसम्पत्तौ प्रामाण्यनिश्चयेनैवासन्देहस्य सम्भवः। अतो विषयान्तरसञ्चारादिक-ल्पनाऽप्रामाणिकी। न च विषयान्तरसञ्चारो वृत्तपूर्वज्ञानस्य ज्ञानं प्रतिबध्नातीति कल्प-नीयम्, सुखादिज्ञानस्य तत्प्रामाण्यज्ञानस्यावश्यंभावदर्शनान्न विषयान्तरसञ्चारो-ऽसन्देहहेतुः। अन्यथा सुखादिकमपि नावश्यवेद्यम्। तत्रासन्देहस्तु धर्मिभूतसुखा-ज्ञानादित्यपि कल्पयितुं शक्यम्। न च सामग्रीसत्त्वात्तस्यावश्यवेद्यत्वमिति चेत्, ज्ञानप्रामाण्येऽपि दीयतां दृष्टिः। न च स्वतस्त्ववादिनामपि यद्यपि संवादपरीक्षा प्रामाण्यज्ञानार्थं नावश्यकी तथापि सत्यां दोषशङ्कायां तदपनोदाय तत्परीक्षाऽपेक्षिता। तस्यापि संवादस्य पुनः प्रामाण्यसंशये संवादान्तरापेक्षा। एवं तस्य तस्यापीत्यनवस्था

कथं न प्रादुःष्यात्। स्वतस्त्वपक्षेऽपि चेदसमीक्षिताभिधायिनामेतच्चोद्यं यावता स्वतः प्रामाण्यात् संवादज्ञानस्य न ज्ञानान्तरापेक्षेति नानवस्था।

परतः प्रामाण्यपक्षे प्रवृत्तिसामर्थ्यादेव प्रामाण्यस्य सिद्धिः। तत्र प्रमासमर्थ-प्रवृत्त्योः कार्यकारणभावः सम्बन्धः। स च प्रमाव्यक्तीनां समर्थप्रवृत्तिव्यक्तीनां चानन्त्यान्न श्रृङ्गग्राहिकया शक्यग्रहः। स च प्रमात्वावच्छेदेन प्रवृत्तित्वावच्छेदेन च ज्ञातुं शक्यः। तथा च प्रमात्वे ज्ञाते प्रवृत्तिकारणत्वज्ञानम्, तेन च प्रमात्वज्ञानमित्यन्योन्याश्रयः। अथ प्रमात्वव्याप्यगुणजन्यत्वम्, दोषाभावजन्यत्वम्, अदुष्टकारणजन्यत्वं वा पुरष्कृत्य नियमग्रहे नासौ दोष इति चेत्, प्रमात्वस्याज्ञाने गुणजन्यत्वं दुर्ज्ञानम्। अपि च, प्रत्यक्ष-ज्ञानकरणानामिन्द्रियादीनामतीन्द्रियत्वात् तेषां सादुगुण्यं प्रवृत्तिसाफल्येनैवानुमेयम्, तेन च सादुगुण्येन प्रवृत्तिसामर्थ्योपपत्तिरिति तदवस्थ एवान्योन्याश्रयो दोषः। किञ्च प्रवृत्ति-सामर्थ्येनैव प्रामाण्यानुमानं न सुवचम्, चन्द्रताराादिज्ञाने तदभावात्। प्रवृत्तिश्च प्रामा-ण्यज्ञानाधीनेत्यसकृत्प्रातिपादितम्। मणिप्रभायां मणिज्ञाने च प्रवृत्तिसामर्थ्येनापि प्रामा-ण्यं न सिध्यति। अथ मणिप्रभायामेव समर्थप्रवृत्तिर्मणिप्राप्तिस्तु नान्तरीयकत्वादिति न तत्रातिप्रसङ्गः, भवतु यथा तथा, प्रवृत्तिसामर्थ्येन प्रामाण्यानुमाने प्रागुक्तदोषस्य जागरूक-त्वात्। नापि संवादेन तज्ज्ञानं प्रमाणमिति ज्ञातुमर्हम्, ज्ञानान्तरमात्रसंवादस्य व्यभिचारात्। प्रमाभूतज्ञानान्तरसंवादस्य संवादिज्ञानप्रामाण्यग्राहकत्वे तत्प्रमात्वज्ञान-स्याद्याप्यसिद्धत्वात्, प्रमात्वस्य संवादाधीननिर्णयत्वाच्चान्योन्याश्रयापत्तेः। विसंवादाभा-वस्यासञ्जातबाधे भ्रमेऽपि सत्त्वान्न तेन प्रामाण्यसिद्धिः। तद्योग्यत्वं च प्रमात्वाज्ञाने दुर्नि-रूपम्, गुणजन्यत्वादीनां प्रमात्वनिरूपणाधीननिरूपणत्वात्। तस्मात्सिद्धमेतद्य-ज्ज्ञानस्य प्रामाण्यमौत्सर्गिकम्। यत्र तु विसंवादस्तत्र प्रामाण्यमपोद्याप्रामाण्यमेव गृह्यत इति स्वतस्त्वपक्षे यथा प्रामाण्याप्रामाण्यव्यवस्था सौकर्येण शक्यसम्पादना, न तथा परतस्त्वपक्षे। संशयस्य यथा न स्वतः प्रामाण्यविरोधित्वं तथा चोक्तं प्रागेव। न च ज्ञानग्राहकग्राह्यत्वे प्रामाण्यस्य संशयोऽनुपपन्नः, संशयनिवृत्तौ प्रामाण्यस्य स्वतः सिद्धत्वात्। तथ हि धर्मिज्ञानस्य प्रमाव्याप्यत्वेऽपि दृश्यते सौगतानां तत्रापि संशयः। अनुव्यवसायस्य प्रमाव्याप्यत्वेऽपि सौगतानां तत्सद्भावे विप्रतिपत्तिः। स्वरूपभेदवादिनां स्थाणुस्वरूपे गृह्यमाणेऽपि स्थाणुर्वा पुरुषो वेति संशयदर्शनात् प्रतिबन्धकदोषादिसमव-धानादेव तस्योपपादनं शक्यक्रियम्। तस्मादवधीर्यैव गुणगणमनपेक्ष्यैव दोषाभावं

ज्ञानानां यथाभूतार्थग्रहणसामर्थ्यं तत्सत्यताप्रतिपादनसामर्थ्यं च स्वभावत एव भवतीति स्वतः प्रामाण्यवादिनामाघोषः।

स्वतः प्रामाण्यवादः कुमारिलभट्टोपज्ञ एव प्रतीयते। प्रभाकरमुरारिमिश्रौ तु तदनन्तरकालिकौ तमेव वादमुररीकृत्य स्वस्वमतानुकूल्येन व्याचख्यतुः। उत्पत्ति-ज्ञप्तिभेदेन स्वतः प्रामाण्यस्य निर्वचनं व्युत्पादनं च पश्चात्तनैर्विद्वद्भिः समाचरितम्। तत्त्वप्रदीपिकायां तत्त्वचिन्तामणौ तर्कताण्डवादिग्रन्थेषु चोत्पत्तिज्ञप्तिविभागेन तस्य परीक्षणमुपलभ्यते। प्रामाण्यस्योत्पत्तौ स्वतस्त्वं शान्तरक्षितकमलशीलाभ्यामपि स्वहस्तितम्। प्रामाण्यस्य ज्ञप्तौ तु परतस्त्वमेव संशयादिस्थलेषु, अन्यत्र स्वतस्त्वं ताभ्यामङ्गीकृतम्। ज्ञप्तौ तु स्वतः प्रामाण्यं ज्ञानस्य स्वप्रकाशत्वानङ्गीकारे नाञ्जस्येन शक्योपपादम्। नह्यगृहीतप्रामाण्येन ज्ञानेन ग्राह्यज्ञानस्य प्रामाण्यं निश्चेतुं शक्यते, स्वयमनिश्चितप्रामाण्येन ज्ञानेन कथमन्यस्य प्रामाण्यसाधनं शक्यक्रियं भवेत्। अन्यथाऽनवस्थाया निवारणं न संभवेत्। अनवस्थापरिजिहीर्षया नव्यनैयायिकैर्यत्र नाप्रामाण्य-शङ्का प्रामाण्यसंशयस्तत्रार्थनिश्चयादेव प्रवृत्तिसिद्धिः, ज्ञानस्य तत्प्रामाण्यस्य चावश्य-वेद्यत्वं तैर्नाङ्गीक्रियते। अत एव चरमं ज्ञानमज्ञातमज्ञातप्रामाण्यं च सदेव व्यवसायस्य प्रामाण्यं निश्चाययतीति तेषां सिद्धान्तः। यदि गृहीतप्रामाण्यमेव ज्ञानं स्वग्राह्यस्य ज्ञानस्य प्रामाण्यं साधयेत् तदा स्वतस्त्ववादिनां भट्टगुरुमिश्राणां मतेऽप्यनवस्था वज्रलेपायिता भवेत्। तथाहि—भट्टमते ज्ञानमतीन्द्रियम्, ज्ञाततालिङ्गेनानुमानेनैव तस्य सिद्धिः। घटो ज्ञानविषयो ज्ञाततावत्त्वादित्यनुमानशरीरम्। ज्ञातता च स्वतः प्रकाशा। अतो ज्ञातताज्ञानार्थं ज्ञानान्तरानुसरणेन नानवस्थाप्रसङ्गः। परन्त्वनुमित्यात्मकं ज्ञानमेव स्वविषयज्ञानं तत्प्रामाण्यं चावगाहते। ग्राहकज्ञानस्य प्रामाण्यं नाद्यापि सिद्धम्। अतस्तदर्थमनुमानान्तरापेक्षायामनवस्थाऽपरिहरणीया भवेत्। तथा चोक्तं चिन्तामणौ—"अन्यथा भट्टमते प्रामाण्यस्य ज्ञानानुमितिग्राह्यत्वेनानवस्था स्यात्। गुरुमते च प्रामाण्यस्य स्वग्राह्यत्वं न स्वग्राह्यम्, स्वरूपप्रामाण्याभ्यां बहिर्भूतत्वात्। किन्तु परग्राह्यत्वेऽनवस्थानात् परिशेषानुमानेन प्रमाणान्तरेण वा ग्राह्यम्, तथा च तत्प्रामाण्यस्यापि स्वग्राह्यत्वमन्येनैवेत्यनवस्थैवेति (त० चि० पृ० १५२)। इत्थं सति ज्ञानस्य स्वप्रकाशत्वपक्षे एव ज्ञप्तौ स्वग्राहकग्राह्यत्वरूपस्वतस्त्वस्य सिद्धिर्निराबाधा भवेत्। भट्टमतं तु ज्ञप्तिपक्षे न चतुरस्रतां बिभर्ति।

## बौद्धन्याये प्रामाण्यविमर्शः

बौद्धानां तु पञ्चम एव पक्ष इति प्रागेवावेदितम्। ते खलु स्वसंवेदनस्यार्थक्रियाज्ञानस्यानुमानस्याभ्यासदशोत्पन्नज्ञानस्य च स्वतः प्रामाण्यमङ्गीकुर्वन्ति। यच्च सन्देहविपर्ययविषयीभूतं ज्ञानं तत्तु परतः प्रमाणम्। न चानवस्थाप्रसङ्गो वस्तुसंवादस्य स्वतः प्रामाण्यात्, प्रत्ययान्तरानपेक्षणात्तत्रैव प्रामाण्यस्य परिच्छित्तेः। उक्तं च—

अतश्च प्रथमं ज्ञानं तत्संवादमपेक्षते।
संवादेनापि संवादः पुनर्मृग्यस्तथैव न॥
भ्रान्तिहेतोरसद्भावात् स्वतस्तस्य प्रमाणता।
प्रथमस्य तथाभावे प्रद्वेषो भ्रान्तिसंभवात्॥ इति।

(त० सं० २६,७२-७३)

अयं च विभज्य स्वतः प्रामाण्यवादो मीमांसकपक्षान्नातीव भिद्यते। कुमारिलस्यापि संशयविपर्ययशङ्कानास्कन्दितं विज्ञानमेव प्रमाणम्। यत्रापि दूरत्वादिदोषवशादप्रामाण्यशङ्का तत्रापि प्रत्यासत्तिगमनादिना तस्या निरासे विज्ञानं स्वत एव प्रमाणं भवति। न च प्रयत्नेनान्विष्यापि यदि बाधो नोपलभ्यते तदा न दोषशङ्कया ज्ञानस्य प्रामाण्यविरतिः।

दोषज्ञाने त्वनुत्पन्ने न शङ्क्या निष्प्रमाणता॥६०॥
एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः।
प्रार्थ्यते तावतैवैकं स्वतः प्रामाण्यमश्नुते॥६१॥

( मीमांसाश्लो० वा० पृ० ६४–६५ )

कुमारिलः संवादस्य प्रामाण्यग्राहकत्वं नानुमन्यते। तथा हि—यदि सजातीयेन संवादस्तदा प्रथमज्ञानान्नोत्तरस्य कोऽप्यतिशयः। विजातीयेन तु संवादो निष्फलः। अथ दूराद् दृष्टस्यार्थस्य संवादार्थं तत्समीपप्रत्यासत्त्या निर्णयो दृढतरो भवतीति चेन्न, "अप्रमितविशेषप्रमित्सया तत्र प्रत्यासत्तिर्न पुनः प्रमितस्य संवादायेति" (न्या० र० पृ० ६८)। न च विजातीयेन संगतिः पूर्वज्ञानस्य प्रामाण्यं बोधयितुं क्षमते। न हि गन्धज्ञानेन रूपज्ञानस्य प्रामाण्यमवधार्यते। कमलशीलेनाप्ययं पक्ष आशङ्क्येत्थं समाहितः—नन्वर्थक्रियाज्ञानस्यान्यविषयत्वान्न तेन पूर्वज्ञानप्रामाण्यस्य सिद्धिः। तथा हि—जलविषयं लोचनज्ञानं रूपमात्रग्राहि। स्नाना-

ऽर्थक्रियाज्ञानं तु स्पर्शमात्रविषयं कथं रूपज्ञानस्य प्रामाण्यं शोधयेदित्याशंक्याया-माह—यद्यप्यवयविद्रव्यं न बौद्धमते समस्ति, तथाप्येकसन्तानवर्तिनो विषय-द्वयस्याविनाभावादन्यालम्बनमपि ज्ञानमन्यविषयस्य ज्ञानस्य प्रामाण्यं साधयिष्यति। न हि तौ रूपस्पर्शौ विनिर्भागेन वर्तेते 'एकसामग्र्यधीनत्वात्' (त० सं० पृ० ८०२)। न च क्षणिकत्वात्सर्वभावानां पूर्वज्ञानपरिगृहीतस्य रूपस्याविनाभावी स्पर्शो नोत्तरज्ञानेन विषयीकृत इति कथमविनाभावप्रणालिकयापि संवादः। सन्तानैक्याध्यवसायाद्रूपादिक्षणानामैक्याध्यवसायेन संवादः सर्वलोकसिद्ध इति न काप्यनुपपत्तिरुत्प्रेक्षणीया।

इदमत्रैदम्पर्यं यत्प्रमाणप्रमेयव्यवहारो लोकव्यवहारानुरोधेन संवृत्यैवावकल्पते। उक्तं च दिङ्नागेन—"तथा चानुमानानुमेयव्यवहारोऽयं सर्वो बुद्धिपरिकल्पितो बुद्ध्यारूढेन धर्मधर्मिभेदेनेति ('प्र० वा० कर्णगोमि पृ० २४)। अर्थक्रियासंवादस्तु न पारमार्थिकप्रामाण्यस्य गमकः। उक्तं च खण्डनखण्डखाद्ये—सामान्यविवक्षायां संवादस्य भ्रान्तावपि संभवात्। रजतज्ञानविषयस्यापि पुरोवर्तित्वाद्याकारेणार्थक्रिया-कारित्वमस्ति। प्रतीयमानरूपेणार्थक्रियाकारित्वं विवक्षितमिति चेन्न दुरवधारणत्वात्। यथा रजतं विनापीदं रजतमिति भ्रान्तिज्ञानं संभवति, एवमर्थक्रियाव्यतिरेकेणापि तद्दर्शनसंभवान्न तन्मात्रेण पूर्वज्ञानस्य तथात्वावगतिः। अर्थक्रियाप्रमितिरभिधित्सितेति चेत्, साध्याविशिष्टो हेतुः, प्रमितेरेव निरूपणीयत्वात्। एतेन प्राप्त्यादियोग्य-ताऽविसंवादार्थ इत्यपि निरस्तम्। दुराबाध इव चायं धर्मकीर्तेः पन्था इत्यवहितेन भाव्यमिहेति (ख० ख० ४४१–२)। प्रवृत्तियोग्यतायाः सफलप्रवृत्तिनिर्णेयत्वात्तदभावे-ऽनिचश्य एव। मन्दबुद्धिमोहमात्रप्रयोजनतया प्रणीतमिदं लक्षणं धर्मकीर्तिनेति विवृतं विद्यासागर्याम् (ख० ख० पृ० ४४२)। अबाधितानुभूतिः प्रमेत्यपि न सम्यक्। तदानीं बाधविरहस्यातिप्रसंजकत्वात्। कालान्तरे बाधविरहस्तु दुर्निरूपोऽसर्वज्ञेन। स्वतोबाधविरहस्यातिप्रसंजकत्वात्। भ्रान्तपुरुषस्य बाधाभावेऽपि पुरुषान्तरस्य तत्संभवात्। सर्वजनबाधविरहस्यासर्वज्ञेनानिरूपणीयत्वात्।

अर्थक्रियासमर्थं परमार्थसदिति धर्मकीर्तिनोक्तम्। तदपि न क्षोदक्षमम्। कार्यकारणभावस्य दुरवधारणत्वात्। न चान्वयव्यतिरेकाभ्यां तन्निर्णयः। अन्वय-व्यतिरेकज्ञानमेव दुर्निरूपम्। केनान्वयव्यतिरेकौ गृहीतौ? न प्रत्येकं बीजाङ्कुरज्ञानाभ्यां-स्वस्वविषयमात्रग्रहणव्यापृतत्वात्। न च क्रमेण ग्रहणं कार्यकारणभावस्य। क्रमोऽप्य-

शक्यग्रहः। कार्यकाले कारणं नास्ति। कारणकाले कार्यं न संजातम्। ज्ञानस्य स्वज्ञानेन वर्तमानतामात्रग्रहणम्। अङ्कुरराहित्यं पूर्वत्वं बीजस्येति चेत्। अन्येषामपि तद्दर्शनात्। तस्मान्नाध्यक्षात्कार्यकारणताग्रहः। अतः खल्वनुमानादपि न संभवति, व्याप्तिग्रहणसापेक्षत्वात्, व्याप्तिग्रहणस्य च प्रत्यक्षसापेक्षत्वात्। नापि स्मरणात्, अनुभवप्रामाण्याधीनप्रामाण्यकत्वात्तस्य। यावता कार्यकारणभावस्य प्रत्यक्षत्वं दुर्घटम्, अतस्तत्समुत्थस्मरणेनापि नासौ शक्यनिर्णयः। एतत्सर्वमनुपपत्त्यादिकमनुसन्धाय धर्मकीर्तिनोक्तम्—संवृत्यास्तु यथा तथा" (प्र० वा० मनो० पृ० ११४)। विवृतं च मनोरथनन्दिना "सांवृतमपि कार्यकारणभावमाश्रित्य साध्यसाधनादिव्यवहारसंवादसंप्रत्ययात् समाप्तो लोकव्यवहारः। सांव्यावहारिकं च प्रमाणं तावतैव सुस्थम्"। इति। अद्वैतवेदान्तिनामपि व्यावहारिकोऽयं प्रमाणप्रमेयव्यवहारः। अनेनैवाशयेनोक्तम् केनाप्यभियुक्तेनसौगता ज्ञानानामप्रामाण्यं स्वाभाविकं मन्यन्त इति। उदयनेनाप्यात्मतत्त्वविवेके "किमार्द्रकवणिजो वहित्रचिन्तये" ति व्यावहारिकत्वमेव प्रामाण्यस्यासूत्रितमित्यलं वाक्प्रपञ्चनेनेत्यत्रैव विरम्यते।

संग्रहाद्विप्रकीर्णानामुक्तस्यैवोपपादनात्।
अनुक्तस्यानुपन्यासात्सन्तोषो विदुषां कथम्॥
इमं निर्गुणसन्दर्भं कर्णे कुर्वन्तु सूरयः।
प्रणीय प्रार्थनाभङ्गसंविधानेऽनधीतिनः॥

॥ इति शम्॥

# न्यायवैशेषिकदर्शनविमर्शः

महामहोपाध्यायश्रीकालीपदतर्काचार्यस्य

भाले यस्य सुधानिधिः सुरधुनी धन्या जटाजूटके
कण्ठे कीकसमालिका रजतभा भूतिस्तनौ सर्वतः।
शार्दूलाजिनमम्बरं फणिमयी नद्धा कटीमेखला
तं विश्वेश्वरमाश्रये श्रुतिनुतं ज्ञानप्रदं शङ्करम् ॥
अन्नपूर्णां तथा दुर्गां केदारेशं गणेश्वरम्।
समाश्रयेऽहं भव्याय भव्याञ्च मणिकर्णिकाम् ॥

नमो नमः सदसे। अयि मान्याः सरस्वतीरसास्वादनधन्याः कोविदमूर्द्धन्याः! संस्कृतप्रीतिधनाः सज्जनाः! जगन्मातुः प्रत्यक्षमूर्त्तयो मातरः! अद्य किल सुमहता सौभाग्यसन्तानेन पुण्यसुरधुनीधारापरिप्लावितपादपीठे भगवता विश्वनाथेन शश्वदधिष्ठिते सुपवित्रे वाराणसीक्षेत्रे वाराणसेयसंस्कृतविश्वविद्यालयनियन्त्रिताया दर्शनपरिषदः स्वल्पमपि सेवावसरं लभमानः प्रथमत एव तां प्रति महतीं कृतवेदितामावेद्य श्रद्धानुविद्धेन प्रणत्यादिना भवतः सम्भावयामि।

प्रियाः पारिषदाः! नूनं सुविदितमेवेदं भवताम्, यदिदं भारतवर्षं सुचिरात् प्रभृत्येव प्रशस्तमायतनं विविधविद्यानाम्। यासां किल—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥

इति समासतः समुद्देशः। तत्र न्यायविस्तरपदेन गौतमीयन्यायवैशेषिकन्यायादिवैदिकतन्त्राण्येव समुद्दिष्टानि, न तु बौद्धजैनन्यायाद्यवैदिकतन्त्राण्यपि, तत्र वेदसाहचर्य्येण वैदिकानामेव तन्त्राणां परिग्रहस्य सर्वथौचित्यात्। सर्वास्ता विद्या वेदमनुवर्त्तमानाः साक्षाद्वा परम्परया वा परमपुरुषार्थं मोक्षमेव समुपलक्ष्य प्रावर्त्तन्त। सोऽयमीप्सिततमः परमः पुरुषार्थस्तेषां पुरुषधौरेयाणां, ये सर्वमेव संसारसुखं दुःखानुविद्धं बुध्यमाना निर्वेदं विन्दन्ते, विचिन्वन्ति च निरन्तरं तमुपायं येनोपरतिर्भविता निखिल-

दुःखसङ्घातस्य । तमेवोपायममीषामुपान्ते समुपस्थापयन्ती भगवती श्रुतिर्व्याहरति,—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति ।

निरुक्तश्रुतिवाक्ये 'द्रष्टव्यः श्रोतव्यः' इति तव्यप्रत्ययद्वयी नियमेन तत्तद्धात्वर्थगतामिष्टसाधनतां प्रत्याययति । 'द्रष्टव्यः' इत्यत्रेष्टः परमपुरुषार्थोऽपवर्गः, 'श्रोतव्यो मन्तव्यः' इत्यादौ च तदुपायतयेष्टमात्मदर्शनमेव । अत एव स्मृतिराह,—

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ।। इति ।

निरुक्तस्मृतिवाक्ये 'उत्तमं योगम्' इति पदद्वयस्य आत्मसाक्षात्कारपरत्वात् प्रकृतमननस्यात्मदर्शनसाधनतावगम्यते । एवञ्चात्मनो मननस्यात्मदर्शनद्वारा परमपुरुषार्थमपवर्गं प्रत्युपयोगितया महानुत्कर्षः प्रतीयते ।

तदिदमनुमानापरपर्य्यायं मननं मुख्यतया न्यायवैशेषिकदर्शनयोरेवायतते, तयोरुभयोरेव मननप्रक्रियाया विशेषतः समावेशात् । अत एव गौतमीयन्यायवद् वैशेषिकदर्शनमपि नि + ईयते प्राप्यते विवक्षितस्य सिषाधयिषितस्य वा अर्थस्य सिद्धिरनेनेति व्युत्पत्त्यर्थयोगान्न्यायपदेन व्यवहारमर्हति । दृष्टञ्चैतत् पूर्वोक्तविद्यासमुद्देशश्लोके न्यायविस्तरपदेनैकेनैव तयोरुभयोः समुद्देशेन । तदेवमुभयोरेव न्यायपदवाच्यतया पृथक्तया तावदेकैकस्मिन् बोधयितव्ये गौतमीयन्यायो वैशेषिकन्याय इत्येवं निर्देशः समीचीनो भवति ।

न्यायशब्दस्यार्थविवरणप्रसङ्गेनाह भगवान् वात्स्यायनः,—"प्रमाणैरर्थपरीक्षणं न्यायः । प्रत्यक्षागमाश्रितमनुमानम् । सा अन्वीक्षा । प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्त्तत इत्यान्वीक्षिकी न्यायशास्त्रमि"ति । अत्र प्रमाणैरर्थपरीक्षणमित्यस्यार्थविवरणप्रसङ्गेन प्राहुस्तात्पर्य्यटीकायां वाचस्पतिमिश्राः,—"प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि, तैरर्थस्य लिङ्गस्य परीक्षणं परीक्षा" इति । अनन्तरमपि —"न साक्षात् प्रतिज्ञादयोऽवयवा अर्थपरीक्षायामुपयुज्यन्ते, अपि तु स्वकारणतत्प्रमाणसूचनेन; तस्मात् प्रमाणानामवान्तरव्यापाराः प्रतिज्ञादय इत्युपपन्नं प्रमाणैरर्थपरीक्षणम्" इति । एतावता परार्थानुमानं न्याय इति व्यवतिष्ठते ।

एवं परार्थानुमानवत् प्रतिज्ञादिवाक्यपञ्चकसमुदायोऽपि न्यायशब्देन व्यपदिश्यते । सोऽयं न्यायः प्रत्यक्षादिनिखिलप्रमाणमूलकतया परमन्यायत्वेन व्यपदिष्टो भाष्यकारेण ।

## न्यायवैशेषिकदर्शनविमर्शः

न्यायशास्त्रस्य पक्षप्रतिपक्षभावेन विचारप्रधानतया परार्थानुमानप्राधान्यात् परार्थानुमानस्य च न्यायसाध्यत्वान्न्यायप्रधानमिदं शास्त्रमिति प्राधान्येन व्यपदेश-न्यायाद् युज्यत एवास्य गौतमीयतन्त्रस्य न्यायशास्त्रमिति विशेषतः संज्ञा। अक्षपादा-परनामधेयो मुनिरहल्यापतिर्गौतमो गौतमो वा गौतमीयन्यायशास्त्रस्यास्य प्रथमः प्रवक्ता, न त्वसौ तस्य कर्त्तापि, वेदविद्यावदेव तद् विद्याया नारदसनत्कुमार-संवादादौ वाकोवाक्यपदवेद्यायास्ततपूर्वमपि श्रवणात्। तदुक्तं सनत्कुमारपृष्टेन नारदेन—"ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्, इतिहासपुराणं पञ्चमं वेदानां वेदम्, पित्र्यं राशिं दैवं निधिं वाकोवाक्यम्" इत्यादि।

श्रीमद्भागवतग्रन्थेऽपि भगवतो हृदयाकाशादेवान्वीक्षिक्या उत्पत्तिश्रवणात् तदेव मतमवधृतं भवति। तदुक्तं तत्र,—

आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्तथैव च।
एवं व्याहृतयश्चासन् प्रणवो ह्यस्य दह्रतः॥ इति।

न केवलमेषा न्यायविद्या वेदान्तादिशास्त्रविद्यावदध्यात्मविद्यैव, किन्तु बाह्य-लोकोपकारकारिण्यपीति भाष्यकारादिसकलानुमतम्। यदुक्तं भाष्यकारेण—"इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते, यासां चतुर्थीयमान्वी-क्षिकी विद्या। तस्याः पृथक्प्रस्थानाः संशयादयः पदार्थाः, तेषां पृथग्वचनमन्तरेणा-ध्यात्मविद्यामात्रमियं स्याद्, यथोपनिषदः। तस्मात् संशयादिभिः पदार्थैः पृथक् प्रस्थाप्यते" इति। एतेनैतदत्र प्रतिपद्यते यद् वेदान्तादिविद्याया अध्यात्मविद्यामात्रत्वा-दस्याश्चाध्यात्मविद्यात्ववल्लौकिकोपकारकारितया लोकविद्यात्वस्यापि सत्त्वेन सकल-विद्यापेक्षया समुत्कर्षः। न खल्वन्या काचन विद्या सममेवोभयमुपकुरुते, यथा तावदेषा। तदुक्तं भाष्यकारेण –"सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना—

प्रदीपः सर्वशास्त्राणामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता॥

तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्यं वेदितव्यम्। इह त्वध्यात्म-विद्यायामात्मादिज्ञानं तत्त्वज्ञानं, निःश्रेयसाधिगमोऽपवर्गप्राप्तिरिति।

सन्ति जगति प्रचरद्रूपाणि बहूनि शास्त्राणि न्यायशास्त्रादितराणि, तान्यपि यदा विवाददशायां स्वाननुमतमर्थं निराकृत्य स्वानुमतमर्थं साधयितुमीहन्ते, तदा

दोषलवेनापि निर्मुक्तो हेतुरेव शरणं तेषाम्। न ह्यशिरस्केन प्रतिज्ञावाङ्मात्रेण शक्यं किमपि परस्य व्यवस्थापयितुम्। अत एवाध्यात्मविद्यामूर्द्धन्यमपि वेदान्तसूत्रं निर्मिमाणः कृष्णद्वैपायनो "जन्माद्यस्य यत" इति सूत्रेणोपपत्तिप्रस्य सर्वज्ञं ब्रह्मे त्यर्थस्य दृढीकरणाय शास्त्रयोनित्वादिति, अन्यत्रान्यत्र च परःसहस्रेषु स्थलेषु परःसहस्रार्थान्तर-साधनोद्देशेन ईक्षतेर्नाशब्दं गौणश्चेन्नात्मशब्दादित्यादि परःसहस्रसाधनोपन्यासं कृतवान्। दृश्यन्ते चाद्वैतसिद्धिप्रमुखग्रन्थरत्नेषु भाष्यभामतीप्रभृतिव्याख्यानरत्नेषु च प्राधान्येन न्यायशास्त्रीयरीतिमाश्रित्यैव प्रवर्त्तिताः कथाविभूतयः। तत्र तत्र साधनैरदुष्टैरेव स्वाभिमतानामर्थानां साधनं कर्त्तव्यम्, साधनानामदुष्टताया विज्ञाने च किं वा शरणमस्तु मननशास्त्रादन्यत्? एवमेवोहनीयमन्येषामपि शास्त्राणां मननशास्त्रेण प्रकाशनमर्थ-स्तोमस्य प्रदीपेनेव लोकायतस्य। तदेवं प्रदीपः सर्वशास्त्राणामित्युपपन्नार्थम्।

एवं न्यायविद्या सर्वकर्मणामुपाय इत्यपि सूपपद्यत एव। तथा हि—यत्र यत्र कर्मणि यदा यदा वयं प्रवर्त्तामहे, तदा तत्र तत्र कर्त्तव्यतां निश्चित्यैव वयं प्रवर्त्तामहे। सोऽयं कर्त्तव्यतानिश्चय इदं मत्कर्त्तव्यमित्येवंरूपो मत्कृतिं विनाऽनुत्पद्यमानत्वे सति मदिष्टसाधनत्वादिरूपहेतुज्ञानसाध्यः। स्थलेषु च संख्यातीतेषु साधनविशेषैरेव बल-वदनिष्टाननुबन्धीष्टसाधनतानुमानेनैव प्रवृत्तिः प्राणभृताम्। तदेवं सर्वेष्वेव कर्मसु साक्षाद्वा परम्परया वा विद्यत एव मननविद्याया उपयोग इत्यवितथमेव। किञ्च, न्याय-विद्यापरिशोधितप्रमाणादिभिरेव सर्वविद्याप्रतिपाद्यानि कर्माणि प्रकाश्यन्ते। मूलञ्चैषा न्यायविद्या सामदानादीनां कर्मणां कृषिवाणिज्यादीनाञ्च लोकायतानाम्। इति।

आश्रयः सर्वधर्माणामित्यपि युक्तं विशेषणं न्यायविद्यायाः। तथा ह्युक्तम्—

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ इति।

अनेन सर्वत्रैवार्षे धर्मोपदेशे प्रकृतधर्मपरिज्ञानाय तर्केणानुसन्धानस्य कर्त्तव्यतायाः संसूचनात् तर्कविद्या सर्वधर्माणामाश्रय इति सुव्यक्तमेव। किञ्च, का कथा धर्मान्तरस्य, राजधर्मादिष्वपि व्यवस्थितो महानुपयोगस्तर्कविद्यायाः। तथा हि—अपराधिनां दोषनिर्णयार्थमनपराधानाञ्च निर्दोषत्वावधारणार्थं वादप्रतिवादाद्यर्थं हिता-हितादिविनिर्णयार्थञ्च शास्त्रकृद्भिर्युक्तिशास्त्रशिक्षणमुपदिष्टं राज्ञाम्। तदुक्तं मनुना—

त्रैविद्येभ्यस्त्रयीं विद्याद्दण्डनीतिञ्च शाश्वतीम् ।
आन्वीक्षिकीञ्चात्मविद्यां वार्त्तारम्भांश्च लोकतः ॥

याज्ञवल्क्येनापि—

स्वरन्ध्रगोप्तान्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्त्तायां त्रय्याञ्चैव नराधिपः ॥

गौतमसंहितायां गौतमेनापि—

"राजा सर्वस्येष्टे ब्राह्मणवर्जम् । साधुकारी स्यात् साधुवादी त्रय्यामान्वीक्षिक्याञ्चाभिविनीतः" इति अनाम्नातेषु धर्मेषु संशयनिवृत्त्यर्थमपेक्षितायां 'परिषत् स्याद् दशावरा' इत्यनेनोपदिष्टायां परिषदि हैतुकानां युक्तिशास्त्रप्रज्ञावतामुपनिवेशादपि सिद्धा न्यायविद्याया धर्मोपकारकता । "हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्" इत्यादीनि तर्कविद्याविदामपकर्षातिशयशंसीनि वचनानि तु प्रत्यक्षागमविरुद्धतर्कविद्याकुशलपराणि मन्तव्यानि । वाचां विरुद्धतापरिहाराय "मा हिंस्यात् सर्वा भूतानि" । "काव्यालापांश्च वर्जयेत्" इत्यादौ सामान्यवाचकस्य विशेषपरत्वकल्पनाया दृष्टचरत्वात् प्रकृतेऽपि विशेषार्थपरत्वकल्पनाया अदोषत्वात् ।

गौतमेनाक्षपादेन गदितस्य न्यायतन्त्रस्य सूत्राणि यथाक्रमं संगृह्य पक्षिलस्वामिना वात्स्यायनेनैव प्रथमतस्तदीयं भाष्यरूपं व्याख्यानं व्यधायि, प्रसृतश्चाभूत्तेनैव तदा गौतमीयन्यायसम्प्रदायः ।

अथ गच्छता समयपर्य्यायेण समुपजाते बौद्धाचार्य्याणामत्यूर्जिताभ्युदये महता तदापादितदोषसङ्घातेन सुतरां विप्लवं गमिते गौतमीयन्यायतन्त्रे भारद्वाज उद्द्योतकरो बौद्धबुद्ध्यापादितदोषप्रतानप्रमोषसमर्थं गभीरार्थं भाष्यवार्त्तिकवचनसार्थं निर्वर्त्त्य परमार्त्तिं सञ्जनयामास बौद्धाचार्य्याणाम्, प्रतिष्ठापयामास च पुनः स्वे महिम्नि गौतमीयन्यायतन्त्रं भाष्यञ्च पक्षिलस्वामिनो वात्स्यायनस्य । तदिदं समसूचि वार्त्तिकारम्भे—"कुतार्किकाज्ञाननिवृत्तिहेतुः करिष्यते तस्य मया निबन्धः" इति प्रतिज्ञाश्लोकेन निजनिबन्धनिबन्धनप्रयोजनमभिदधता स्वयं वार्त्तिककारेणैव । वार्त्तिककारस्य वार्त्तिकनिबन्धप्रवर्त्तनानन्तरं न्यायप्रस्थान-व्यवस्थापकतया तस्य सुमहती प्रतिष्ठा समवर्त्तिष्टेति सुबन्धुनिबद्धवासवदत्ताख्यगद्यकाव्यगतेन "न्यायस्थितिमिव उद्द्योतकरस्वरूपाम्" इतिवचनेनैव सुप्रतिपन्नं भवति ।

उद्द्योतकरस्य वार्त्तिकनिबन्धनिबन्धनानन्तरं बौद्धाचार्य्यैस्तत्रापि समारोपितानि दूषणानि, तानि च समुद्धृतानि सर्वतन्त्रस्वतन्त्रमतिना वाचस्पतिमिश्रेण वार्त्तिकतात्पर्य्यटीकां विरचय्येति—

ग्रन्थव्याख्याच्छलेनैव निरस्ताखिलदूषणा।
न्यायवार्त्तिकतात्पर्य्यटीकास्माभिर्विधास्यते॥

इति वाचस्पतिप्रोक्ततात्पर्य्यटीकाप्रतिज्ञापद्यादेव व्यक्तमुपलभ्यते।

निरुक्तानां न्यायसूत्रभाष्यवार्त्तिककाराणां कालस्य युक्तिसमवष्टम्भेन सामान्यतः कथञ्चित् समुन्नेतुं शक्यत्वेऽपि विशेषतो न शक्यते निर्णयः कर्त्तुम्। तात्पर्य्यटीकाकारस्य वाचस्पतेः कालस्तु वाचस्पतिना विरचिते न्यायसूचीनिबन्धे "श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे", इत्यनेन स्वयमेव तेनोदलेखि। ऐतिहासिकगवेषणाया तत्रत्यवत्सरशब्दो वैक्रमसंवत्सरपरो व्यवतिष्ठते।

तस्य वाचस्पतेः प्रायेण समसमय एव केनचित् कारणेन काश्मीराधिपतिना शङ्करवर्मणा कारागारे निरुद्धो जयन्तभट्टो नाम महानैयायिको न्यायसूत्राणां लक्षणांशविवरणप्रसङ्गेन न्यायमञ्जरीं नाम महाग्रन्थं प्रणिनाय। यत्र किल प्रदीप्तप्रज्ञाप्रसूतप्रौढवचनरचनावष्टम्भेन बौद्धसिद्धान्तं विद्राव्य सुव्यवस्थापितो नैयायिकतन्त्रसिद्धान्तसमुत्कर्षः। कारागारे स्थित एवासौ न्यायमञ्जरीं प्रणिनायेति—"राज्ञा तु गह्वरेऽस्मिन्नशब्दके बन्धने विनिहितोऽहम्। ग्रन्थरचनाविनोदादिह हि मया वासरा गमिता॥" इति न्यायमञ्जरीनिबद्धवचनादेव प्रतिपद्यते।

तदुत्तरञ्च दशमे शतके संवत्सराणां नैयायिकवर्य्यः श्रीमदुदयनाचार्य्यस्तात्पर्य्यपरिशुद्धिं नाम टीकामात्मतत्त्वविवेककुसुमाञ्जलिलक्षणावलीग्रन्थांश्च रचयामास। तदनन्तरं निबबन्ध वर्द्धमानोपाध्यायस्तात्पर्य्यपरिशुद्धिप्रकाशाख्यां तात्पर्य्यपरिशुद्धिव्याख्याम्। एवमेव क्रमेण गौतमीयन्यायसम्प्रदायः परमेणाभ्युदयेन वसुन्धरावक्षसि प्रचरद्रूपो गरिष्ठामेव प्रतिष्ठामधितष्ठौ।

न्यायशास्त्रमिदं स्वसंज्ञयैव स्वस्य पक्षप्रतिपक्षभावेन शास्त्रार्थविचारशास्त्रत्वं प्रत्याययति। अत्र किल परमतानां युक्तिद्वारा निरासेन स्वसिद्धान्तव्यवस्थापनस्यैव मुख्यत्वमुपलक्ष्यते। ये च संशयादयः पदार्थास्तत्र विशेषेणोपयुज्यन्ते, त एव तत्र प्राधान्येन निरूपिताः। यैर्जातिनिग्रहस्थानादिभिः परपक्षो निर्जीयते, ते खल्वत्र महता

विस्तरेणोपदर्शिताः। ततः परार्थानुमानपद्धतिरेवात्र समृद्धतया बुद्धिगोचरतामभ्युपैति। परं स्वार्थानुमानादौ यानि पदार्थानां साधर्म्यवैधर्म्यादीनि विशेषतः समपेक्षितानि, तानि नात्र सविशेषमुपदिष्टानि। अतस्तद्विज्ञानाय समपेक्षितमत्र दर्शनान्तरं येन परिपूरणमिदं न्यायदर्शनमापद्येत। तच्च वैशेषिकं शास्त्रम्। तत्र हि साधर्म्यवैधर्म्याभ्यां निखिलपदार्थानां तत्त्वान्युपदिष्टानि। अत एव पदार्थानां मुख्यतया साधर्म्यवैधर्म्यविज्ञानाय स्पृहयतामुन्मुखीकरणाय प्रशस्तपादभाष्यग्रन्थस्य पदार्थधर्मसंग्रह इति संज्ञां प्रकटयामास प्रशस्तपादाचार्य्यः।

कणादो नाम महर्षिस्तस्य वैशेषिकदर्शनस्य सूत्रकारः। तमधिकृत्य प्रोक्तं राजशेखराचार्य्येण, 'इह किल पूर्वमजिह्मब्रह्माभ्यासदूरीकृतप्रमादाय मुनये कणादाय स्वयमीश्वर उलूकरूपधारी प्रत्यक्षीभूय द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणं पदार्थषट्कमुपदिदेश। तदनु स महर्षिर्लोकानुकम्पया षट्पदार्थरहस्यप्रपञ्चनपराणि सूत्राणि रचयाञ्चकार। ईश्वरेण यदुलूकरूपमास्थाय तत्समीपे वैशेषिकतन्त्रसिद्धानां षण्णां पदार्थानामुपदेशः कृतः, तत एवास्य कणादस्य महर्षेरुलूक इति औलूक्य इति वा संज्ञा समजनि। ततस्तदीयमिदं दर्शनम् औलूक्यदर्शनमिति प्रथितं बभूव। अत एव माधवाचार्य्येण सर्वदर्शनसंग्रहप्रजापतिना वैशेषिकदर्शनस्य सैव संज्ञा परिगृहीता स्वग्रन्थे।

केचित्तु—उलूकर्षेरपत्यमौलूक्य इति व्युत्पत्तिबलोपात्तार्थसम्बन्धेन कणादमौलूक्यं तदीयत्वेन च तद्दर्शनमौलूक्यदर्शनं ब्रुवते।

वैशेषिकदर्शनकारस्य कणाद इति संज्ञा पद्मपुराणादिषु समुपलभ्यते। तदुक्तं पद्मपुराणे—

कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्।<br>
गौतमेन तथा न्यायं सांख्यन्तु कपिलेन वै॥ इति।

कणादेति—नामव्युत्पत्तिस्तावत्—कणान् शस्यकणान् अत्तीति कणाद इति। अनेन नाम्ना चास्य सांसारिकविषयसुखनैरपेक्ष्येण वर्त्तनं, शास्त्रतत्त्वविचारेष्वतिनिष्ठा चाभिव्यज्येते।

कणादस्य महर्षेस्तामेव नामव्युत्पत्तिं समर्थयन्नाह न्यायकन्दल्यां श्रीधराचार्य्यः 'तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता संज्ञेति। तदेवं कणादेति नास्य पित्रादिकृता संज्ञेति स्थितम्।

विभिन्नेषु स्थानेषु कणभुक्कणभक्षादिशब्दैरस्य निर्देशदर्शनादपि तदेव प्रतिपद्यते। न खलु गोर्गन्तृपदादिभिर्भवतिव्यपदेशः।

वस्तुतस्तु पद्मपुराणादौ गौतमकपिलेतिरूढ़नामसाहचर्य्येणोपात्तत्वात् कणादेति नामापि रूढं पित्रादिकृतमेव नामेति सम्भाव्यते। यथा तथा वास्तु, तदेव कणादपदमवलम्ब्य वैशेषिकदर्शनं काणाद्दर्शनमित्यपि व्यपदिश्यते।

अस्य दर्शनस्य वैशेषिकदर्शनमिति संज्ञायां बीजन्तु अस्मिन् दर्शने अन्त्यविशेषरूपविलक्षणपदार्थस्य स्वीकरणमेव। यः किल समुद्दिष्टो 'द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानामित्यनेन, 'अन्यत्रान्त्येभ्यो विशेषेभ्य' इत्यनेन च सूत्रग्रन्थे, 'नित्यद्रव्यवृत्तयोऽन्त्या विशेषा' इत्यादि प्रशस्तपादभाष्ये उपस्कारादौ च व्याख्याने। तत्सम्बन्धिदर्शनमेव वैशेषिकं दर्शनमिति।

केचित्तु मन्यन्ते—यथा विगतः शेषो यत्र तद् विशेषं पदार्थनिरूपणादौ निरवशेषमित्यर्थः। विशेषमेव वैशेषिकम्। स्वार्थेष्णिकप्रत्ययः। अयमत्राशयः—अनियतपदार्थवादिकपिलादिभिः षोड़शपदार्थवादिभिर्गौतमादिभिश्च समधिकसंख्यपदार्थनिर्वचनेन येषां तत्त्वानामुपपादनं कृतं, यानि च प्रयोजनान्युपपादितानि, षट्पदार्थवादिनां वैशेषिकाणां षट्पदार्थस्वीकारेणैव तेषां सर्वेषामुपपत्तिर्जातेति लाघवेन निरवशेषवस्तुसङ्कलनेन च महानेवास्य दर्शनस्य संज्ञयानया विशेषो व्यज्यते। इति।

परे तु—विशेषो भेदो विशेषगुणश्च, ताभ्यां संसृष्टं दर्शनं वैशेषिकदर्शनम्। तथा हि—अद्वैतवेदान्तिप्रस्थाने आत्मनो भेदो नाभ्युपेयते, नापि तस्य विशेषगुणवत्त्वम्। इह तु वैशेषिकप्रस्थाने आत्मनो नानात्वं विशेषगुणवत्त्वञ्च। कापिलाः पातञ्जलाश्च आत्मनो नानात्वमङ्गीकुर्वाणा अपि न तस्य विशेषगुणवत्त्वं सहन्ते। तदनया संज्ञया स्वीयदर्शनस्य आत्मभेदपरत्वात्मविशेषगुणवत्त्वपरत्वे सममेव प्रतिपाद्य कणादमहर्षिभिस्तत्तद्दर्शनद्वारा स्वीयदर्शनस्य प्रसक्ता गतार्थत्वशङ्का विघटिता। अन्ये तु साधर्म्यादिद्वारा पदार्थविवरणमस्य विशेषमाहुः।

वस्तुतस्तु अन्त्यविशेषमाश्रित्य वैशेषिकदर्शनसंज्ञा प्रवृत्तेत्येव सम्प्रदायसिद्धः सिद्धान्तः सम्मतो भूयसाम्।

'न वयं षट्पदार्थवादिनो वैशेषिकादि'वदिति सांख्यदर्शनसूत्रे वैशेषिकस्मरणात् कारणान्तराच्च वैशेषिकदर्शनस्यातितरां प्राचीनत्वे न कोऽपि सन्देहं दधीत। परं

कदा कुत्र च वैशेषिकदर्शनमिदं कणादमहर्षेः प्रादुरभूदिति विशेषेण नैव शक्यते निर्धारयितुम् ।

वैशेषिकदर्शने 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयस' मिति पदार्थसमुद्देशसूत्रे भावपदार्थमात्रसमुल्लेखात्, प्रशस्तपादभाष्येऽपि सकलवैशेषिकपदार्थसंग्रहपरे समवायान्तानां भावपदार्थानामेव तत्त्वविवरणादापाततो यद्यप्यभावपदार्थो वैशेषिकदर्शनासम्मत इति प्रतिभाति, तथापि 'संयोगाभावे गुरुत्वात् पतनम्' इत्यादिनानासूत्रेषु नवमाध्यायसत्रस्तोमेषु च वैशेषिकसूत्रकारेणाभावानां विशेषतः प्रतीत्यादेः प्रदर्शनादभावोऽपि वैशेषिकदर्शनसम्मत इत्यविमतम् । अत एव किरणावल्यामुदयनाचार्य्याः—'अभावस्तु स्वरूपवानपि पृथङ्नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वान्न तु तुच्छत्वा'दिति प्राहुः । न्यायकन्दल्याञ्च प्रशस्तपादभाष्यटीकायां श्रीधराचार्य्याः—'अभावस्य पृथगनुपदेशो भावपारतन्त्र्यान्नत्वभावादिति । केचित्तु निपुणधियो वदन्ति यत्—'यथा प्राभाकरमते अभावस्य अधिकरणात्मकत्वेऽपि अभावप्रतीत्याद्युपपत्तिः, भावान्तरमभावो हि कयाचित्तु व्यपेक्षयेति सिद्धान्तेऽपि, तथैव अत्रापि अभावस्य पृथक्पदार्थत्वाभावेऽपि न किञ्चिदनुपपन्नं भवतीति । वस्तुतस्तु अभावस्य पृथक्पदार्थत्वास्वीकारपक्षे घटो नास्ति पटो नास्तीत्यादिप्रतीतेरुपपादनार्थं प्रतीतेः कश्चन विषयोऽङ्गीकर्त्तव्य एव । नह्यविषया प्रतीतिर्नाम । तद् यदि अधिकरणादिरूपो भावस्तद्विषयस्तदा जलादौ गन्धो नास्तीत्यादिप्रतीतेरपलाप आपद्येत, तत्र जलादिरूपाधिकरणानां घ्राणग्राह्यताविरहात्, प्रतियोगी यदिन्द्रियग्राह्यस्तदभावोऽपि तदिन्द्रियग्राह्य इति नियमाद् गन्धाभावस्य इन्द्रियान्तरेण ग्रहीतुमशक्यत्वात् ।

अभावस्य अनन्तभावस्वरूपत्वकल्पनापेक्षया अतिरिक्ताभावकल्पने लाघवमपि विनिगमकं वदन्ति प्राचीनाचार्य्याः ।

तदेवं द्रव्यादिषट्पदार्थैः सममभावमुपादाय सप्तैव पदार्था वैशेषिकतन्त्रानुमता इति सिद्धम् ।

तमेव सप्तपदार्थवादमधिकृत्य सप्तपदार्थोद्देशिना विश्वनाथेन प्रोक्तं कारिकावलीसिद्धान्तमुक्तावल्याम्—'एते च पदार्था वैशेषिकनये प्रसिद्धा नैयायिकानामप्यविरुद्धा' इति ।

न चैवं 'न वयं षट्पदार्थवादिनो वैशेषिकादिव'दिति सांख्यसूत्रस्य, 'धर्मं व्याख्यातुकामस्य षट्पदार्थोपवर्णनम् । सागरं गन्तुकामस्य हिमवद्गमनोपमम् । इत्यादिप्राचीनप्रसिद्धवचनादेश्च अप्रामाण्यापत्तिरिति वाच्यम्; 'षट्पदार्थवादिनः' 'षट्पदार्थोपवर्णन' मित्यादिवचनानां पदार्थत्वेन षण्णामुत्कीर्त्तनपरत्वात्। न हि वैशेषिकसूत्रकारेणाभ्युपगतोऽप्यभावः पदार्थत्वेनोत्कीर्त्तितो वैशेषिकपदार्थसमुद्देशप्रकरण इत्यवितथमेव। तत् कुतस्त्वरां नामास्तु तत्र तत्राप्रामाण्यप्रसङ्गः ?

वैशेषिकं मूलशास्त्रं दशाध्यायी। पृथक्कृतदीयसकलसूत्रपरिग्रहेण विवरणात्मकं तस्य प्राचीनं व्याख्यानत्रयं तथा नवीनं व्याख्यानद्वयम् समुपलभ्यते। प्राचीनव्याख्यानत्रये शङ्करमिश्रेण कृतमुपस्काराख्यमेकम्, यस्य परिष्काराख्या टीका व्यधायि बहुलतन्त्रस्वतन्त्रमतिना पण्डितराजपञ्चाननतर्करत्नेन। द्वितीयं भारद्वाजवृत्त्याख्यम् । इदमद्यत्वे नोपलभ्यते। तृतीयं स्वल्पेनांशेनान्ते खण्डितमनवगतकर्त्तृकं श्रीमदनन्तलालठक्कुरेण संस्कृतं मिथिलागवेषणागारात् प्रकाशं नीतम्। तदिदमपेक्षितालोचनाबहुलं समीचीनमाभाति। नवीनं चतुर्थं व्याख्यानञ्च चन्द्रकान्तीयभाष्यम्। पञ्चमं जयनारायणकृत-कणादसूत्रविवृत्याख्यं रावणकृतं किञ्चिदस्य भाष्यमासीदिति सम्प्रदायसिद्धम्। परं तद्भाष्यं वाङ्मात्रशेषमेव।

विशेषतः प्रतिसूत्रानुपग्रहेण निखिलवैशेषिकसूत्राणामर्थस्य मुख्यतया गौणतया वा संग्रहात्मकं पदार्थधर्मसंग्रहनामधेयमस्ति प्रचरद्रूपमस्य महद् व्याख्यानं, यद्धि प्रशस्तभाष्यमिति नाम्नैव परितो विशेषेण प्रथते। तस्य किल पादनिःशेषतया—

सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

इत्येवं सूत्रितभाष्यलक्षणानाक्रान्तत्वेऽपि भाष्यसदृशविशेषगौरवास्पदत्वादस्ति सुचिरात् प्रभृत्येव भाष्यत्वेन प्रसिद्धिः। केचित् पुनस्तामिमां प्रसिद्धिं प्रकृते कथं कथमपि निरुक्तभाष्यलक्षणं संगमय्यैव समुपपादयितुमीहन्ते।

सुमहती गभीरार्था च न्यायकन्दलीनाम्नी टीका सन्दृब्धा तत्त्वबोधाद्वयसिद्ध्याद्यपरानेकग्रन्थप्रजापतिना गौडीयश्रीधराचार्य्येण। यस्यायं न्यायकन्दल्या अन्तिमे भागे स्वेनैव निबद्धो विस्तृतः परिचयो दृश्यते, यथा—

आसीद् दक्षिणराढायां द्विजानां भूरिकर्मणाम् ।
भूरिसृष्टिरितिग्रामो भूरिश्रेष्ठिजनाश्रयः ।
अम्भोराशेरिवैतस्माद् बभूव क्षितिचन्द्रमाः ।
जगदानन्दकृद् वन्द्यो बृहस्पतिरिव द्विजः ।
तस्माद् विशुद्धगुणरत्नमहासमुद्रो
विद्यालतासमवलम्बनभूरुहोऽभूत् ।
स्वच्छाशयोविविधकीर्त्तिनदीप्रवाह-
प्रस्यन्दनोत्तमवलोबलदेवनामा ।।
तस्याभूद् भूरियशसो विशुद्धकुलसम्भवा ।
अब्बोकेत्यर्चितगुणा गुणिनो गृहमेधिनी ।
सच्छायः स्थूलफलदो बहुशाखो द्विजाश्रयः ।
तस्यां श्रीधर इत्युच्चैरर्थिकल्पद्रुमोऽभवत् ।
असौ विद्याविदग्धानामसूत श्रवणोचिताम् ।
षट्पदार्थहितामेनां रुचिरां न्यायकन्दलीम् ।
अधिकदशोत्तरनवशतशाकाब्दे न्यायकन्दली रचिता ।
श्रीपाण्डुदास-याचितभट्ट-श्रीश्रीधरेणेयम्' ।। । इति ।

सन्ति किल प्रशस्तपादभाष्यस्यान्या अपि सुप्रसिद्धा व्याख्याः । तासु कतिचिद् विभिन्नस्थानेभ्यः प्रकाशं गताः प्रचरद्रूपाः समुपलभ्यन्ते । तत्रैका व्योमशिवाचार्य्येण सन्दब्धा व्योमवती, अपरा तावदुदयनकृता किरणावली, अन्या न्यायलीलावती । एताः प्राचीनतमाः । अन्या अपि पद्मनाभमिश्रकृता सेतुटीका, जगदीशतर्कालङ्कारकृता भाष्यसूक्तिटीका, मल्लिनाथसूरिरचिता भाष्यनिकषटीका, शङ्करमिश्रकृतं कणादरहस्यञ्चेति । तासु भाष्यनिकषटीकां विना सर्वा एव समुपलभ्यन्ते । तासु सेतुटीका व्योमवती टीका चातिगभीरार्था विमर्शबहुला च । जगदीशस्य सूक्तिटीका द्रव्यग्रन्थमात्रालम्बना । द्रव्यग्रन्थाद् वहिरंशस्य सूक्तिटीकायाः क्वाप्यनुपलम्भादंशान्तरस्य टीका जगदीशेन न व्यधायीत्येव विशेषविदां सिद्धान्तः । सैषा सूक्तिटीका नवीनन्यायरीत्यवष्टम्भेन लक्षणाद्यर्थविवरणमयी प्रसन्नपदा नातिविस्तरा च । यदि द्रव्यग्रन्थस्येव भागान्तरस्यापि प्रशस्तपाद-

भाष्यान्तर्गतस्य जगदीशतर्कालङ्कारकृतसूक्तिटीका समलप्स्यत तदा वैशेषिकतन्त्र-महारण्ये सञ्चरतां महानुपकारः समपत्स्यत। एवं हि नाम गच्छता कालपर्य्यायेण समुद्भूता भूयांसः प्रकरणग्रन्था अपि वैशेषिकदर्शनस्य। येन परित एव प्रावर्द्धत प्रकामं प्रतिष्ठा वैशेषिकदर्शनसम्प्रदाये।

एवमेवोत्तरोत्तरं महता गौरवेण परितः प्रतिष्ठां गतेऽपि न्यायवैशेषिकसम्प्रदायद्वये न्यायवैशेषिकतन्त्रोपक्षिप्तानां पदार्थादीनामतिसूक्ष्मया समीक्षया परीक्षणेन प्रति-पक्षपक्षप्रतिक्षेपाय त्रयोदशशतके शकसंवत्सराणां मिथिलावनीदिनमणिर्गङ्गेशो-पाध्यायो नाम विदामग्रणीः 'प्रत्यक्षानुमानोपमानागमाः प्रमाणानी' ति गौतमतन्त्र-सूत्रमेव प्राधान्येनाधिकृत्य प्रत्यक्षानुमानोपमानशब्दखण्डभेदेन चतुष्खण्डात्मकं तत्त्व-चिन्तामणिग्रन्थं प्रणिनाय। तत्र च प्राचीनन्यायवैशेषिकतन्त्रविलक्षणशास्त्रार्थ-विचारशैल्यादिप्रवर्त्तनेन तस्य नव्यन्यायसंज्ञा प्रसिद्धिमगात्।

ये तु वदन्ति,—गङ्गेशप्रवर्त्तितस्य विलक्षणशास्त्रस्य प्रतियोगित्वावच्छेदक-त्वादिनवीनपारिभाषिकशब्दसम्भारोपकरणशालित्वमेव नव्यन्यायसंज्ञाबीजमिति, न तेषां समीचीनः पक्षः, प्रतियोगित्वावच्छेदकत्वादिशब्दसम्भाररूपोपकरण-वत्त्वस्य गङ्गेशपूर्ववर्त्ति—प्राचीनन्यायाचार्य्योदयनादिकृतग्रन्थेष्वपि भूयस्त्वेन दृश्य-मानत्वादस्य शास्त्रस्य तद्ग्रन्थेभ्यस्तत्कृतविशेषाभावात्। तथा हि—आदौ तावत् 'स हि पूर्वेषामपि गुरुः कालेनानवच्छेदादि'ति प्राचीनतमे पातञ्जलदर्शनसूत्रे कालि-कावच्छेदकताया उपादानं दृश्यते। उदयनकृतन्यायकुसुमाञ्जलिग्रन्थेऽपि बहुत्रैव प्रतियोगित्वावच्छेदकत्वाद्युपादानं दृश्यते। यथा—'प्रतियोगिनमुत्सारयतस्तस्यान्य—प्रयुक्तः सन्निधिः; 'प्रतियोगिमात्रनिरूपणीयो ह्यभावः'। 'प्रतियोगिस्मरण एवाभावपरि-च्छेदात्'। 'प्रतियोगिनि साधर्म्याद् व्यापाराव्यवधानतः। अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात्'। 'यस्यावच्छेदकज्ञानं न व्यञ्जकम्।' प्रतियोग्यनवच्छिन्नस्य तस्य निरूपयितुमशक्यत्वात्'। 'अवच्छेदकतया प्रागवस्थावदवभासनात्' इत्यादि। किं वा बहुना जल्पितेन—उदयनाचार्य्यस्तत्रैव कुसुमाञ्जलिग्रन्थे 'अभावविरहात्मत्वं वस्तुनः प्रतियोगिते'त्यनेन यत् प्रतियोगितालक्षणमुपन्यस्तवान्, तदेवावलम्ब्य ततः सुदीर्घकालोत्तरवर्त्तिगङ्गेशोपाध्यायादिभिः पूर्वपक्षग्रन्थादौ शास्त्रार्था उपनिबद्धा इत्य-वदातमेव। यदि तु भूयस्तया तादृशप्रतियोगित्वावच्छेदकत्वादिशब्दपरिग्रहेण नव्यनैया-

यिककोटौ तत्रभवानुदयनाचार्य्योऽपि सन्निवेश्यते तद्ग्रन्थेषु प्राचीनविलक्षणविचार-पद्धतेरप्युपलम्भात्तदा नास्ति तत्रास्माकमतिगुर्वी विमतिरिति ।

वस्तुतस्तु गङ्गेश एव नवीनन्यायसम्प्रदायप्रवर्त्तक इत्यत्रैव निभरः प्रायेण समेषाम् । तद् वयमपि तमेव नव्यन्यायसम्प्रदायप्रवर्त्तकं ब्रूमः ।

गङ्गेशात् तत्त्वचिन्तामणेः प्रवृत्त्यनन्तरं सुदीर्घं कालं व्याप्य मिथिलामण्डलमेव परिग्रहस्थानमासीन्नव्यन्यायविद्यायाः । एकदा पक्षधरोपनामा जयदेवमिश्रः परमाचार्य्यः समवर्त्तिष्ट मिथिलामण्डले नवीनन्यायविद्यायाः । स हि तत्त्वचिन्तामणिग्रन्थस्यालोकाख्यां विलक्षणां व्याख्यामकृत, यामंशतः परिषद्विशेषेण प्रकाशितस्वरूपामर्वाचीनटीकाकृद्भिरपि स्थाने स्थाने समुदाहृतां परिपश्यामः । नवद्वीपप्रदीपभूतो वासुदेवसार्वभौमो नाम तस्मात् पक्षधरमिश्रान्नव्यन्यायशास्त्रमधिजगे । समवसिताध्ययनश्चासौ स्वदेशे प्रतिनिवृत्य तत्त्वचिन्तामणिग्रन्थस्य सार्वभौमनिरुक्तिं नाम टीकां प्रचक्रे, यस्या वस्तुविशेषा अनन्तरजातासु टीकासु समुद्धृताः स्थाने स्थाने समुपलभ्यन्ते ।

अस्त्येष प्रवादो यत् तदानीन्तना मैथिला नव्यनैयायिकाः स्वदेशगौरवभङ्गभयेन स्वविद्यार्थिनामपि देशान्तरवास्तव्यानां लिपिद्वारा तत्त्वचिन्तामण्यादिग्रन्थसंग्रहं कथमपि नान्वमन्यन्त । तत एव वासुदेवसार्वभौमः प्रच्छन्नतया सर्वमेव तत्त्वचिन्तामणिग्रन्थं यथाक्रमं संस्कारगतं विधाय वङ्गदेशं निनायेति । केचित्तु सार्वभौमान्तेवासिनो विशेषविद्यापरिग्रहाय परमगुरुं पक्षधरमिश्रमाश्रितस्य रघुनाथशिरोमणेरेव तं कृत्यविशेषं वर्णयन्ति । अथवा यः कश्चिदास्तां सत्कृत्यकारो ततः प्रभृति नवद्वीपभूमिरेवाभूद् विशेषपरिग्रहस्थानं नव्यन्यायविद्याया इत्यवदातमेव । परन्तु केचनाधुनिकास्तत्त्वगवेषकाः सर्वमुक्तं प्रवादमप्रमाणं प्रतिपादयन्ति । तदिदं सर्वं प्रत्नतात्त्विका एव विचारयन्तु ।

रघुनाथशिरोमणिरपि सर्वस्य तत्त्वाचिन्तामणिग्रन्थस्य दीधितिनाम्नीमल्पाक्षरामतिप्रौढ़ां टीकां व्यधत्त । तामल्पाक्षरामतिगहनां स्वल्पधीदुरवगाहां पर्य्यवेक्ष्य सकललोकोपचिकीर्षया भवानन्दसिद्धान्तवागीशजगदीशतर्कालङ्कार-गदाधर-भट्टाचार्य्यप्रभृतयो महामनीषिणो दीधितिप्रकाशादिसमाख्यासमाख्यातानि प्रख्यातान्याचचक्षिरे तत्त्वचिन्तामणिदीधितिव्याख्यानानि । मथुरानाथतर्कवागीशप्रमुखाः

परे च केचन प्रसन्नपदानि सविस्तराणि तत्त्वचिन्तामणिव्याख्यानान्येव साक्षात्तत्त्वचिन्तामणिरहस्यादिनाम्ना रचयामासुः, येष्वद्य समासाद्यते मथुरानाथकृतं रहस्याख्यव्याख्यानमेव विशेषेण। तेषां तेषां मूलव्याख्यानानां दीधितिव्याख्यानानाञ्च त्रिलक्षणातिसूक्ष्मतत्त्वपरीक्षादिसमीक्षणेन निरतिशयं विस्मयमाविवेश निःशेष एव समाजो विद्याद्रविणवनीयकानामसमशेमुषीजुषाञ्च विद्यावृद्धानाम्। ततः प्रभृति च मिथिलागता नव्यन्यायविद्यागुरुता नवद्वीपवसुधां प्राधान्येनाध्यासाञ्चक्रे। एवं क्रमेण सूक्ष्मतमतत्त्वपर्य्यवेक्षणदक्षताया उत्तरोत्तरमत्यभ्युदयेन परितः समुद्भूतानि परःशतान्युपव्याख्यानानि परःशताश्च नव्यन्यायप्रकरणग्रन्थाः, येषु भूयसामद्यत्वेऽप्यध्ययनाध्यापनयोर्भूयानेव प्रचारः समीक्ष्यते। इदञ्चात्र वैलक्षण्यमुन्नेयं नव्यन्यायविद्यायाः, यदेतस्याः समुद्भवानन्तरं शास्त्रान्तरेष्वपि ये ग्रन्थाः शास्त्रार्थविवादा वा समजायन्त, तेषु सर्वत्रैव प्रायेण ग्रन्थकृतां तथा विवदमानानामिच्छया वा अनिच्छया वा नव्यन्यायविचारपद्धतिः प्रभूतमेव प्रभावं प्रातनिष्ट।

न्यायतन्त्रं नाम समानं तन्त्रं वैशेषिकतन्त्रस्य। पदार्थाभ्युपगमे द्वयोः साम्यात्। तदुक्तं सिद्धान्तमुक्तावल्यां विश्वनाथेन—'एते च पदार्था वैशेषिकनये प्रसिद्धा नैयायिकानामप्यविरुद्धा' इति।

ननु समानत्वं हि भेदगर्भम्। तदेकतन्त्रप्रसिद्धपदार्थानामपरतन्त्राविरुद्धत्वे तयोरभेद एव समापतति, तत् कुतस्तयोर्भेदोपपत्तिः? कुतस्तराञ्च मिथो भेदगर्भं समानत्वमिति चेत्; सत्यप्येकानुमतानां पदार्थानामन्यत्राभ्युपगमे विरुद्धानामपि सिद्धान्तविशेषाणां परिग्रहेणोभयोरैक्यायोगादिति ग्रहणीयम्। तत्र न्यायवैशेषिकतन्त्रयोर्मिथो भेदोपपादकाः केचन सिद्धान्तभेदाः समुद्दिश्यन्ते। यथा—नैयायिकनये समवायो नाम सम्बन्धभूतः पदार्थः प्रत्यक्षेण परिगृह्यते। तदुक्तम्—'क्रियां जातिं योग्यवृत्तिं समवायञ्च तादृशम्। गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयो'रिति विश्वनाथेन कारिकावल्याम्। सोऽयं वैशेषिकनये प्रत्यक्षगोचरतां नोपैति। तत एव सिद्धान्तमुक्तावल्यां तेनैव विश्वनाथेन समवायरूपसम्बन्धसिद्ध्यर्थं 'गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानं प्रमाणं प्रादर्शि। अन्यथा स्वीये न्यायमते तस्य प्रत्यक्षत्वस्य स्वयमेव व्याख्यानेन

प्रत्यक्षप्रमाणेनैव साधयितुं शक्यत्वात्—तत्सिद्ध्यर्थमनुमानप्रमाणप्रदर्शनस्य वैफल्यप्रसङ्गात्। अतो वैशेषिकमतसाधारण्यसम्पादनायैवानुमानप्रदर्शनमिति वक्तव्यम्।

तत्र न्यायवैशेषिकयोर्मतभेदे बीजमिदं यथा—वैशेषिकसिद्धान्ते सम्बन्धप्रत्यक्षं प्रति यावदाश्रयप्रत्यक्षं कारणम्। एवञ्च समवायस्यैकत्वेन एकदा भाविभूतनिखिलाश्रयव्यक्तीनां प्रत्यक्षायोग्याश्रयव्यक्तीनाञ्च प्रत्यक्षासम्भवेन समवायप्रत्यक्षासम्भवः। अत एव तन्मते समवायो न प्रत्यक्ष इत्येव सिद्धान्तः।

न्यायमते तु सम्बन्धप्रत्यक्षत्वं न यावदाश्रयप्रत्यक्षकार्य्यतावच्छेदकम्, किन्तु संयोगादिप्रत्यक्षत्वम्, सम्बन्धत्वस्यानुगतस्य निर्वक्तुमशक्यत्वात् सांसर्गिकविषयतावत्त्वरूपस्य तस्य कथञ्चिदनुगतत्वसम्भवेऽपि तादृशसम्बन्धत्वस्य घटत्वादिसाधारणतया तत्प्रत्यक्षे व्यभिचारापत्तेरित्यादियुक्तिजालेन न समवायस्य प्रत्यक्षत्वानुपपत्तिरिति।

न्यायवैशेषिकतन्त्रयोरपरं वैषम्यं यथा—नैयायिकमते 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी'ति सूत्रेण चत्वारि पृथक् प्रमाणानि प्रतिपादितानि। तानि तथैव समुपादाय प्रवृत्तिश्चतुष्खण्डात्मकतत्त्वचिन्तामणिप्रमुखस्य नव्यन्यायतन्त्रस्यापि। शब्दस्योपमानस्य च पृथक् प्रामाण्यं प्राचीनेषु नवीनेषु च न्यायग्रन्थेषु लिङ्गज्ञानादिकमनपेक्ष्यैव शाब्दं ज्ञानं शब्देभ्यः प्रवर्त्तत इत्याद्यनुभवं युक्तिञ्चोपन्यस्योपपादितं स्वमते नैयायिकैः।

वैशेषिकदर्शने तु सूत्रकारा अनुमानप्रमाणप्रदर्शनानन्तरं 'एतेन शाब्दं व्याख्यात' मित्यादिसूत्रसन्तानेन शब्दप्रमाणमुपमानप्रमाणञ्च अनुमानप्रमाण एवान्तर्भावयामासुः। यदाहुस्तत्र स्पष्टमुपस्कारकाराः—'शाब्दं शब्दकरणकं ज्ञानमिदमिति यद् नैयायिकादीनामभिमतं तदप्येतेन लैङ्गिकत्वेन लिङ्गप्रभवत्वेनैव व्याख्यातम्। यथा व्याप्तिपक्षधर्मताप्रतिसन्धानापेक्षं लैङ्गिकं तथा शाब्दमपि। तथा हि एते पदार्था मिथः संसर्गवन्त आकाङ्क्षादिमद्भिः पदैः स्मारितत्वाद् गामभ्याजेति पदार्थसार्थवत्। तत्र हि आकाङ्क्षादिमत्पदकदम्बकस्मारितत्वं पदार्थानां मिथः संसर्गवत्त्वव्याप्यं गृहीत्वैव संसर्गवत्त्वमनुमिनोति किं कल्पनीयप्रमाणाभावेन शब्देनेति।

एवमुपमानमप्यनुमानान्तर्भूतमित्युपपादयितुमाहुरुपस्कारकारा यथा—गवयशब्दो गवयवाचकोऽसति वृत्त्यन्तरे शिष्टैस्तत्र प्रयुज्यमानत्वात्, असति वृत्त्यन्तरे यः शब्दो यत्र शिष्टैः प्रयुज्यते स तस्य वाचकः, यथा गोशब्दो गोरित्यनुमाना-

देव गवयसंज्ञां परिच्छिनत्ति। तर्कश्च यस्त्वयोपमानसहकारी वाच्यः, स वरमनुमाने क्लृप्तप्रमाणभावेऽस्तु, किं कल्पनीयप्रमाणभावेनोपमानेनेति। एवमेव प्रशस्तपादभाष्यकिरणावली-न्यायकन्दली-शब्दशक्तिप्रकाशिका-कारिकावली-सिद्धान्तमुक्तावलीप्रभृतिग्रन्थेष्वपि सन्त्येतदर्थसाधनपरा वैखर्यो विविधाः, तास्तु विस्तरभिया नोदाह्रियन्ते।

अस्त्यन्यदपि महद् वैषम्यमनयोः सिद्धान्ते। तद् यथा—वैशेषिकाः पीलुपाकवादिनः। नैयायिकाश्च पिठरपाकवादिनः। तत्र पीलुपाकवादिनो वैशेषिकास्तावत्—अवयविनावष्टब्धेष्ववयवेषु पाको न सम्भवति, परन्तु वह्निसंयोगादवयविषु विनष्टेषु आरम्भकसंयोगरहितेषु परमाणुष्वेव पाको जायते। पुनः पक्वपरमाणुसंयोगाद् द्व्यणुकादिक्रमेण महावयविपर्यन्तोत्पत्तिः। तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति विवृण्वन्ति। तदेतद् बहुलं विचार्य्योपपादितं 'कारणगुणपूर्वकाः पृथिव्यां पाकजा' इति वैशेषिकसूत्रव्याख्यामुपस्कारकारैः ? तत्रत्या लक्षणादिप्रक्रियोपस्कारसिद्धान्त-मुक्तावल्यादिष्वनुसन्धेया।

पिठरपाकवादिनो नैयायिकास्तु द्व्यणुकाद्यवयविन्यपि पाको भवति। अवयविनां सच्छिद्रत्वाद् वह्नेः सूक्ष्मावयवैः संयुक्तेषु सत्स्वन्तः प्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाकोपपत्तेरिति प्राहुः। वैशेषिकमतापेक्षया नैयायिकमतस्थास्य समुत्कर्षस्तावदेष दृश्यते यद् वैशेषिकमते पूर्वव्यूहनाश-व्यूहान्तरोत्पत्तिस्वीकारेणानन्तद्वितीयात्रय्यादिकल्पनागौरवम्, नैयायिकमते च तदकल्पनाप्रयुक्तं महालाघवम्, पाकानन्तरं सोऽयं घट इत्यादिप्रत्यभिज्ञाभिलापवाक्येषु स इत्यस्य तज्जातीयेत्यौपचारिकार्थपरिकल्पना मूलगौरवाभावादिश्च।

केचित् पुनर्मुक्तिदशापन्नस्य जीवस्य सुखानुभवसत्त्वासत्त्वे समधिकृत्यापि न्यायवैशेषिकमतयोर्वैषम्यमुपपादयन्ति। ते वदन्ति यद् नैयायिकमते मुक्तिदशायां सुखमनुभूयते। वैशेषिकमते मुक्तिदशायां सुखानुभूतिर्नास्तीति तत एव सुखप्रियस्य कस्यचन—'वरं वृन्दावने रम्ये शृगालत्वं व्रजाम्यहम्। न तु वैशेषिकीं मुक्तिं प्रार्थयामि कदाचनेत्येवं वैशेषिकमुक्त्यधिक्षेपः। निरुक्तमतवादिनः शङ्करविजयादिग्रन्थमपि प्रमाणतया स्वमतस्थापनार्थमवलम्बन्ते। तथा हि शङ्करविजयग्रन्थादवगम्यते—कदाचित् कश्चन दृप्तो नैयायिकः शङ्कराचार्य्यमाह—यदि भोः सर्वज्ञ एवासि, तदा

कथय—वैशेषिकमतसिद्धमुक्तिदशापेक्षया नैयायिकमतसिद्धमुक्तिदशायां को नाम विशेष इति। अथ तदुत्तरमभिदधानो भगवान् शङ्कराचार्य्यः प्राह—

अत्यन्तनाशे गुणसंहतेर्या स्थितिर्नभोवत् कणभक्षपक्षे।
मुक्तिस्त्वदीये चरणाक्षपक्षे सानन्दसंवित् सहिता विमुक्तिः।। इति।

एतेन वैशेषिकमते अशेषविशेषगुणोच्छेदे सति आत्मनः स्वरूपेणावस्थितिर्मुक्तिः ? तद्दशायामात्मन आनन्दानुभवो नास्तीति च प्रतिपद्यते। न्यायमते मुक्तिदशायां सुखानुभूतिरस्तीति; अतो वैशेषिकमुक्त्यपेक्षया नैयायिकमुक्तिरतिविलक्षणेति शङ्करस्यात्राकूतंप्रतीयते। एतदेव मतं श्रीशङ्कराचार्यैकृतित्वेन प्रसिद्धे सर्वदर्शनसिद्धान्तसंग्रहेऽपि निबद्धमुपलभ्यते। न्यायसारकारो भासर्वज्ञोऽपि नैयायिकमतसिद्धमुक्तिमानन्दानुभूतिसहितामेव सूचयामास।

परन्तु मतस्यास्य न्यायदर्शनीयापवर्गभाष्येण निराकरणान्न शक्यते न्यायसिद्धान्तत्वेन परिग्रहः कर्त्तुम्। उक्तं हि तत्र—'नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यते, तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते। तेषां प्रमाणाभावादनुपपत्ति' रिति। न्यायादिविविधतन्त्रनिष्णातमतिः श्रीहर्षो नाम महाकविरपि नैषधीयचरितमहाकाव्ये गौतमन्यायतन्त्रसिद्धमुक्तेः पाषाणतुल्यतामुद्घोष्य तस्याः सुखानुभूतिरहितत्वमेव द्रढ़याञ्चकार। 'अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशत' इत्यादिश्रुतिवाक्यैरपि मुक्तेः सुखरहितत्वस्य प्रवेदनादनुपपन्न एव वैदिकदर्शनमूर्द्धन्यस्य न्यायदर्शनस्य मुक्तौ सुखसहितत्वस्वीकारः। असति सुखे च न तस्य साक्षात्कारः।

यथा तथा वा भवतु; वयमत्र मन्यामहे—शङ्करविजयग्रन्थे सर्वदर्शनसिद्धान्तसंग्रहे तथा न्यायसारादौ नैयायिकमुक्तेः सुखानुभूतिसहितत्वसूचनात् कदाचिन्नैयायिकैकदेशिनामिदं मतमासीदिति शक्यमुन्नेतुम्। शक्यञ्च कथञ्चित् तेनापि तदिदं वैषम्यमुपपादयितुम।

केचिच्च न्यायवैशेषिकदर्शनयोरन्यथापि वैषम्यं वर्णयन्ति; तद् यथा—न्यायमते पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वमसत्प्रतिपक्षितत्वमबाधितत्वञ्चेति पञ्चरूपोपपन्नमेव लिङ्गमनुमापकम्। यथा पर्वतो वह्निमान् धूमादित्यादौ धूमादिः। स हि पक्षे पर्वतादौ सपक्षे च महानसादौ वर्त्तमानो व्यावर्त्तते ह्रदादिभ्यः सर्वेभ्यो विपक्षेभ्यः परिशून्य-

श्चासौ बाधसत्प्रतिपक्षदोषाभ्यामिति। तेषाञ्च पञ्चानां रूपाणामेकैकं विरहं पृथक्कृतया समादाय न्यायमते हेत्वाभासा अपि पञ्चधैव असिद्धविरुद्धानैकान्तिकबाधितसत्-प्रतिपक्षितभेदात्। तदुक्तं न्यायसूत्रे भगवता गौतमेन-सव्यभिचारविरुद्धप्रकरण-समसाध्यसमातीतकाला हेत्वाभासा' इति। तत्रैवोक्तं वृत्तिकृता विश्वनाथेन—'तथा हि, पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षत्वोपपन्नो हेतुर्गमकः। तद्वदाभा-सत इत्यत्र वत्यर्थस्तद्भिन्नत्वे सति तद्धर्मवत्त्वम्। तथा च पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमान इति फलितार्थ' इति। अन्यत्रापि बहुत्रैव पञ्चरूपोपपन्नस्यैव हेतोर्गमकता हेत्वाभासानाञ्च पञ्चविधतैव न्यायदर्शनग्रन्थे व्याख्याता।

वैशेषिकनये तु 'अप्रसिद्धोऽनपदेशोऽसन्सन्दिग्धश्चानपदेश' इति सूत्रे अप्रसिद्धपदेनासिद्धस्य, असत्पदेन विरुद्धस्य, सन्दिग्धपदेन चानैकान्तिकस्य सूचनात् त्रय एवासिद्धविरुद्धानैकान्तिका हेत्वाभासा इति सिद्धान्तो लभ्यते। प्रशस्तपादभाष्ये च—'लिङ्गं पुनः—यत्—

अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्।
विपरीतमतो यत् स्यादेकेन द्वितयेन वा। विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्॥

इत्यत्र प्रथमश्लोकेन पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वानां त्रयाणामेव रूपाणां गमकतायाः प्रतिपादनात्, द्वितीयश्लोकेन विपरीतमित्यादिना च तत्तद्रूपविरहवतामेव हेत्वाभासत्वस्य कथनात्, पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपाणि त्रीण्येवेत्र रूपाणि हेतोर्गमकतौपयिकानीति, तदनुसारेणैव हेत्वाभासा अपि विरुद्धासिद्धानैकान्तिकास्त्रय एवेति च प्रतिपन्नं भवति। अत एवोक्तमुपस्कारकारेण—'पक्षे साध्यसदसत्त्व-कोटिकसंशयजनको हेत्वाभासः सव्यभिचारः, पक्षे साध्याभावनिश्चयफलको हेत्वाभासो विरुद्धः, व्याप्तिपक्षधर्मताप्रमितिविरहितोऽसिद्धः। बाधसत्प्रतिपक्षौ तु काश्यपीये मते न स्वतन्त्रौ। तत्र बाध आश्रयासिद्धावनैकान्तिके वा पर्य्यवस्यति। तदुक्तम्—'बाधायामपक्षधर्मो हेतुरनैकान्तिको वा' इति सत्प्रतिपक्षोऽप्यन्यतरत्र व्याप्त्यादि-संशयमापादयन् अनैकान्तिकादावेव पर्य्यवस्यति' इति।

प्रशस्तपादभाष्येऽपि 'अतिव्यापकमिदं लक्षणम्; प्रकरणसमे कालात्ययापदिष्टे च भावादिति चेदत्राह कश्चित्—प्रकरणसमकालात्ययापदिष्टावनैकान्तिक एवान्त-र्भवतः। सन्दिग्धविपक्षे साध्यधर्मिणि प्रकरणसमस्य भावात्, निश्चितविपक्षे च

कालात्ययापदिष्टस्य वृत्ते'रिति। तत् सिद्धान्तमिममुपजीव्य शक्यमेतन्मूलकं दर्शनद्वयस्य वैषम्यमुपपादयितुम्।

वस्तुतस्तु सूत्रादिभ्य आपाततस्तथा त्रैरूप्यस्यैव हेतोर्गमकताया असिद्धविरुद्धानैकान्तिकानां त्रयाणामेव च हेत्वाभासताया लाभेऽपि वृत्तिकारादिभिरत्रापि दर्शने सिद्धान्ते निरुक्तपाञ्चरूप्यस्यैव गमकतौपयिकतायाः पञ्चानामेव च विरुद्धासिद्धानैकान्तिकबाधितसत्प्रतिपक्षितानां हेत्वाभासताया अभ्युपगमेन न निरुक्तदिशा दर्शनद्वयस्य वैषम्यं शक्यमुपवर्णयितुम्। तदुक्तमुपस्कार एव—वृत्तिकारस्तु "अप्रसिद्धोऽनपदेशोऽसन्सन्दिग्धश्चानपदेश" इति सूत्रस्थचकारस्य बाधसत्प्रतिपक्षसमुच्चयार्थतामाह। तेन सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः पञ्च हेत्वाभासा इति गौतमीयमतमेवानुधावति। सूत्रकाराणान्तु त्रयो हेत्वाभासा इत्यत्रैव निर्भर' इति। तत्रैव उपस्कारकारस्य—'परन्तु विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीदित्याद्यभिधानात् सूत्रकारस्वरसो हेत्वाभासत्रित्वे चकारस्तु उक्तसमुच्चयार्थं इति तत्त्वमिति वचनेनापि वैशेषिकसूत्रकारस्य हेत्वाभासत्रयाभ्युपगन्तृत्वस्य तथा व्योमवत्यां व्योमशिवाचार्य्येण—नन्वेवमपि प्रकरणसमकालात्ययापदिष्टयोस्त्रैलक्षण्ययोपपत्तेर्गमकत्वप्रसङ्गः,...अतश्चानयोर्व्यवच्छेदार्थमबाधितविषयत्वमसत्प्रतिपक्षितत्वञ्च समानतन्त्रगतमभ्यूह्यम्। चकारस्यानुक्तसमुच्चयार्थत्वा'दिति ग्रन्थेन हेत्वाभासपञ्चकाभ्युपगन्तृत्वस्य प्रतिपादनाद् द्वयमेव मतभेदेन स्वीकार्य्यम्।

न्यायवैशेषिकदर्शनयोर्द्वयोरेव निर्विशेषेण परमाणुकारणतावादो व्यवस्थितः। सोऽयमारम्भवाद इत्यपि प्रथते। तदीयप्रक्रिया च प्रशस्तपादभाष्यसृष्टिसंहारप्रकरणादौ सविशेषं वर्णितोपलभ्यते। एष परमाणुकारणतावादो वेदमेवाभिनिविशते। तदिदमुपपादितं कुसुमाञ्जलिग्रन्थे—'विश्वतश्चक्षुः' इत्यादिश्वेताश्वतरमन्त्रमाश्रित्योदयनाचार्य्येण। उक्तं हि तत्र—'षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वम्, ते हि गतिशीलत्वात् पतत्त्रव्यपदेशाः पतन्तीति। सन्धमति सञ्जनयन्निति च व्यवहितोपसर्गसम्बन्धः। तेन संयोजयति समुत्पादयन्नित्यर्थः। द्यावा इत्यूर्द्ध्वसप्तलोकोपलक्षणम्। भूमीत्यधस्तात्। एक इत्यनादितेति।

अत्रेदमवधेयं यत् श्वेताश्वतरोपनिषदि यैषा—

'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्।
सम्बाहुभ्यां धमति सम्पतत्त्रैर्द्यावाभूमी जनयन् देव एकः॥ इति

श्रुतिरस्ति, तया न्यायवैशेषिकोपगृहीतस्य परमाणुकारणतावादस्य वैदिकत्वमुपपद्यते।

तथा हि—निरुक्तश्रौतमन्त्रघटकपतत्त्रशब्दस्यैवार्थः परमाणुः, परमाणोर्गतिशीलत्वात् पतत्त्रशब्दस्य च गत्यर्थक 'पत्' धातुनिष्पन्नत्वात्। एवञ्च विश्वतश्चक्षुरित्यादिविशेषणपदानामुपलक्षणपरतया सर्वज्ञः सर्ववक्ता सर्वसहकारी व्यापकोऽनादिर्देवः परमेश्वरः पतत्त्रशब्दप्रतिपाद्यान् परमाणूनधिष्ठाय तेषां मिथः संयोगसाधनेन द्व्यणुकादिक्रमेण जगदिदमुत्पादयतीत्येष श्रुतेरस्या निर्गलितार्थः। ततश्च श्रुतेरस्याः परमाणुकारणतावादोपोद्बलनं स्पष्टमेव।

न्यायदर्शनं वैशेषिकदर्शनञ्च वेदप्रामाण्याभ्युपगन्तृतया आस्तिकदर्शनकोटावेव निविशते। आस्तिक्यस्य वेदाभ्युपगन्तृत्वलक्षणत्वात्। तदुक्तं भगवता मनुमहाराजेन-'नास्तिको वेदनिन्दक' इति। अनेन वेदनिन्दकस्य नास्तिकत्वोक्तेर्वेदप्रामाण्याभ्युपगन्तृत्वमास्तिकत्वमिति संसूच्यते। तदेवं 'तद्वचनादाम्नायस्य प्रामाण्य'मिति सूत्रादिग्रन्थैर्वैशेषिकदर्शने, 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' 'न कर्मकर्तृसाधनवैगुण्यात्' इत्यादिसूत्रप्रभृतिग्रन्थैश्च न्यायतन्त्रे वेदप्रामाण्यस्याभ्युपगमेन तद्दर्शनद्वयमास्तिकदर्शनत्वं नातिवर्त्तत इत्येव सिद्धम्।

न्यायवैशेषिकदर्शनरहस्यं खलु सूक्ष्मतमया धिया बहुना च परिश्रमेणैव वेद्यम्। तदुक्तं तार्किकशिरोमणिना श्रीरघुनाथेन—

न्यायमधीते सर्वस्तनुते कुतुकान्निबन्धमप्यत्र।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः॥

आसन्नेकदा रघुनाथशिरोमणिप्रमुखा एव केचन तथाभूता न्यायतन्त्ररहस्यविदो येषां मनीषया प्रकाशितानि न्यायतन्त्ररहस्यानि महान्तमेव विस्मयं जनयन्ति धीधनानाम्। तथा हि तार्किकशिरोमणी रघुनाथः परमगुरोः पक्षधरस्य प्रतिपक्षतया प्रथमदर्शनादुत्तरमेव सामान्यलक्षणां नाम प्रत्यासत्तिं प्रतिक्षिप्य तस्य विस्मयं जनयामास। उत्तरकाले च तत्त्वचिन्तामणिग्रन्थदीधित्यादिटीका इव स्वतन्त्रया धिया विशेषतो विमृश्य पदार्थतत्त्वखण्डनाद्यपराख्यं पदार्थतत्त्वनिरूपणं नाम विलक्षणं ग्रन्थं निर्माय 'दिक्कालौ नेश्वरादतिरिच्येते' 'मनोऽपि चासमवेतं भूतम्' 'परमाणुद्व्यणुकयोश्च मानाभावः, त्रुटावेव विश्रामात्' इत्यादिसन्दर्भैः केषाञ्चिदन्य-

पदार्थान्तर्गतत्वं केषाञ्चिच्चैकान्ततः स्वरूपापलापमेव कृत्वा यथा दर्शयामास स्वकीय-न्यायविद्याप्रतिभाया वैशिष्ट्यं तथैव न्यायतन्त्रेषु चिरनिरूढ़ानां समवायैकत्वपरमाणु-कारणत्वप्रभृतितत्त्वानां प्रतिक्षेपेण दर्शितवानात्मनः सत्साहसमपि लोकातीतम्। अनेन खलु साहसेन महानुपकार एव सम्पद्यते शास्त्रसम्प्रदायस्य।

गदाधरभट्टाचार्य्यादीनामपि नैयायिकवर्य्याणां दृश्यते हेत्वाभाससामान्य-लक्षणादिविचारे विशिष्टद्वयाघटितत्वादिकल्पोपन्यासेन बुद्धेः सुमहानुत्कर्षः।

बहुत्रान्यत्रापि न्यायारण्यसञ्चरणपञ्चाननानां तेषां तेषां विशेषमनीषाशालिनां सुमनीषाकल्पितानि परःसहस्राणि नवीनानि तत्त्वानि समुपलभ्यन्ते। यैरवान्तर-मतभेदा बहवो जाता नैयायिकानाम्।

लक्षणादीनामनुगमप्रणाली महाविलक्षणं फलं नव्यन्यायविद्यायाः। तया यथा लक्षणादीनामननुगमादिदोषा वार्य्यन्ते, तथैव सम्बन्धविधयानुगमेन सम्बन्धसम्बन्धस्य भानमनङ्गीकुर्वतां महल्लाघवमपि सम्पद्यते।

तस्य किञ्चिदुदाहरणमुपन्यस्यते यथा—न्यायमते आत्यन्तिकी दुःख-निवृत्तिरपवर्गः। तत्र दुःखनिवृत्तेरात्यन्तिकत्वं नाम स्वसमानाधिकरणदुःखप्रागभावा-समानकालीनत्वं स्वसमानाधिकरणदुःखासमानकालीनत्वं वेति निरुच्य तस्य स्वत्वघटितत्वेनाननुगमदोषमुद्भाव्य गदाधरगुरुणा हरिरामतर्कवागीशेन स्वीय-मुक्तिवादविचारग्रन्थे सम्बन्धविधयानुगमः प्रदर्शितो यथा—स्वसामानाधिकर-ण्य-स्वाधिकरणकालवृत्तित्वोभयसम्बन्धेन दुःखप्रागभाववदन्यत्वं दुःखवदन्य-त्वमेव वा दुःखनिवृत्तेरात्यन्तिकत्वमिति। न च प्रकृते सम्बन्धस्यापि स्वत्व-घटितत्वेनाननुगमदोषतादवस्थ्यमिति वाच्यम्, सम्बन्धघटकस्वपदस्य प्रतियोगिपरि-चायकमात्रतया दोषाभावात् सम्बन्धाननुगमस्यादोषतायाः प्राचीनैरभ्युपगमाच्च। एवमुदाहरणान्तराणि बहून्येव नव्यन्यायटीकोपटीकादिषु लभ्येरन्। सम्बन्धविध-यानुगमवद् धर्मविधयापि पदार्थानामनुगमरीतिरस्ति न्यायशास्त्रे सा विस्तरभयान्न प्रपञ्च्यते।

प्रतियोगितावच्छेदकत्वादिपर्य्याप्तिनिवेशरीतिरपि नव्यन्यायस्य महान्तं विशेषं पुष्णाति। भूरिप्रचारैव रीतिरियं नव्यन्यायतन्त्रे।

तदेवं त्रिविधदिक्पर्य्यालोचनेन नव्यन्यायतन्त्रे निष्णातानां प्राक्तनानां प्रतिभा सुतरां विचित्ररूपैव प्रतिभासते। तन्मयतया न्यायतन्त्रतत्त्वानुसन्धाने तेषां निरन्तराभिमुख्येनैव प्रतिभाक्रमेण परिपुष्टा तथा तथा नवीनाः सरणीराविष्कुर्वती जनयामास विद्याधिकारे महान्तमुपकारम्। परमद्यत्वे तन्मयतया शास्त्रानुशीलने प्रायेण समेषामसमेन वैमुख्येन सत्यपि प्रतिभा क्षीणक्षीणा भवन्ती दूरे तावदास्तां नवीनतत्त्वसमुद्भावनकथा निःशेषमर्थमपि नावगन्तुमर्हति ग्रन्थसन्दर्भविशेषाणाम्। परं साम्प्रतमाशास्महे—यदेषा दर्शनपरिषद् विशेषेण दर्शनाद्यर्थेषु साम्प्रतिकानां मनीषाया निष्ठामनुकूलयन्ती विदध्यादेव समृद्धिं निरवद्यां वसुन्धरासद्मनि न्यायवैशेषिकादिनिखिलदर्शनविद्यानामिति शम्।

---

# आगमदर्शनविमर्शः

डा० श्रीकान्तिचन्द्रपाण्डेयमहोदयानाम्

मान्या दर्शनपरिषदध्यक्षा उपकुलपतिमहाभागाः ! धुरन्धराः काशीविद्वांसः ! दर्शनानुरागिणश्च !

महानयमनुग्रहस्तत्रभवतां वाराणसेयसंस्कृतविश्वविद्यालयीयदर्शनपरिषद्विशिष्टाधिवेशनायोजकानां विशेषतो दर्शनपरिषदध्यक्षाणाम् उपकुलपतिमहाभागानां यद् बहुशाखाविभिन्नस्यातीवदुर्गमस्य चागमदर्शनस्य परिषदोऽध्यक्षपदं ग्रहीतुमहमादिष्टः। महतामादेशः शिरोग्राह्य इति स्वीयमयोग्यत्वं जानन्नपि यथाऽऽदेशं समुपस्थितोऽहं भवतां पुरः। अध्यक्षेण किमपि वक्तव्यमिति नियममनुसरंश्च प्रस्तुतोऽहमागमदर्शनविषये किमपि वक्तुम्, आगमशब्दार्थः, आगमदर्शनानि, शैवागमपरम्परासत्ताकालः, निबद्धाऽऽगमकालः, शैवागमदर्शनानि, पाशुपतदर्शनम्, सिद्धान्तशैवदर्शनम्, लकुलीशपाशुपतदर्शनम्, विशिष्टाद्वैतशैवदर्शनम्, विशेषाद्वैतदर्शनम्, नन्दिकेश्वरदर्शनम्, रसेश्वरदर्शनम्, क्रमदर्शनम्, कुलदर्शनम्, प्रत्यभिज्ञादर्शनमित्येतान्विषयानवलम्ब्य।

## आगमशब्दार्थः

अभिनवगुप्ताचार्य आगमशब्दस्य यौगिकार्थमेव स्वीकरोति "आसमन्ताद् अर्थं गमयति" इति। अथ च बौद्धादीनां सर्वेषामागमानां विश्वासापेक्षं प्रामाण्यं प्रतिपादयति। आगम एतन्नये प्राप्तपरमात्मतादात्म्याद् व्यक्तिविशेषात् स्वरूपं लभते। एवञ्च सदा पराभावेन स्थितत्वेऽपि पश्यन्तीभावमागत्य मध्यमाभावेन स्थित्वा परिमितप्रमातृद्वारेणाविर्भवति। अत एवागमः प्रकाशरूपस्य परमात्मनः स्वभावतया स्थितो व्यापारः प्रत्यक्षादीनां प्रमाणान्तराणां जीवितकल्पः, परप्रमातृव्यापाररूपत्वाच्च नित्यः। आगमश्च यद् यथा परामृशति तत्तथैव भवति नत्वन्यथा, यतः प्रत्यक्षत इदमुपलभ्यते यद् भवति अर्थक्रियाकारित्वम् आगमोपलब्धानां विषापसारादिमन्त्राणाम् "नैतद्विषं मां मारयति गरुड एवाहम्" इत्यादीनाम्।

विभिन्नागमोपलब्धानाम् "दीक्षितोऽहम् अपुनरावृत्तिभागी" "कारुणिकोऽहं बुद्धपदं गन्ता" "गाढक्लेशसहिष्णुरहम् अर्हत्पदं प्रपत्ता" इत्यादिवाक्यानां विश्वासापेक्षं प्रामाण्यम्।

तं प्रत्येवागमविशेषस्य प्रामाण्यं यस्य तत्र द्रढीयस्तमो विश्वासः, यस्य तत्र न विपर्ययः कथमप्युदेति। अन्यस्य तु सोऽप्रमाणमेव।

न चैवम् आगमप्रमाणस्य पक्षपातिता, "अपक्षपातिप्रमाणम्" इति नयेन च अप्रामाण्यम्। यतः सर्वेषामागमानां नियताधिकारिदेशकालसहकार्यादिनियन्त्रितमेव प्रामाण्यं सर्वत्राभ्युपगतम्। यथा "ज्योतिष्टोमकारी अहं स्वर्गं गन्ता" इत्यागमवाक्यस्य त्रैवर्णिकं प्रत्येव प्रामाण्यम्, न शूद्रं प्रति, तत्र तस्यानधिकारात्, लिप्सितार्थाप्रापकत्वाच्च।

एवमभिनवगुप्तपादानां तदनुयायिनाञ्च मते न कोऽप्यागमो विद्वेष्यः। सर्वोऽप्यागमः तन्निर्दिष्टमर्थं बोधयति प्रापयति च। एतन्नये न केवलं भारतोपलब्धानां धार्मिकपुस्तकवाक्यानां प्रामाण्यमपि तु 'बाइबिल' 'कुरान' इत्यादिधर्मग्रन्थवाक्यानामपि।

भगवान् भर्तृहरिरपि सर्वेषामागमानां प्रवाहानादित्वं प्रामाण्यञ्चाभ्युपगच्छति। परन्तु उच्छिन्नपरम्पराणामागमानामृग्यजुःसामरूपा त्रयी बीजमिति मन्यते। यथोक्तम्:—

न जात्वकर्तृकं कश्चिदागमं प्रतिपद्यते।
बीजं सर्वागमापाये त्रय्येवादौ व्यवस्थिता॥ (वा० प०ब्रह्मका० ३४)

शैवास्तु एवं निर्दिष्टम् आगमानादित्वप्रामाण्ययोर्विषये भर्तृहरिमतं संशोध्य स्वीकुर्वन्ति। संशोधनञ्चेत्थम् :—

ते हि अविदितकर्तृकं परम्परागतमुपदेशजातं वेदाविरुद्धं वेदविरुद्धं वा आगमत्वेन मन्यन्ते। तस्य च प्रामाण्यमधिकारिदेशकालापेक्षमभ्युपगच्छन्ति। यथोक्तम् :—

प्रसिद्धिरविगीता हि सत्या वागैश्वरी मता।
तथा यच्च यदा सिद्धमेतद्ग्राह्यमसंशयम्॥ ( भा० भा० २ पृ० २६ )

अभिनवगुप्तपादैश्च तन्त्रालोके मठिकागुरूणां प्रसिद्धिनिबन्धकारित्वमात्रमुपगच्छद्भिरागमानादित्वं समुद्घोषितमेव। इदञ्च मतं प्रश्नोपन्यासपूर्वमेवं स्पष्टीकृतम् :—

किमेते उपदेशा वेदे न सन्ति येन प्रसिद्धिः शरणीकृता ? सत्यम्, न भविष्यन्त्यपि, न हि श्रीपरमेश्वरस्यैश्वर्यमेतावन्मात्रे समाप्तिं गतम्। सन्तो वाऽतिरहस्यत्वेन तत्र व्याख्याकृद्भिर्न स्पष्टीकृताः, इति कर्णोपकर्णिकया महागुरुभिर्महाशिष्येषु सूचिताः, दयावद्भिश्च मठिकागुरुभिः प्रकटीकृताः।

## आगमदर्शनविमर्शः

### आगमदर्शनानि

आगमप्रामाण्यं जैनैः, बौद्धैः, वैयाकरणैः, शाक्तैः शैवैश्च स्वीक्रियते। जैनदर्शने जैनागमप्रामाण्यं सर्वार्थसिद्धौ स्वीकृतम्। यथोक्तम् :—

"तत्र सर्वज्ञेन परमर्षिणा परमाचिन्त्यकेवलज्ञानविभूतिविशेषेण अर्थत आगम उपदिष्टः। तस्य प्रत्यक्षदर्शित्वात्प्रक्षीणदोषत्वाच्च प्रामाण्यम्" (स० सि० १।२०) वैष्णवदर्शनेऽपि पञ्चरात्रवैखानसागमयोः कात्स्न्र्येन पाशुपताद्यागमानाञ्च वेदाविरुद्धांशानामेव प्रामाण्यमूरीक्रियते यतीन्द्रमतदीपिकादिप्रसिद्धवैष्णवदर्शनग्रन्थेषु। यथोक्तम्:—

"पाशुपताद्यागमा अपि तथैव। आगमदिव्यतन्त्रतन्त्रान्तरसिद्धान्तभेदभिन्नस्य श्रीपञ्चरात्रागमस्य क्वचिदपि वेदविरोधाभावात् कात्स्न्र्येन प्रामाण्यम् एवं वैखानसागमस्यापि"।
(य० म० दी० ३०-१)

वैयाकरणदर्शनस्य आगमाश्रितत्वं भर्तृहरिपादैः स्वीये वाक्यपदीये मुक्तकण्ठं प्रतिपादितम्। यथोक्तम् :—

यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः॥ (वा० प० द्वि. का. ४८८-४८९)

पुण्यराजव्याख्यानुसारञ्चैष परमशिवभक्तरावणनिबद्धः त्रिकूटे त्रिलिङ्गैकदेशवर्त्युपलस्थो मूलभूतव्याकरणागमः केनचिद् ब्रह्मरक्षसा तत आनीय चन्द्राचार्यवसुरातप्रभृतीनां दत्तः। एवमुपलब्धं मूलभूतं व्याकरणागममाश्रित्य भर्तृहरिगुरुणा वसुरातेन आगमसंग्रहः प्रणीतः। यमुपजीव्य भर्तृहरिपादैः वाक्यपदीयं काण्डत्रयात्मकं लिखितम्।

शाक्तदर्शनस्य आगमाश्रितत्वं निर्विवादम्। निश्वासतत्त्वसंहितायां शतसंख्याकाः शाक्तागमाः निर्दिष्टाः। इयं संहिता नेपालमहाराजपुस्तकालये हस्तलिखिता विद्यते। इदमस्माकं पूज्यपादानां महामहोपाध्यायगोपीनाथकविराजमहोदयानामपि मतमिति तदीयात् 'शाक्त फिलासफी' इति नाम्नः—"हिस्टोरी आफ् फिलासफी ईस्टर्न एण्ड वेस्टर्न" इति नाम्नि पुस्तके मुद्रितात्प्रबन्धाज्ज्ञायत एव विद्वद्भिः।

पाशुपत-सिद्धान्तशैव - लकुलीशपाशुपत-विशिष्टाद्वैतशैव-विशेषाद्वैतशैव-नन्दिकेश्वराद्वैतशैव-रसेश्वर-प्रत्यभिज्ञाख्य-शैवदर्शनानामागमाश्रितत्वमस्माभिः स्वकीयेषु भास्करी-

अभिनवगुप्तादिमुद्रितपुस्तकेषु यथाशक्ति साधितम्। क्रमकुलदर्शनयोरप्यागमाश्रितत्वम् अभिनवगुप्ताख्यपुस्तकद्वितीयसंस्करणे साध्यते। दशद्वैतागमानाम् अष्टादशद्वैताद्वैतागमानां चतुःषष्टिरद्वैतागमानाञ्च नामानि स्वकीये "अभिनवगुप्त" इति नाम्नि पुस्तके ऐतिहासिकभागे सप्रमाणं लिखितानि।

परन्तु शैवशाक्तदर्शनान्येवागमदर्शनत्वेन स्वीक्रियन्ते, न तु जैनबौद्धवैष्णव-व्याकरणदर्शनानि। यतः जैनदर्शनागमा ऐतिहासिकव्यक्तिविशेषोक्ताः। तत्र च श्वेताम्बर-दिगम्बरसंप्रदाययोर्मतभेदः। श्वेताम्बरैरेव नष्टपरम्पराणान्तेषां संकलनं महावीरनिर्वाणा-दशीत्युत्तरनवशतवर्षानन्तरं कृतम्। ईशवीये षष्ठशते चतेषां संस्करणं देवर्धिगणिक्षमा-श्रमणेन कृतम्। परं दिगम्बरा मन्यन्ते यत्पूर्वसंज्ञका आगमा विलुप्ताः। एवम् आगम-प्रामाण्यविषये जैनसंप्रदायद्वयस्य पारस्परिकमतभेदाज्जैनदर्शनं न स्वीक्रियते आगमदर्श-नत्वेन। बौद्धागमविषयेऽप्येवमेव।

वैष्णवदर्शने कृत्स्नस्य वेदस्य वेदाविरोधित्वेन चागमस्य प्रामाण्यं स्वीक्रियते यथाह यतीन्द्रमतदीपिकाकारः :—

"अतः कृत्स्नस्य वेदस्य प्रामाण्यम्" (पृ० २७) "श्रीपञ्चरात्रागमस्य क्वचिदपि वेदविरोधाभावात् कार्त्स्न्येन प्रामाण्यम्। एवं वैखानसागमस्य" (पृ० ३०–१)। एवं वेदप्रामाण्यस्य वैष्णवदार्शनिकैः प्राधान्येन स्वीकृतत्वाद् वैष्णवदर्शनस्यापि नागमदर्शनत्वम्।

व्याकरणस्य वेदाङ्गत्वं सुप्रसिद्धम्। वैयाकरणदर्शनस्वीकृतब्रह्मणः प्राप्त्युपायो वेद एव यो ब्रह्मणोऽनुकारत्वेनापि स्वीकृतो भर्तृहरिपादैः। यथोक्तम् :—

प्राप्त्युपायोऽनुकारश्च तस्य वेदोमहर्षिभिः।
एकोप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक्॥ (वा० प० ७)
आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः॥ (वा० प० १७)

वेदग्रहणसमर्थश्चात्मा छन्दसां योनिं छन्दोमयीं तनुं साक्षात्कृतमुच्यत इत्यपि वैयाकरणसिद्धान्तः। यथोक्तम् :—

अत्रातीतविपर्यासः केवलामनुपश्यति।
छन्दस्यश्छन्दसां योनिमात्मा छन्दोमयीं तनुम्॥ (वा० प० २१)

इति सुस्पष्टं व्याकरणदर्शनस्यापि वेदानुसारित्वम् । अतो न तद्दर्शनमप्यागमदर्शनेषु गण्यते । एवञ्च शाक्तशैवदर्शनयोरेवागमदर्शनत्वं निर्धार्यते ।

## शाक्तशैवदर्शनयोः पारस्परिकः संबन्धः

शाक्तदर्शनस्य शैवदर्शनसंबन्धित्वं श्रीसोमानन्दपादैः शिवदृष्टौ, उत्पलाचार्यैश्च तट्टीकायां स्पष्टं प्रतिपादितम् । यद्यपि तत्राद्वैतशाक्तदर्शनमेव समालोचितं तथापि द्वैतशाक्तदर्शनसत्तायां न कोपि विवादावसरः । यथा अद्वैतशाक्तदर्शनम् अद्वैतशैवदर्शनाभ्युपगतानि षट्त्रिंशत्तत्त्वानि स्वीकरोति तथा द्वैतशाक्तदर्शनमपि द्वैतशैवदर्शनप्रतिपादितं शिवशक्तिबिन्दुरूपं प्रधानतत्त्वत्रयमङ्गीकरोति । शैवशाक्तदर्शनयोः पारस्परिको भेदः शिवशक्त्योः प्राधान्याप्राधान्यकृतः । शाक्ताः शक्तेरेव परत्वं तथा तस्याः स्फुरणाभावदशामेव शिवत्वेन स्वीकुर्वन्ति । यथोक्तं सोमानन्दोत्पलाभ्याम् :—

स्वयूथ्यानद्वयवादिनः प्रतीदानीमारम्भः । तथा च तैरुक्तम् :—

यस्या निरुपाधिज्योतीरूपायाः शिवसंज्ञया ।
व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे ॥
अथ शक्तेः परावस्था यैर्भक्त्या परिगीयते ।
युक्त्या प्रकाशितो देवस्ततः शक्तिदशा यतः ॥ ( शि० ६०, ६४ ),

इदमत्रावधेयम् । शैवा अपि शिवे शक्तेर्महत्त्वं शरीरे हृदयस्येव स्वीकुर्वन्ति । यथोक्तम्ः—

चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥
( भा० भा० १, २५०–५ )

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥
महासत्ता महादेवी विश्वजीवनमुच्यते । ( भा० २६१ )
यत्सारमस्य जगतः सा शक्तिर्मालिनीपरा । ( भा० २६२ )

परन्तु शक्तेः प्राधान्यं न मन्यन्ते । यतो वैयाकरणसिद्धान्ते स्त्रीलिङ्गस्य पुंल्लिङ्गविशेषरूपत्वात् शक्तेः स्त्रीलिङ्गत्वात्तस्याः पराधीनत्वमप्राधान्यञ्च स्वीकार्यमेव । अपरञ्च शाक्ताः स्वयमेव परावस्थाशक्तिदशयोः पारस्परिकं भेदं स्वीकुर्वन्ति । शक्तिदशां परावस्थानन्तरभाविनीं

परायाः किञ्चिदुच्छूनतास्वरूपां मन्यन्ते । एवञ्च शक्तेरूर्ध्वं दशान्तरं स्वीकुर्वद्भिस्तैः सर्वोत्तीर्णः शिवोऽभ्युपगत एव । यत्तु ते शक्तेः परतो वर्तमानं तत्त्वमपि पराशक्तिरिति स्त्रीलिङ्गेन निर्दिशन्ति तत्र तेषां शक्तिभक्तिरेव कारणम् । यथोक्तम्—

अथ शक्तेः परावस्था यैर्भक्त्या परिगीयते ।
युक्त्या प्रकाशितो देवस्ततः शक्तिदशा यतः ॥

यथा च व्याख्यातमुत्पलदेवपादैः—

"लिङ्गविशेषान्यथानुपपत्त्या शक्तित्वेनैवाभिमतस्यार्थस्य परावस्थारूपाभिधानं भक्तिरेव ततः परस्य शक्तिमतो भावात् शक्तिमदभिन्ना हि तत उद्धृत्यापि प्रयोजनवशान्निर्दिश्यमाना तत्पारतन्त्र्येण तदनन्तरं निर्देशमर्हति । यतस्तैरेव ततः परावस्थातोऽनन्तरं शक्तिदशा किञ्चिदुच्छूनतेत्यादिनोक्ता । ततो यैः शक्तेः परत्वं गीयते तैस्तया धर्मभूतया धर्मीस्वाश्रयः स्वतन्त्रो वास्तवाभेदयुक्त्या देवः शिवः प्रकाशितः" ।

## शैवागमपरम्परासत्ताकालः

आगमानां समयनिर्धारणे चिकीर्षिते निबद्धागमकाल आगमपरम्परासत्ताकालाद्भिन्न इति सम्यङ् मनसि निधेयम् । यतः परम्परागता आगमा मठिकागुरुभिस्तेषु तेषु भिन्नेषु कालेषु निबद्धा इति पूर्वमेव स्वीकृतम् । एवञ्च आगमपरम्परासत्तासमयनिर्णये चिकीर्षिते भूखननोपलब्धस्य प्रागैतिहासिकसंस्कृतिसूचकवस्तुजातस्योपरिदृष्टिप्रक्षेपे कृते एवं निश्चयो जायते यच्छैवागमपरम्परायाः सत्ता अस्मात्कालात् पञ्चसहस्रवर्षपूर्वं हरप्पा-मोहेञ्जोदारो-संस्कृतीनां समय आसीत् । तत्र च इमा युक्तयः—

(क) शैवागमेषु सामान्यतश्चत्वारो भागाः ज्ञानयोगचर्याक्रियाख्या भवन्ति । तत्र क्रियाभागे मन्दिरनिर्माणविधिर्मूर्तिविरचनविधिश्चोपलभ्येते । वास्तुशास्त्रेतिहासलेखकैश्चेदमूरीक्रियते यच्छैवागमेभ्यः प्राचीनतरा वास्तुविद्याविषयका ग्रन्था नोपलभ्यन्त इति वास्तुविद्याविषयकाः शैवागमभागा वास्तुविद्यासाहित्येतिहासे प्राचीनतमाः । वास्तुविद्यापरम्परा च हरप्पा-मोहेञ्जोदारो-संस्कृतिषु आसीत् । यतः प्रदेशद्वयेऽपि भित्तिपरिवृतानां नगराणाम् इष्टिकारचितानां गृहाणां नष्टावशेषाः शिवचरणामृतकुण्डम्, शिवलिङ्गानि योनयश्चोपलब्धाः । ताश्च संस्कृतयो वेदात्प्राचीनाः स्वीक्रियन्ते, एवञ्च शिवलिङ्गशिवचरणामृतकुण्डोपलब्ध्या शिवालयसद्भावस्यानुमीयमानत्वात्, शिवालयानाञ्च शैवागमानुसारं निर्मेयत्वात् शैवागमपरम्परायास्तदानीं सद्भावस्वीकारो युक्तियुक्त एव ।

(ख) आधुनिकैरैतिहासिकैरिदं मन्यते यदार्याः कुतश्चन बहिर्देशाद् भारतमागताः तेषामेव च कृतिर्वेदः। ते च स्वागमनात्पूर्वं भारते विद्यमानायाः संस्कृतेर्विरोधिन आसन्। तेषाञ्चात्रत्यैरादिवासिभिर्युद्धानि अप्यभूवन् येषु इन्द्रः स्वीयं पुरन्दरत्वं दर्शयति स्म। यथोक्तम् :--

शतमश्नन्मयीनां पुरामिन्द्रो व्यास्यत्। दिवोदासाय दाशुषे (ऋ० ४-३०-२०)

अध्वर्यवो यः शतं शम्बरस्य पुरो विभेदाश्मनेव पूर्वीः (ऋ० २-१४-६)

पञ्चाशत्कृष्णा निवपः सहस्रात्कं न पुरो जटिमाविदर्दः (ऋ० ४-१६-१३)

एताश्च पुरो भारतादिवासिनामनार्याणामेवासन् नत्वागन्तुकानामार्याणाम्, तासां ध्वस्तत्वेन वर्णनात्। न चात्र भारते हरप्पा-मोहेञ्जोदारो-पूर्व्यः प्राचीनतराः पुरोऽद्यावध्युपलब्धा, इति इन्द्रकृतं पुरदारणमैतिहासिकवृत्तमिति चेत्स्वीक्रियते तर्हि दारिताः पुरः हरप्पा-मोहेञ्जो-दारोस्थानोपलब्धा एव मन्तव्याः, तथा च शैवागमपरम्पराया न केवलं वेदसमकालीनत्वम-पि तु ततोऽपि प्राचीनतरत्वं स्वीकार्यमेव, यत एतासु पूर्षु शैवसंस्कृतिचिह्नानि निर्विवाद-मुपलब्धानि।

(ग) शिवलिङ्गपूजकानाम् ऋग्वेदे घृणादृष्ट्यैवोल्लेखः समुपलभ्यते। यथा—

मा शिश्नदेवा अपि गु ऋतं नः (ऋ०, ७-२२-३०)

अत इदं प्रतिभाति यदेतद्भूम्यादिवासिनां धर्मः शैव एवासीद् य आगन्तुकेभ्य आर्येभ्यो न रोचते स्म। इदं शैवागमपरम्पराया वेदात्प्राचीनत्वं सूचयति।

(घ) ऋग्वेदे 'रुद्र' 'त्र्यम्बक' इति द्वे शिवस्य नामनी समुपलभ्येते—(१) इमा रुद्राय तपसे (२) इमा रुद्राय शतधन्विने (३) त्र्यम्बकं यजामहे इति। सामवेदे सामविधाने रुद्रविषयिण्य ऋचो वर्त्तन्ते।

"आवो राजानं तद्वार्गादेव ज्यातो हनि" इत्यादि।

शुक्लयजुर्वेदीयवाजसनेयसंहितायाः षोडशाध्याये तथा कृष्णयजुर्वेदीयतैत्तिरीय-संहितायां शिवस्य शतनामानि कीर्तितानि। एवमथर्ववेदे न केवलं शिवपरा ऋच एव विद्यन्ते अपि तु शिवपूजनप्रकारोऽपि निर्दिष्टः। अत एवं प्रतिभाति यद् वैदिका आर्या अपि अत्र-त्यादिवासिभिः सह संपर्कानन्तरं शैवागमपरम्परामपि स्वीयामिव मन्यन्ते स्म। एवञ्च वेदा अपि शैवागमपरम्पराप्रभाविता ऐतिहासिकदृष्ट्या भान्ति। अतः शैवागमपरम्परासत्ता पञ्चसहस्रवर्षात्पूर्वमपि अस्मिन् भारत आसीदित्यत्र न विवादावसरः।

## निबद्धागमसत्ताकालः

तत्र शिलालेखप्रमाणानि

(अ) द्व्यधिकाष्टशते ईशावर्षे तदनुसारञ्च चतुर्विंशत्युत्तरसप्तशते शाके शैवागमप्रचारः न केवलं भारते अपि तु भारताद्बहिः कम्बोजदेश आसीदिति कम्बोजदेशीय 'स्दोक् कक् थोम्' प्रदेशोपलब्धशिलालेखाद्विज्ञायते। यद्यप्यस्मिञ्छिलालेखे क्वापि तिथिर्नोपलभ्यते, तथापि तत्रेदमुत्कीर्णं वर्तते यद् द्वितीयजयवर्मनाम्नो राज्ञः शासनकाले देवराजरहस्यसंप्रदायः शिरश्छेदादयश्चागमाः प्रचारमलभन्त। स राजा चतुर्विंशत्यधिकसप्तशतशाकसंवत्सरे राजसिंहासनमारुरोह इति ऐतिहासिकैर्निश्चितम्। तस्मिन् शिलालेखे आगमनामानीत्थमुपलभ्यन्ते :—

शास्त्रं शिरश्छेदविनाशिकाख्यं सम्मोहनामापि नयोत्तराख्यम्।<br>
तत्तुम्बुरोर्वक्त्रचतुष्कमस्य सिद्ध्येव विप्रः समदर्शयत्सः॥

शिलोत्कीर्णेषु त्रिष्वागमनामसु शिरश्छेदः संमोहश्चाद्वैतागमावास्तामिति अभिनवगुप्तपादकृततन्त्रालोकस्य जयरथकृतायां टीकायां श्रीकण्ठ्यनुसारं प्रदत्तेषु नामसु तयोः सद्भावात्प्रतीयते। यथोक्तम् :—

वीणामणिस्तृतीया तु संमोहं तु चतुर्थकम्।<br>
पञ्चमं डामरं नाम षष्ठं चैवाप्यथर्वकम्।<br>
कबन्धं सप्तमं ख्यातं शिरश्छेदोऽष्टमः स्मृतः॥ (तं०, भा० १, पृ० ४३)

(आ) मथुरास्तम्भलेखः सोमनाथशिलालेखश्च द्योतयतो यल्लकुलीशपाशुपतदर्शनस्योद्गमः ईशाद्वितीयशते समभवत्। प्रथमोऽशीत्यधिकत्रिशत ईशवीये वर्षे (३८०) उत्कीर्णः। तत्र उदिताचार्यविषय इदं वृत्तमुपलभ्यते। माहेश्वर-उपमिताचार्यशिष्यस्य कपिलाचार्यप्रशिष्यस्य उदिताचार्यस्य परमेष्ठिगुरुः पाराशर आसीत्। गुरुपरम्परायाञ्च उदिताचार्यः कौशिकाद्दशमोऽभूत्। स उपमितेश्वरकपिलेश्वरौ स्वगुरुपरमगुरुस्मारकौ गुर्वायतने प्रत्यष्ठापयत्।

वायुपुराणे लिङ्गपुराणे च लकुली महेश्वरस्यान्तिमोऽवतारः कायारोहणे कायावतारापरनाम्नि जात इत्युक्तम्। इदं स्थानमद्यत्वे कार्वन् इति ख्यातं बड़ोदाराज्ये वर्तते। तस्य चत्वारः शिष्याः कौशिक-गर्ग-मित्र-कौरुश्याभिधा अभूवन्। इदं पौराणिकं वृत्तं सोमनाथसमुपलब्धशिलालेखेन समर्थितम्। यतस्तत्र चतुर्णामपि लकुलीशिष्याणां विद्यन्ते

नामान्युत्कीर्णानि। यद्यपि नामत्रयं किञ्चिद्भिन्नमिव तथापि कौशिकनाम तथैवोपलभ्यते यथा मथुरास्तम्भलेखे। अत इदं स्पष्टं भवति यल्लकुलिशिष्यः कौशिकोऽशीत्यधिकत्रिशतेशवीयवर्षभवाद् उदिताचार्यात् सार्धशतद्वयवर्षपूर्वमभवत्। यत ऐतिहासिका गुर्वादिपरम्परागणनायां प्रत्येकं प्रायः पञ्चविंशतिवर्षपरिमितं कालं गणयन्ति। एवञ्च कौशिकाचार्यगुरुर्लकुली ईशाद्वितीयशतप्रारम्भेऽभवदिति निश्चीयते। अयं लकुली लकुलीशपाशुपतदर्शनस्य प्रवर्तकः। पाशुपतागमाश्च सुप्रसिद्धाः। यतः सर्वेषां शैवदर्शनानामागमाश्रितत्वं स्वीक्रियतेऽतः लकुलीशपाशुपतदर्शनाश्रयभूता आगमा ईशाप्रथमसंवत्सरे ततः प्रागपि चासन्निति मन्तव्यं भवति।

**साहित्यिकं प्रमाणम्**

बादरायणकृते वेदान्तसूत्रे पाशुपतदर्शनं निराकृतम्। बादरायणस्य च समय ईशापूर्वचतुर्थशते पञ्चमशते वा स्वीक्रियते। मतभेदे सत्यपि कश्चनापि बादरायणम्-ईशाद्वितीयशतात् अपरभाविनं न स्वीकरोति। एवञ्च रत्नप्रभानुसारं चतुर्णामपि माहेश्वराणां शैव-पाशुपत-कारुणिकसिद्धान्ति-कापालिकानां महेश्वरप्रोक्तागमानुसारित्वान्माहेश्वरत्वम्। अत ईशासंवत्सरात्पूर्वं शैवागमसत्ता स्वीकार्यैव भवति।

## शैवागमदर्शनानि

आगमशब्दस्य यौगिकोऽर्थः प्राङ्निर्णीतः। परन्तु शैवागमदार्शनिकैरस्य रूढ्यर्थ एवं कृतः—

आगतं शिववक्त्रात्तु गतं च गिरिजामुखे।
मतं श्रीवासुदेवेन आगमस्तेन कीर्तितः॥(भा०, भा० २, पृ० ८५)

इममागमशब्दार्थमवलम्ब्य कियन्त्यागमदर्शनानीति चेत्प्रश्न उत्थाप्यते, तदुत्तरे एतदेवाद्य शक्यते वक्तुं यद् यद्यपि बहूनि शैवदर्शनानि कालमुख-कापालिककारुणिकादीनि नाममात्रेणैव ज्ञायन्ते यतस्तद्विषयकं दार्शनिकसाहित्यं न प्राचुर्येणोपलभ्यते। तथापि दशशैवदर्शनान्यस्माभिरधीतानि। अतो विविदिषूणां न तु विदुषां कृते सेतिहासं प्रत्येकं दार्शनिकं तत्त्वं सूक्ष्मतयोपस्थाप्यते।

### (१) पाशुपतदर्शनम्

अस्य दर्शनस्य सत्ता बादरायणात् प्रागासीदिति निर्णीतमेव। दार्शनिकदृष्ट्येदं द्वैतदर्शनम्, यत्र कारणकार्ययोगविधिदुःखान्ताः पञ्च पदार्थाः स्वीक्रियन्ते। कारणं पतिरिति

कार्यं पशुरित्यप्युच्यते। पतिर्निमित्तकारणं प्रधानञ्चोपादानकारणमिति द्विविधं कारणम्। महत आरभ्य पृथिव्यन्तं सर्वं कार्यान्तर्भूतम्। जीवात्मानः कारणवन्नित्याः। पतिर्जगत्सर्जनं कर्मानुसारं करोति। दुःखान्त एव मोक्षः। उपादानकारणभूतं प्रधानं कुम्भकारान्मृदिव पत्युः पृथक्सत्ताकमितीदं द्वैतदर्शनम्। एतच्च दशागमप्रामाण्यं स्वीकरोति। तन्नामानि चेत्थम् :—

कामजं योगजं चिन्त्यं मौकुटञ्चांशुमत्पुनः।
दीप्तं सूक्ष्मं सहस्रञ्च कारणं चाजितं पुनः॥

इदं बादरायणेन वेदान्तसूत्रे, शङ्कराचार्येण तट्टीकायाम्, आनन्दगिरिवाचस्पत्यादिभिः शाङ्करभाष्यटीकासु, श्रीकण्ठेन शैवविशिष्टाद्वैतप्रतिपादके ब्रह्ममीमांसाभाष्ये, श्रीपतिपण्डितेन विशेषाद्वैतसमर्थके श्रीकरभाष्ये च तथान्यैर्भाष्यकृद्भिर्बहुशः समालोचितम्।

## न्यायवैशेषिकदर्शनयोः शैवदर्शनत्वम्

हरिभद्रसूरिराजशेखरौ संस्कृतसाहित्येतिहासे सुप्रसिद्धौ। हरिभद्रः शङ्करात्प्राचीनः। तस्य समयः सप्तशतईशवीयवर्षादारभ्य सप्तत्यधिकसप्तशतवर्षपर्यन्तं स्वीक्रियते। धर्माचारानुसारं च भारतीयदर्शनविभागं कुर्वता तेन स्वीये षड्दर्शनसमुच्चये बौद्ध-नैयायिक-सांख्य-जैन-वैशेषिक-जैमिनीयाख्यानि प्रधानानीति मतमुपन्यस्तम्। उक्तञ्च यद् गौतमकाणादौ शैवावास्ताम्। तौ च शैवदर्शनस्वीकृतं दुःखान्तरूपत्वं मोक्षस्य तथेश्वरापरपर्यायस्य शिवस्य जगदुत्पत्तेर्निमित्तकारणत्वं प्रतिपादितवन्तौ। न्यायवैशेषिकदर्शनयोश्च इयानेव पारस्परिको भेदो यदाद्यं प्रमाणं तद्भेदांश्च प्रतिपादयति, अपरन्तु प्रमेयम्। तथा चोक्तम् :—

"शिवदैवतसाम्येऽपि तत्त्वादिविशेषविशिष्टत्वाद्वैशेषिकाः, तेषां वैशेषिकाणां काणादानां नैयायिकैराक्षपादैः सार्धं देवताविषये शिवदेवताभ्युपगमे भेदो विशेषो नास्ति"। (ष० द० स०, पृ० १२१)

ईशानवमशतान्ते दशमशतप्रारम्भे च जीवन् राजशेखरोऽपि स्वीये षड्दर्शनसमुच्चये एतान्येव षड्दर्शनानि नामान्तरैः प्रधानानीति स्वीचकार। यथा न्यायदर्शनं यौगमिति कथयामास सः। आक्षपादशैवानां वेषं चर्यां गुरुपरम्परां च वर्णयामास। एवञ्च न्यायवैशेषिकदर्शनयोः शैवदर्शनत्वं सुस्पष्टम्।

## आगमदर्शनविमर्शः

### ( २ ) सिद्धान्तशैवदर्शनम्

सिद्धान्तशैवदर्शनमपि द्वैतदर्शनम्। इदं दशशिवागमानामष्टादशरुद्रागमानां च प्रामाण्यं स्वीकुर्वदष्टाविंशत्यागमप्रामाण्यवादि। यथाह श्रीकण्ठसूरिः स्वीये रत्नत्रये; अघोरशिवाचार्यश्च तट्टीकायाम् :—

"आप्रोक्तिरत्र सिद्धान्तः शिव एवाप्तिमान्यतः।"

सिद्धान्तशब्दः पङ्कजादिशब्दवद्योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादश-तन्त्रेषु प्रसिद्धः।" ( र० त्र०, पृ० ५ )

इदमत्रावधेयम्। अभिनवगुप्तपादः अष्टादशरुद्रागमान् द्वैताद्वैतपरान् मन्यते। एवञ्चेदं स्पष्टं यत् सिद्धान्तशैवद्वैतिभिः द्वैताद्वैतागमाः द्वैतपरत्वेन व्याख्याताः। उदाहरणमत्र रौरवागमः। यद्यप्ययमागमः श्रीश्रीकण्ठ्यां द्वैताद्वैतागमेषु गणितः, तथापि सिद्धान्तशैवदर्शनप्रतिपादकः सद्योज्योतिः स्वीयमोक्षकारिकायां तट्टीकाकृदनुसारं घोषयति यद्रौरवागमपरम्परा रुरुसमयादारभ्य तत्समयपर्यन्तमविच्छिन्नासीत्। एतद्दर्शनप्रतिपादकैः सद्योज्योति-बृहस्पति-शङ्करनन्दन-देवबल-रामकण्ठ-श्रीकण्ठादिभिः स्वीयप्रबन्धेषु वैशेषिक-सांख्य-वेदान्त-वैयाकरण-पाशुपतादिदर्शनानि सुनिपुणं समालोचितानि, नादबिन्द्वादीनां सम्यग्विवरणम्, सूक्ष्मापश्यन्तीमध्यमावैखरीरूपवाक्चतुष्टयप्रतिपादनम्, परापरनाम्न्याः सूक्ष्माया नादेन पश्यन्त्याश्चाक्षरबिन्दुना तादात्म्यसाधनं मनोहारिणीभियुक्तिभिः कृतम्। श्रीकण्ठेन च भर्तृहरिस्वीकृतं सूक्ष्मापश्यन्त्योस्तादात्म्यं सविस्तरं खण्डितमिति वैयाकरण-दर्शनाध्येतृभिरवश्यमध्येयं सिद्धान्तशैवदर्शनम्।

सिद्धान्तशैवदर्शनं शुद्धं धर्माचारानामिश्रं दर्शनम्। यत इदं दर्शनम् पूर्वभाविनो द्वैतपाशुपतदर्शनात् पतिपशुनामकं पदार्थद्वयं पाशं च गृह्णाति तथापि योगविधिनामकं पदार्थद्वयं न गणयति पदार्थेषु, दुःखान्तञ्च पत्यावन्तर्भावयति। एतन्नये पतिपशुपाशनामकं मौलिकं पदार्थत्रयम्। पदार्थत्रयान्तर्गणिताः अतएवाप्रधानाः तच्छाखारूपाः षट्त्रिंश-त्पदार्थाः। केषुचित्स्थलेषु मौलिकं पदार्थत्रयं शिवपुरुषमहामायानामभिर्निर्दिष्टम्। यद्यपि शिवपुरुषशब्दौ पर्यायवाचिनौ पाशमहामायाशब्दौ न तथा। पाशशब्दार्थो महामायाशब्दार्थादतीव विस्तीर्णः। पाशतत्त्वे पञ्चाप्रधानतत्त्वानि मल-माया-रोधशक्ति-कर्म-बिन्द्वाख्यान्यन्तर्भवन्ति। बिन्दुश्च महामायापरपर्यायः। अतः महामायाशब्दः पाशपदार्थान्त-र्भूतमेकमेवावान्तरं तत्त्वं द्योतयति।

अपरञ्च पतिशब्दस्थाने भिन्नेषु स्थलेषु कारणशब्दो यः पाशुपतदर्शने सिद्धान्तशैवदर्शने च साधारण्येन प्रथमतत्त्वार्थे प्रयुज्यते तत्राप्यर्थभेदः। प्रथमे कारणशब्देन प्रधानमीश्वरश्चेत्युभयं गृह्यते, "कारणं प्रधानमीश्वरश्च" इति वचनात्। द्वितीये ईश्वर एवैको गृह्यते, उपादानकारणभूताया मायायाः पाशाभ्यन्तर्गतत्वस्वीकारात्। यतस्तन्नये पाशः मल-माया-कर्म-निरोधशक्ति-विन्दुरूपैः पञ्चविधः।

सिद्धान्तशैवदर्शनं प्रत्यभिज्ञादिदर्शनान्तराभ्युपगतानि षट्त्रिंशत्तत्त्वानि शिवशक्ति सदाशिवेश्वरविद्याः पत्यौ, पुरुषं पशौ, मायां पाशे, मायायां च एकोनत्रिंशत्तत्त्वानि, कलाकालनियतिरागविद्यासहितानि सांख्यप्रसिद्धचतुर्विंशतितत्त्वान्यन्तर्भावयत्स्वीकरोति मोक्षश्चैतद्दर्शने न केवलं दुःखान्तः अपितु आणवकार्ममायीयमलत्रयप्रक्षयादभिव्यक्त सर्वज्ञत्वसर्वकर्तृत्वस्य पशोः शिवसाम्यम्। इदञ्च शैवदर्शननाम्ना सर्वदर्शनसंग्रहे निर्दिष्टम्।

नास्य तामिलशैवसिद्धान्तात्कश्चनभेदः। तामिलशैवसिद्धान्तेऽपि पशुपतिपाशाख्यानि त्रीणि प्रधानतत्त्वानि, षट्त्रिंशदवान्तरतत्त्वानि, मलमायाकर्माख्यास्त्रयो मलाः, शुद्धाशुद्धरूपा द्विविधा सृष्टिः, परापश्यन्तीमध्यमावैखरीरूपा चतुर्विधा वाक्, अष्टाविंशत्यागमानाञ्च प्रामाण्यमूरीक्रियते इति भाषाभावकृतो भेदः। तथ्यन्त्विदं यत् मेखण्डदेवो यः तामिलशैवसिद्धान्तप्रमाणग्रन्थं शिवज्ञानबोधाख्यं व्यलिखत्, सः त्रयोदशशताब्द्यामभवत्, यतः पूर्वं सद्योज्योतिदेवबलभोजाघोरशिवादिभिः बहवः द्वैतशैवसिद्धान्तप्रतिपादनपरा ग्रन्था लिखिताः।

## ( ३ ) द्वैताद्वैतलकुलीशपाशुपतदर्शनम्

लकुलीशपाशुपतदर्शनमीशाद्वितीयशते श्रीमता लकुलीशेन प्रवर्तितमिति तु शिलालेखपुराणप्रमाणैः पूर्वोक्तैर्निश्चीयते। अभिनवगुप्तपादैर्लकुलीशस्य तन्नामविशिष्टपाशुपतदर्शनप्रवर्तकस्य, श्रीकण्ठस्य कलावद्द्वैतागमपुनरुज्जीवकस्य, त्र्यम्बकद्वारा चतुःषष्ट्यागमप्रचारकस्य च सममाप्तत्वं तन्निर्दिष्टमार्गयोश्च सम्यङ्निःश्रेयसप्रदत्वमूरीकृतम्। यथोक्तम् —

द्वावाप्तौ तत्र च श्रीमच्छ्रीकण्ठ लकुलेश्वरौ।
द्विप्रवाहमिदं शास्त्रं सम्यङ्निःश्रेयसप्रदम्॥ (तं० भा० १२, पृ० ३६६)

श्रीकण्ठलकुलीश्वरमार्गयोश्चैतावन्मात्रं वैषम्यं यत्पूर्वस्यभोगमोक्षोभयप्रापकत्वम्, अपरस्य तु मोक्षमात्रदत्वम्। यथोक्तम्—

"प्राच्यस्य तु यथाभीष्टभोगदत्वमपि स्थितम्"। (तत्रैव ३६७ पृष्ठे) अतो लकुलीश-पाशुपतदर्शनस्योत्तमदर्शनत्वम्।

## वेदसंबद्धत्वं लकुलीशपाशुपतदर्शनस्य

लकुलीशपाशुपतदर्शनमूलं तैत्तिरीयारण्यके चत्वारिंशादनुवाकादारभ्य सप्तचत्वारिंशानुवाकपर्यन्तमुपलभ्यते। तत्र पञ्च मन्त्राः सद्यो जातं प्रपद्यामि, वामदेवाय नमः, अघोरेभ्योऽथ घोरेभ्यः तत्पुरुषायविद्महे, ईशानः सर्वविद्यानाम्, इति उपलभ्यन्ते। इमे पञ्च मन्त्राः लकुलीशेन स्वीयपाशुपतसूत्रे क्रमशः पञ्चसु अध्यायेषु पञ्चसु पाशुपतयोग-भूमिकासुक्रमशो ध्येय ब्रह्मस्वरूपनिर्देशपरत्वेन किञ्चित्परिवर्त्य गृहीताः। वस्तुतः पाशुपतसूत्रस्याध्यायपञ्चकविभाग एतन्मन्त्रपञ्चकाश्रित एव। एतदाश्रयेणैव पञ्चकविचारधारास्मिन् दर्शने प्रचलितेति प्रतिभाति। यथा गणकारिकायामष्टपञ्चकप्रतिपादनम्।

## सिद्धान्तशैवलकुलीशपाशुपतदर्शनयोर्भेदः

लकुलीशपाशुपतदर्शने पत्युः कर्मनिरपेक्षं स्रष्टृत्वम्, परं सिद्धान्तशैवदर्शने कर्मानुकूलं तत्। पूर्वस्मिन् सर्वज्ञत्वसर्वकर्तृत्वयोः मुक्ते संक्रान्तिः, अपरस्मिन् तदभिव्यक्तिः। पूर्वस्मिन् पतिः स्वतन्त्रः कर्मनिरपेक्षत्वाद्बाह्योपादाननिरपेक्षत्वाच्च। उपादानकारणस्यापि शक्तिरूपेण तदन्तर्वर्तित्वात्, सर्वस्यापि कार्यस्य विद्याकलापशुरूपस्य पत्युः पृथक्त्वेनाभावात्। परन्तु तत्सृष्टिः नियतकार्यकारणसंबन्धानुसारमेव, अतोऽस्मिन्दर्शने पत्युर्न सर्वथा स्वातन्त्र्यम्, यथा प्रत्यभिज्ञादर्शने। परन्तु सिद्धान्तशैवदर्शने न्यायवैशेषिकयोरिव पत्युः बाह्योपादानकारण-निर्भरत्वं कर्मसापेक्षत्वञ्चेति पतिर्न स्वतन्त्रः।

## पञ्च प्रधानपदार्थाः

द्वैतपाशुपतदर्शनवल्लकुलीशपाशुपतदर्शने कारण(पति)कार्ययोगविधिदुःखान्ताः पञ्च पदार्थाः। पतिरेक एव, कार्यं त्रिविधं विद्याकलापशुभेदात्। कलायां सर्वः कार्यकारण-समूहः अहंकारादिपृथिव्यन्तोऽन्तर्भवति। पशुः पञ्चविधः साञ्जन-निरञ्जन-संहृत-कैवल्यगत-निष्ठायोगयुक्तभेदात्। विद्यापि प्रधानतः द्विविधा, बोधस्वभावा अबोधस्वभावा च। योगश्चेह न चित्तवृत्तिनिरोधमात्रं यथा पातञ्जलदर्शने परन्तु शिवसायुज्यम्। एवञ्च योगो नोपाय-मात्रम् अपि तु यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिरूपोपायाष्टकोपेयः। उपायरूपश्च योगो द्विविधः, क्रियालक्षणः क्रियोपरमलक्षणश्च। प्रथमेन शिवसामीप्यं द्वितीयेन

शिवसायुज्यं प्राप्यते, प्रथमे यमनियमासनानि अन्तर्भूतानि द्वितीये प्राणायामादिसमाध्यन्ताः पञ्च अन्तर्भूताः। दुःखान्तो द्विविधः, अनात्मकः सात्मकश्च। प्रथमः सर्वदुःखोपशमरूपः अपरः शिवसायुज्यम्; यत् स्तम्भनिक्षिप्तायःकीलकवच्छिवे चेतःस्थिरीकरणरूपनिष्ठायोगान्तरं सर्वज्ञत्वसर्वकर्तृत्वशक्तिसंक्रान्तिरूपम्।

## द्वैताद्वैतत्वं लकुलीशपाशुपतदर्शनस्य

पूर्वोक्तपदार्थविवरणादिदं स्पष्टं यल्लकुलीशपाशुपतदर्शनं द्वैताद्वैतदर्शनम्। यत इदं पशोः कार्यत्वेऽपि नित्यत्वं मोक्षस्य च पशुत्वमूलमिथ्याज्ञानाधर्मसक्ति-हेतुच्युतिरूप-पञ्चमलहानानन्तरं शिवेन सम्यग्योगरूपसायुज्यरूपत्वं स्वीकरोति। एवञ्चैतन्नये वेदान्तनय इव न घटे भिन्ने घटाकाशस्य महाकाश इव परिमितात्मनः परमात्मनि विलयः, अपि तु पशोः सद्रूपत्वान्नित्यत्वाच्च मुक्तावपि शिवसायुज्येन सत्त्वम्। अतः

क्रियासंबन्धसामान्यद्रव्यदिक्कालबुद्धयः।
सत्याः स्थैर्योपयोगाभ्यामेकानेकाश्रया मताः॥

इति नयेन संबन्धस्य एकानेकरूपत्वान्मोक्षदृष्ट्या द्वैताद्वैतदर्शनत्वमस्य दर्शनस्य। एवञ्चास्मिन्दर्शने शिव एकः यस्मात् विद्याकलापशुरूपः कार्यसंघः समुद्भवति। यच्चेदं सर्वं सर्वदा आस्ते, सृष्टिश्च वृत्तिलाभरूपा, कार्यत्रयं शक्तिस्थम्, शक्तिश्च सामर्थ्यम् ऐश्वर्यम् स्वगुणसद्भावः सतत्त्वम् तत्त्वधर्मः (पा० सू०, पृ० ५८) इति शिवादभिन्ना। अतः स्वाभिन्नशक्तौ सर्वान्तःकारिणः शिवस्य अवयविन इव एकत्वस्वीकारात्, शिवाद्बहिः स्वतन्त्रस्य कस्यचनाप्यनभ्युपगमात् द्वैताद्वैतदर्शनत्वं लकुलीशपाशुपतदर्शनस्य।

## (४) विशिष्टाद्वैतशैवदर्शनम्

परन्तु शक्तिशक्तिमतोरभेदाभ्युपगमो न न्याय्यः, शक्तेर्गुणत्वस्वीकारादिति मन्वानः ईशैकादशशतजन्मा श्रीकण्ठः स्वीये ब्रह्ममीमांसानाम्नि वेदान्तसूत्रभाष्ये गुणगुणिनोर्नील-कमलयोरिव विशेषणविशेष्यभाव इत्यभ्युपगच्छन् शैवविशिष्टाद्वयमुत्थापयति स्म। अयं मनुते यच्छैवागमवेदयोर्न कश्चित्पारस्परिको विरोधः, उभयोः समं प्रामाण्यम्, उभावपि शिवमुखान्निःसृतौ, इति वेदस्यापि शैवागमत्वम्। परन्तु उभयोः पारस्परिको भेद इयानेव यद्वेदे त्रैवर्णिकस्यैवाधिकारः परन्तु आगमे वर्णजात्यादि-निरपेक्षः सर्वेषामधिकारः। स शैवागमवेदयोर्विरोधंमन्वानः सूचयति यद्

भस्मस्नानत्रिपुण्ड्रधारणादिः शैवाचारोऽथर्वशिरःकालाग्निरुद्रबृहज्जाबालाद्युपनिषत्स्वपि निर्दिष्ट इति। स्वभाष्ये च वेदागमयोरुभयोरपि प्रमाणानि शैवविशिष्टाद्वैत-साधकानि उद्धरति, यान्यवलम्ब्य तत्पश्चाद्भाविना रामानुजाचार्येण स्वीयश्रीभाष्ये वैष्णवविशिष्टाद्वैतं साधितम्।

विशिष्टाद्वैतवादः द्वैताद्वैतवादपश्चाद्भावी। शैवविशिष्टाद्वैतं लकुलीशपाशुपत-द्वैताद्वैतादनन्तरमुद्भूतमिति निर्णीतमेव। वैष्णवविशिष्टाद्वैतस्थापनात्प्राक् रामानुजगुरुणा यादवप्रकाशेन ईशानवमशतजातेन भास्करेण च वैष्णवद्वैताद्वैतवादः स्थापित आसीत्। श्रीकण्ठो मनुते यत् तद्द्वयं यन्मध्यादेकस्य तात्त्विकं ज्ञानमपरेण विना न भवति, यस्य चैकमपरस्वातन्त्र्येण न भवति तद्द्वयं विशेषणविशेष्यभावसंबद्धम्। तत्सिद्धान्ते सर्वेषा-मपि जगद्गतपदार्थानां बीजरूपेण शिवस्य शक्तौ स्थितिस्तत एव चोद्भवः। जगदुद्भवकारिण्याः शक्तेः शिवेन सहाविनाभावसंबन्धः, यतो ब्रह्म शक्तिं विना अग्निरिवौष्ण्यप्रकाशौ विना न शक्यते ज्ञातुम्, अतः शक्तिः शिवस्य विशेषणम्, एवञ्च विशिष्टाद्वयवाद एव साधीयान्।

मोक्षश्चैतन्नये प्रध्वस्ताणवमलस्य अतएवाभिव्यक्तनिरतिशयज्ञानानन्दस्य पशोः शिवसाम्यम्, यस्मिन् रङ्गमञ्चप्रदर्श्यमाननाटकनायकेन सहृदयस्य प्रेक्षकस्येव मुक्तस्य शिव-तादात्म्यम् प्रेक्षकस्य च सत्ता नायके न निमज्जति, यतः नायकतादात्म्यद्वारानुभूतो रसः स्मर्यते। अत एतन्नये शिवसाम्यम्, न शिवमग्नत्वम्, मोक्षः। अन्यत्सर्वं श्रीकण्ठो द्वैतशैव-सिद्धान्तानुसारमेव मनुते।

## (५) शैवविशेषाद्वयवादः वीरशैवमतं वा

विज्जलनामकस्य राज्ञो वसवनाम्ना ब्राह्मणमन्त्रिणा ईशादशमशते प्रचालितं वीरशैवमतम्। वीरशब्दोऽत्रैतिहासिकीं घटनां द्योतयति। भारतेतिहासे चालुक्यवंशः सुप्रसिद्धः। तस्मिन् विक्रमाङ्कदेवो नाम राजा बभूव, यच्चरितं बिल्हणेन विक्रमाङ्कदेवचरिते वर्णितम्। विक्रमाङ्कदेवमृत्योरनन्तरं चालुक्यशक्तिर्ह्रासमगमत्। तस्मिन् वंशे नाम्ना विज्जलः विज्जन इति वा प्रसिद्धोऽत्याचारी राजा बभूव। स निरपराधं शैवसाधुद्वयस्य दृष्ट्युप-घातमकरोत्। तेनात्याचारेण संजातरोषाः शैवाः सत्याग्रहमकुर्वन्। अधारयंश्च शिवलिङ्गानि दक्षिणहस्ते ग्रीवायां शिरसि च। प्रत्येकश्चगुरूपदेशानुसारं प्राणात्ययेनापि शिवलिङ्गरक्षणं प्रतिज्ञातवान्। यथोक्तम्:—

'न त्यज प्राणलिङ्गं त्वं यावज्जीवं प्रतिज्ञया ।' (श्रीकर-० भा०१, पृ० ६२) एवमेतन्मतानुयायिभिर्वीरतापूर्वकं शिवलिङ्गरक्षणादिदं वीरशैवमतमिति प्रसिद्धम्। अस्य महान् प्रचारोऽद्यापि दक्षिणभारते वर्तते । काश्यामप्येतन्मठो जङ्गमवाड़ीति प्रसिद्धोऽद्यापि वर्तते ।

परन्तु वीरशैवमतानुयायिनः वसवस्य वीरशैवमतस्थापकत्वं न स्वीकुर्वन्ति तं तस्य पुनरुज्जीवकमेव मन्यन्ते । इदञ्च मतं समीचीनमेव प्रतिभाति । यतो राजशेखरः स्वीयषड्दर्शनसमुच्चये केचन शैवमतानुयायिनः प्राणलिङ्गानि धारयन्ति स्मेति कथयति । श्रीपतिपण्डितश्च श्रीकरभाष्ये प्राणलिङ्गधारणं सदानन्दोपनिषदि सामजैगीषीयशाखीयायामप्युक्तमिति प्रकटयति ।

अस्य रेणुक-दारुक-'एंकोरम'-पण्डिताराध्य-विश्वाराध्यनामकाः प्रसिद्धाचार्या इति इदं पञ्चाचार्यमतमित्यपि प्रसिद्धम्। दार्शनिकदृष्ट्या विशेषाद्वैतनामा अयं सिद्धान्तः शुद्धाद्वैताद्वैतः सेश्वराद्वैतः शिवाद्वैत इत्यादिनामभिः प्रसिद्धः । भिन्नानि नामानि दार्शनिकतत्त्वं भिन्नदृष्टिकोणेभ्योऽवलोकयद्भिर्दत्तानि । इदं शुद्धाद्वैताद्वैतमतम्, यत एतन्मते शिवे-भक्तिः सायुज्यप्राप्तेर्मुख्य उपायः, भक्तिश्च भक्तभज्यमानयोर्द्वैतमाश्रित्यैव संभवति, इयञ्च यः स्वात्मानमर्पयति यस्मै चार्पयति तयोर्भिन्नां सत्तामपेक्षते । परन्तु भक्तिप्राप्ये सायुज्ये एतन्मते न द्वयोर्भेदेनावस्थितिरपि तु ऐक्येन यथा वारिधिपतितायाः नद्याः वारिध्यैक्येन । अत इदं शुद्धाद्वैताद्वैतमुच्यते । इदं सेश्वराद्वैतम्, यतः परमं तत्त्वमेतन्नये न शून्यप्रायमनिर्वचनीयञ्च, परन्तु सर्वशक्तिमत्, यस्य शक्तौ सर्वं विषयरूपं विषयिरूपञ्च बीजे वृक्ष इवास्ते, यतश्चेदं सर्वमुद्भवति । शक्तिः शक्तिमतो वह्नेर्दाहकत्वशक्तिरिव अभिन्ना । इदं विशेषाद्वैतं वा यत इदं न शाङ्करवेदान्तवन्निर्विशेषाद्वैतं स्वीकरोति, अपि तु निर्गुणब्रह्मवादं खण्डयित्वा सगुणब्रह्मवादं स्थापयति । इदं विवर्तवादम्, व्यावहारिकपारमार्थिकसत्तयोर्भेदम्, मोक्षस्य शून्यत्वमभावरूपत्वं वा तीक्ष्णं समालोचयति । श्रीपतिपण्डितः स्वीयश्रीकरभाष्ये (पृ० १३६, भा० २) विशेषपदमेवं निरवोचत् :—

"विश्च शेषश्च 'विशेषौ' तयोरद्वैतं विशेषाद्वैतम्...अद्वैतपदेन भ्रमरकीटवज्जीवस्य स्वाभाविकभेदनिवृत्तिरुपपाद्यते ।"

इदं शिवाद्वैतवाददर्शनम्, यत एतन्नये अन्तःकृतानन्तविश्वरूपः शिवः परं तत्त्वम्, यः स्वेच्छया स्वस्मिन् जगदुद्भावयति, उद्भूतमपि जगत् यदन्तरेवावतिष्ठते, इति न शिवाद्बहिः किञ्चिदपि । इदं वीरशैवमतं दार्शनिकदृष्ट्येत्थम् :—

विशब्देनोच्यते विद्या शिवजीवैक्यबोधिका ।
तस्यां रमन्ते ये शैवा वीरशैवास्तु ते मताः ॥
विशब्दो वा विकल्पार्थो रशब्दो रहितार्थकः ।
विकल्परहितं शैवं वीरशैवं प्रचक्षते ॥

अन्यत्सर्वं तत्त्वमलादिस्वरूपं सिद्धान्तशैवदर्शनवत् ।

## (६) नन्दिकेश्वरस्य शिवाद्वैतवादः

उपमन्युः स्वीयनन्दिकेश्वरकाशिकाटीकायां नन्दिकेश्वरविषय एवं लिखति :—

"इह खलु सकललोकनायकः परमेश्वरः...नन्दिकेश्वरपतञ्जलिव्याघ्रपादवशिष्ठादीनुद्धर्तुकामो डमरुनिनादव्याजेन चतुर्दशसूत्रात्मकं तत्त्वमुपदिदेश । तदनु सर्वे मुनीन्द्राश्चिरकालमाश्रितानामस्माकं तत्त्वं चतुर्दशसूत्रात्मकमुपदिदेशेति मत्वा अस्य सूत्रजालस्य तत्त्वार्थं नन्दिकेश्वरो जानातीति "नन्दिकेश्वरं प्रणिपत्य पृष्टवन्तः...इत्यादि" । अत्र इदं निश्चीयते यन्नन्दिकेश्वरः पाणिनिसमकालीनः, एवञ्चैतिहासिकदृष्ट्या ईशापूर्वचतुर्थशते समभवत् । पतञ्जलिरपि महाभाष्ये नन्दिकेश्वरकृतं "अइउण्" आदि चतुर्दशसूत्राणां दार्शनिकव्याख्यानमनुसरन् महेश्वरोक्तमक्षरसमाम्नायं ब्रह्मराशित्वेन अमन्यत । यथोक्तम् ।

"सोयमक्षरसमाम्नायो...ब्रह्मराशिः"

कैयटश्च स्वप्रदीपे ब्रह्मराशिशब्दं ब्रह्मतत्त्वमिति व्याचख्यौ । नागेशभट्टश्चोद्योते ब्रह्मतत्त्वशब्दव्याख्यां कुर्वन् नन्दिकेश्वरकाशिकायाः

"अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः"

इति कारिकार्धमुद्ध रतिस्म । अतो नन्दिकेश्वरकृतत्वं कारिकाणां नन्दिकेश्वरस्य च पाणिनिसमकालत्वं निर्विवादम् ।

### नन्दिकेश्वराद्वैतशैवदर्शनस्य महत्त्वम्

नन्दिकेश्वरः स्वातन्त्र्यवादं प्रतिपादयति । यथोक्तम् :—

"स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मीलयत्यसौ" इति ।

एतदनुसृत्यैवोक्तवान् क्षेमराजः स्वीयप्रत्यभिज्ञाहृदये :—

"स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" इति ।

इह न केवलं विचारसाम्यमपि तु शब्दसाम्यमपि। एवञ्चेदं स्पष्टीभवति यत्स्वातन्त्र्यवादो यः पाश्चात्यदेशेषु शोपेन्हवरादिभिः ईशाष्टादशशते समुत्थापितः स भारते ईशापूर्वचतुर्थशते आसीत्। अस्यानुसरणं भारते द्वैताद्वैतवादिना लकुलीशेन ईशाद्वितीयशते कृतम् :—

"सार्वकामिक इत्याचक्षते"

इत्यस्मिन्सूत्रे यथा कौण्डिन्येन स्पष्टीकृतम् :—

"कामिक इत्यत्रापि न त्रिकं चिन्त्यते कामी कामः काम्यमिति। कामी ईश्वरः, कामोऽस्येच्छा, काम्यं विद्यादिकार्यम्, तदक्रमेण क्रमशो वा यथेष्टमुत्पादयति। कस्मात्? कामित्वात्। अकर्मापेक्षित्वं चास्यात एव सिद्धम् (पा० सू०, पृ० ६०) इदमेव च काश्मीरे अद्वैतशैवदर्शनप्रतिपादकैः सोमानन्दोत्पलाभिनवक्षेमराजादिभिः स्वातन्त्र्यवादाधारत्वेन गृहीतमित्यैतिहासिकदृष्ट्याभाति।

आभासवादोऽपि नन्दिकेश्वरमूलक एव। यतो यद्यपि नन्दिकेश्वरकाशिकायाम्

"ॠलृक् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत्।
तामेव वृत्तिमाश्रित्य जगद्रूपमजीजनत्॥"

इत्यत्र "अजीजनत्" शब्द उपलभ्यते, तथापि न भ्रमितव्यं यदिदं द्वैतदर्शनम् इति। यत उपमन्युना "जन्यजनकत्वञ्च स्वस्यैव तद्रूपेण वर्तमानत्वादिति नाद्वैतहानिः" इति वदता द्वैतभ्रमो निरस्तः। नन्दिकेश्वरो जगतो ज्ञप्तिमात्रत्वं परमात्मैक्यत्वञ्चामन्यत इति नाद्वैतलेशोप्यस्मिन् सिद्धान्ते।

नन्दिकेश्वरसिद्धान्ते "अइउण्" सूत्रव्याख्यानुसारं निर्गुणं ब्रह्म अकारनिर्दिष्टम् चित्कलया 'इ' अक्षरनिर्दिष्टया सर्वान्पदार्थान्, पश्यन्तीमध्यमावैखरीरूपास्तिस्रो वाचः सर्वाण्यक्षराणि च भासयति। जगदाद्याभासयच्च ब्रह्म ईश्वर इत्युच्यते। आभासने ब्रह्मचित्कलाद्वयस्वीकारेऽपि नन्दिकेश्वराद्वैतसिद्धान्तस्य तादवस्थ्यम् "ॠलृक्" सूत्रव्याख्याने साधितम्। ब्रह्मचित्कलयोर्मनस्तद्वृत्तिसाम्यस्वीकारात्, वृत्तिवृत्तिमतोश्च चन्द्रचन्द्रिकयोरिव वागर्थयोरिव वा अभेदस्वीकाराच्च।

इदमत्रावधेयम्। नन्दिकेश्वरः परां स्वीकरोति। यथोक्तम् :—

"सर्वं परात्मकं पूर्वं वृत्तिमात्रमिदं जगत्" इति।

## आगमदर्शनविमर्शः

एतन्मते षट्त्रिंशत्तत्त्वानि—शिवशक्तीश्वररूपं त्रयम्, सांख्यस्वीकृतानि पञ्चविंशति-तत्त्वानि, प्राणादिपञ्चकम्, गुणत्रयञ्च सम्मेल्य स्वीक्रियन्ते। परः शिवस्तु षट्त्रिंश-त्तत्त्वोत्तीर्णः।

स्वातन्त्र्यवादः, आभासवादः, शक्तिशक्तिमतोरभेदाभ्युपगमः, वाक्चतुष्टयस्वीकारः, षट्त्रिंशत्तत्त्वानि, तत्त्वोत्तीर्णः परः शिवः, इत्येतेष्वंशेषु काश्मीरशैवाद्वैतवादेन सहास्य दर्शनस्य बहुसाम्यम्। परन्तु तत्त्वसंख्यासाम्येऽपि कानिचित्तत्त्वानि काश्मीरिकैर्न स्वीक्रियन्ते। तत्त्वाष्टके भेदः। नन्दिकेश्वरमते पञ्चप्राणास्त्रयो गुणाश्चेति तत्त्वाष्टकम्। तत्स्थाने काश्मीरिकैः कलानियतिरागविद्याकालाख्यानि पञ्च सदाशिव-शुद्धविद्या-मायाख्यानि त्रीणि च स्वीक्रियन्ते।

### (७) रसेश्वरदर्शनम्

रसेश्वरदर्शनन्तु विज्ञानप्रधानम्। दार्शनिकांशाश्च शक्तिपात-पाश-'ईश'-सदाशि-वादय इतरशैवदर्शनसाधारणा इति तन्नेह विचार्यते विस्तरतः। केवलं जीवन्मुक्तिविषये एतद्वक्तव्यं यत् शोधितपारदोपयोगेनाजरामरदेहावाप्तिः, एवञ्च "अजरामरदेहस्य शिवतादा-त्म्यवेदनम्" जीवन्मुक्तिः।

## त्रीणि काश्मीरिकाण्यद्वैतदर्शनानि

प्रथमं जगदीशचन्द्रचटर्जीमहोदयैराङ्ग्लभाषायां प्रत्यभिज्ञादर्शनं व्याख्यातम् स्वीये "काश्मीर शैवइस्म" इति नाम्नि पुस्तके। ततः प्रभृति साधारणा जनाः कश्मीरे एक-मेव दर्शनं समुदभवदिति साधारण्येनाभ्युपजग्मुः। परन्तु पञ्चत्रिंशद्वर्षपर्यन्तं शैवागमदर्शना-न्यधीयानस्य मम त्रीणि काश्मीरिकशैवदर्शनानि दृष्टिपथमायातानि, क्रमदर्शनम्, कुलदर्शनम् प्रत्यभिज्ञादर्शनञ्चेति। एषां दर्शनानामितिहासाः, तत्त्वानि, गुरुपरम्पराः, दार्शनिकपुस्तकानि, उपायाश्च पृथक् पृथगेव सन्ति, तथापि बहुष्वंशेषु एषां समानता पारस्परिकः संबन्धश्च नूनं विद्यत एव।

### (८) क्रमदर्शनम्

क्रमदर्शनस्य बहूनि नामान्युपलभ्यन्ते। इदं क्रमदर्शनमित्युच्यते यतो विकल्पसंस्कार एव एतन्नये परतत्त्वसाक्षात्कारोपायः। स च क्रमेण भवति। यथोक्तम्:—

विकल्पः संस्कृतः सूते विकल्पं स्वात्मसंस्कृतम् ।
स्वतुल्यं सोऽपि सोऽप्यन्यं सोऽप्यन्यं सदृशात्मकम् ॥
चतुर्ष्वेव विकल्पेषु यः संस्कारः क्रमादसौ ।
अस्फुटः स्फुटताभावी प्रस्फुटन् स्फुटतात्मकः ॥
ततः स्फुटतरो यावदन्ते स्फुटतमो भवेत् ।
ततः स्फुटतमोदारतादात्म्यपरिबृंहिताम् ॥

संविदभ्येति विमलामविकल्पस्वरूपताम् । ( तं० आ०, भा० ३, पृ०–२-६ ) इदं कालीनय इत्यपि प्रसिद्धम्, यत एतन्नये काली एव परं तत्त्वम्, या च्चेपज्ञानप्रसंख्यानगति-नादरूपां पञ्चविधां कलनां करोति । काल्या देवीरूपत्वादिदं देवीनय इत्यप्युच्यते । इदं महानय इति अतिमार्ग इति वा नाम्ना तन्त्रालोकटीकायामुद्धृतश्लोकयोर्निर्दिष्टम्, यथा "सन्ततयोऽतिनयस्य" "प्रकृतमहानयशिष्याः" इति च । (तं० आ० भा० ३ पृ० १९५)

## क्रमदर्शनोद्भवः

आगमिकमिदं दर्शनमिति धार्मिकदृष्ट्या शिवादेवास्योद्भवः स्वीक्रियते । परन्तु ऐतिहासिकदृष्ट्या इदं दर्शनं कश्मीर उद्भूतम् । प्रत्यभिज्ञादर्शनस्य सोमानन्दकृतत्ववत् क्रमदर्शनस्यापि शिवानन्दकृतत्वं स्वीक्रियते । शिवानन्दः सोमानन्दात्पूर्वभावी । यतः शिवानन्दः सोमानन्दस्य परमेष्ठिगुरुरासीत् । शिवानन्देन तिस्रो योगिन्यः क्रमदर्शनाशिक्षिताः ताभिश्चबह्वः शिक्षिताः, येष्वेको गोविन्दराजाभिधानोऽभवत् यः सोमानन्दं क्रमदर्शन-मध्यापयत् । यथोक्तम् :—

'गोविन्दराजाभिधानः' 'श्रीभानुकाभिधानो' द्वितीयः श्रीमान् 'एरक' समाख्यः तृतीयः । सममेवोपदेशं पीठेश्वरीभ्यः उत्तरपीठलब्धोपदेशात् श्रीशिवानन्दनाथाद् लब्धानुग्रहाभ्यः श्री-केयूरवतीश्रीमदनिकाश्रीकल्याणिकाभ्यः प्राप्नुवन्तः... सच्चेदं रहस्यं श्रीसोमानन्दाभिधानाय गुरवे संचारयांबभूव । ( तं० आ० भा० ३ पृ० १९२ )

अभिनवगुप्ताचार्याणां जीवनसमयः क्रमस्तोत्रस्य, भैरवस्तवस्य, ईश्वरप्रत्यभिज्ञा-विवृतिविमर्शिन्याश्च समापनतिथीनां तेनैव दत्तत्वाद् ईशादशमशतमध्याद् एकादशशताद्य-चतुर्थभागपर्यन्तमासीदित्यत्र न कोऽपि विवादः । सोमानन्दश्च तस्य परमेष्ठिगुरुरासीदिति नवमशते समभवदित्यूरीकर्तव्यमेव । क्रमदर्शनप्रवर्तकः शिवानन्दः सोमानन्दस्य परमेष्ठिगुरु-

रासीदिति स सप्तमशतान्तेऽष्टमशतप्रारम्भे जीवतिस्मेति निश्चीयते। अतः क्रमदर्शनसमुद्भवः कश्मीरे सप्तमशतान्तेऽष्टमशतप्रारम्भे वा समभवदिति निश्चीयते।

## क्रमदर्शनग्रन्थाः

क्रमदर्शनम् क्रमसद्भाव-क्रमसूत्र-क्रमोदय-पञ्चशतिक-क्रमस्तोत्र-महानयप्रकाश-क्रमकेलि-क्रमवासना-ऋजुविमर्शिनी-महार्थमञ्जर्यादिग्रन्थेषु सम्यक् प्रतिपादितम्।

## क्रमदर्शनस्य द्वे परम्परे

क्रमदर्शनस्य द्वे परम्परे आस्ताम्। एकस्यां शिवः परं तत्त्वम्, अपरस्यां काली कालसंकर्षिणीत्याद्यपराभिधाना तथा। परन्तु परमतत्त्वस्वरूपे न कोपि भेदः। उभे अपि तस्य प्रकाशविमर्शरूपत्वं सर्वाभासकत्वं सर्वव्यापित्वमभ्युपागच्छताम्। इमे परम्परे आगमेष्वपि स्तः, यतः केषुचनागमेषु शिवो वक्ता अपरेषु पार्वती, देवी भैरवी वा।

परन्तु सोमानन्दः "स्त्रीलिङ्गस्य पुंल्लिङ्गविशेषरूपत्वम्" इति वैयाकरणमतं स्वीकुर्वन् शक्तेः स्त्रीलिङ्गत्वेन शिवस्यैव विशेषरूपत्वाद् एवञ्च तदाश्रितत्वात् तस्याः परतत्त्वत्वस्वीकारो न युक्तियुक्त इति वदन् क्रमदर्शनेऽपि शिव एव परं तत्त्वमिति मन्यते, वक्ति च यत् शक्तेः परतत्त्वत्वस्वीकारे शक्तौ भक्त्यतिशय एव कारणम्।

अभिनवगुप्तपादानामस्मिन्विषये सोमानन्दान्मतभेदः। स स्वीये तन्त्रालोके क्रमदर्शनं प्रतिपादयन् परासंविद्रूपायाः काल्या एव परमतत्त्वत्वमभ्युपगच्छति। चर्यायां च क्रमदर्शनानुयायिभिः शाक्तसंप्रदाय एव स्वीक्रियत इति मद्यमांसमैथुनरूपमकारत्रयोपयोगात्सुस्पष्टम्। मकारत्रयोपयोगे न कश्चनाधर्मः, धर्माधर्मयोरुद्देश्याश्रयत्वात्, उपयुज्यमानवस्त्वाश्रयत्वाभावच्चेति सवत्र स्वीकारात्।

## क्रमदर्शनं पञ्चार्थक्रमः

महेश्वरानन्दः क्षेमराजमनुसरन् क्रमदर्शनम् "पञ्चार्थक्रमपदवी" इति कथयति। एवञ्च परमेश्वरस्य स्फुरणधारा व्योमेश्वरी-खेचरी-दिक्चरी-गोचरी-भूचरीरूपाः पञ्च। तस्य सृष्टि-स्थिति-संहारअनाख्यभासारूपाः शक्तयः पञ्च। परा-सूक्ष्मा-पश्यन्ती-मध्यमा-वैखरीरूपा वाचः पञ्च। ध्येयानि श्रीपीठः पञ्चवाह-नेचत्रय-वृन्दचक्र-गुरुपङ्क्तिरूपाणि पञ्च। परमशिवतादात्म्येन सत्यः चिद्-आनन्द इच्छा-ज्ञान-क्रियारुपाः शक्तयोऽपि पञ्च।

## काली परं तत्त्वम्

कालीशब्दः कल क्षेपे, कल गतौ, कल संख्याने, कल शब्दे, इतिधातुचतुष्टयान्निष्पद्यते। एवञ्च धात्वर्थानुसारं काली सा या स्वान्तर्वर्तिभावजातं बहिः क्षिपति आभासयति वा, या बहिरवभासितमपि भावजातं स्वाभिन्नं मनुते, या अवभासितभावजातमध्यात्प्रत्येकं सर्वेभ्योऽपरेभ्यः पृथक्त्वेन भासयति, या अवभास्यमानं दर्पणेन प्रतिबिम्बमिव स्वया संबद्धमेव भासयति। या सर्वविलयं कृत्वा शुद्धस्वरूपेण नादमात्रेण भाति। इमानि पञ्च कृत्यानि कुर्वती काली मातृसद्भावनाम्नापि गीयते।

## (६) कुलदर्शनम्

क्रमदर्शनस्य कुलदर्शनेन सह महत्साम्यं घनिष्ठश्च संबन्धः। अतः अभिनवगुप्तपादैः क्रमदर्शनस्य कुलदर्शनसोदरत्वं प्रतिपादितम्। कुलदर्शनस्योद्गमःईशापञ्चमशते मीनापरनाम मच्छन्दमुखादभवदिति तन्त्रालोकादवगम्यते कुलप्रक्रियायाः प्रक्रियान्तरेभ्यः प्राधान्यात्।

यथोक्तम्—"भैरव्या भैरवात्प्राप्तं योगं व्याप्य ततः प्रिये।
तत्सकाशात्तु सिद्धेन मीनाख्येन वरानने॥
कामरूपे महापीठे मच्छन्देन महात्मना।

इत्यादिनिरूपितस्थित्या तदवतारकं तुर्यनाथमेव तावत्प्रथमं कीर्तयति।" इदं तु सुविदितम् यद् अद्वैतागमानां प्रचारः त्र्यम्बकेण ईशाचतुर्थशते कृतः, यतः त्र्यम्बकवंशोद्भूतः सोमानन्दः ईशानवमशते समभवत्, त्र्यम्बकाच्च सन्ततिक्रमे सोमानन्दः षोडश आसीद् इति शिवदृष्टौ सोमानन्देन स्वयमेवोक्तम्। कुलदर्शनोद्भवश्च त्र्यम्बकस्य दुहितृवंशे अजायत, अतएवास्य अर्धत्र्यम्बक इति नामापि तु प्रसिद्धम्। एवञ्च दुहितृवंश्यः कुलदर्शनोत्थापकः मच्छन्दः इति सिद्ध्यति। अभिनवगुप्तश्च कौलगुरुपरम्परायां मच्छन्दाद्विंशतितम आसीदिति तन्त्रालोके स्पष्टम्। एवञ्चैतिहासिकमतानुसारेण प्रत्येकं गुरोः पञ्चविंशतिवर्षीयश्चेत्कालोऽभ्युपगम्यते मच्छन्दविभुः अभिनवगुप्तात्प्रायः पञ्चशतवर्षात्प्रागभवदित्यायाति। ततश्च कुलदर्शनोद्भव ईशापञ्चमशतेऽभवदिति निश्चीयते।

## कुलशब्दार्थः

कुलशब्दः कुलसंस्त्याने बन्धुषु च इति धातुपाठानुसारं संस्त्यानार्थकाद् बन्ध्वर्थकाच्च कुलधातोः "इगुपधज्ञाप्रीकिरः कः "इति पाणिनिसूत्रानुसारं कप्रत्ययान्तान्निष्पद्यते। अयं शब्दः चतुर्दशस्वर्थेषु प्रयुक्त उपलभ्यते।

( १ ) कुलं स्थूलसूक्ष्मपरप्राणेन्द्रियभूतादिसमूहात्मतया कार्यकारणभावाच्च।

( २ ) कुलं बोधस्यैव आश्यानरूपतया यथाऽवस्थानाद् बोधस्वातन्त्र्यादेव चास्य बन्धाभिमानात् ( प० त्रि० पृ० ३२-३ )।

( ३ ) परमेश्वरस्य भैरवभानो रश्मिचक्रात्मकं निजभासास्फारमयं कुलम् (पृ० ३५)

( ४ ) यत्रोदितमिदं चित्रं विश्वं यत्रास्तमेति च।
तत्कुलं विद्धि सर्वज्ञ शिवशक्तिविवर्जितम्॥

( ५ ) कुलस्य शाक्तप्रसरात्मनो जगतः ( तं० आ० ३ पृ० ७६ )।

( ६ ) कुलञ्च परमेशस्य शक्तिः सामर्थ्यमूर्ध्वता।
स्वातन्त्र्यमोजो वीर्यञ्च पिण्डः संविच्छरीरकम् ( तं० आ० २९ पृ० ३-४ )

( ७ ) कुले शिवशक्त्यात्मनि ( प० त्रिं० पृ० ३६ )

( ८ ) कुलस्यान्तः पृथिव्यादीनि यावद् ब्रह्मपञ्चकम् (प० त्रि० २०८)

( ९ ) कुलपदमनाख्यम्। ( तं० आ० १ पृ० १८ ) इत्यादि।

## कुलदर्शनदार्शनिकतत्त्वम्

कुलदर्शनम् अद्वैतदर्शनम्। अत्र दक्षिणवाममार्गयोः सामञ्जस्यम्। वाममार्गे शक्तेः प्राधान्यम्, दक्षिणे शिवस्य। इह तु तयोः सामञ्जस्यम्। अपरदर्शनेभ्योऽस्य वैलक्षण्यमस्मिन्नंशे यद् वेदान्तादिदर्शनानि मोक्षार्थं विषयभोगस्य सर्वथा त्यागमुपदिशन्ति, मोक्षं भोगविरुद्धं मन्यन्ते। अत्र तु दर्शने भोगो मोक्षोपायत्वेन प्रदश्यते। अयं विचारोऽभिनवगुप्तचित्रे प्रतिबिंबितः। यथा नन्दिकेश्वरः शिवोक्तं चतुर्दशसूत्रग्रथितमक्षरसमाम्नायं दार्शनिकरीत्या व्यवृणुत तथा कुलदर्शने देवनागरीलिप्यक्षराणि दार्शनिकतत्त्वनिर्देशपरत्वेन व्याख्यातानि। तानि च नियतिरागरहितानि प्रत्यभिज्ञादर्शनोक्तानि षट्त्रिंशत्तत्त्वानि। परन्त्विदं प्रत्यभिज्ञादर्शनास्वीकृतम् अनुत्तरं नाम परं तत्त्वं मन्यते। इदमेव स्वीकृत्याभिनवगुप्तपादैः प्रत्यभिज्ञादर्शनविवरणे सप्तत्रिंशत्तत्त्वानि प्रदर्शितानि। परा चास्मिन्दर्शने न

केवलं वाक्चतुष्टये प्रथमा अपितु इच्छाज्ञानक्रियारूपाणां तिसृणां शक्तीनामीशिकापि। एतदाश्रित्यैव कुलदर्शनप्रधानपुस्तकस्य परात्रिंशिका परात्रीशिका इति च नाम।

## (१०) प्रत्यभिज्ञादर्शनम्

प्रत्यभिज्ञादर्शनम् कश्मीरे ईशानवमशते सोमानन्देन निजशिवदृष्टौ प्रथमं स्थापितम्। तच्च उत्पलाचार्येण ईश्वरप्रत्यभिज्ञाकारिकायां तद् वृत्तौ विवृतौ च प्रतिबिंबितम्। अभिनवगुप्ताचार्येण कारिकायाः विवृतेरुपरि च लघ्वीविमर्शिनी बृहती विमर्शिनीति नाम्न्यौ द्वे टीके क्रमशः लिखिते। इमे एव प्रत्यभिज्ञादर्शनप्रतिपादकाः मुख्याः ग्रन्थाः। यथोक्तं मधुराजयोगिना स्वं यशास्त्रपरामर्शे :—

सूत्रं वृत्तिर्विवृतिर्लघ्वीबृहतीत्युभे विमर्शिन्यौ।
प्रकरणविवरणपञ्चकमितिशास्त्रं प्रत्यभिज्ञायाः॥

इदञ्च पद्यं माधवेन स्वीयदर्शनसंग्रहे उद्धृतम्।

प्रत्यभिज्ञादर्शनं तर्कप्रधानम्। अस्मिंस्तर्केणेदं साधितं यदेतद्दर्शनाभ्युपगतषट्त्रिंशत्तमतत्त्वस्य शिवापरपर्यायस्य ज्ञानस्मृत्यपोहनशक्तिमतो महेश्वरस्य अस्वीकारे सांसारिकः कश्चनापि व्यवहार एव न संभवति। एतन्नये महेश्वरः सर्वमाभासयति, आभास्यमानं सर्वं महेश्वर एव तिष्ठति अन्ते च तस्मिन्नेव प्रलयं गच्छति। यथोक्तम्:—

यस्मिन्सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यः।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः॥

स च स्वन्त्रः, स्वातन्त्र्यादेव सर्वं निरुपादानं स्वतोऽभिन्नमपि स्वतो भेदेन योगी अर्थजातमिव स्वेच्छयाऽवभासयति। यथोक्तम्:—

चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद्बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत्॥ इति।

यद्यपि उत्पलाचार्येण षट्त्रिंशत्तत्त्वान्येव स्वीकृतानि तथापि कुलदर्शनप्रभावितेनाभिनवगुप्तेन सप्तत्रिंशः परः शिवोऽपि स्वीकृतः। अस्मिन् दर्शने बौद्धदर्शन इव क्षणिकवादः स्वीक्रियते परन्तु क्षणिकपदार्थाधारभूतो नित्यः शिवोऽपि स्वीक्रियते। अस्मिन्दर्शने वेदान्तदर्शन इव मायाभ्युपगम्यते, परं न सा सदसद्भ्यामनिर्वचनीया अपि तु शिवस्य शक्तिः। इदं दर्शनं शङ्कराचार्योऽप्यनुसरतिस्म यथा स्पष्टंभवति दक्षिणामूर्तिस्तोत्रे सुरेश्वराचार्यकृतायां तट्टीकायाञ्च। इदमस्माभिः अभिनवगुप्तनाम्नि स्वपुस्तके सुविवेचितम्। (पृ० ८६-७)

## आगमदर्शनविमर्शः

### शैवागमदर्शनप्रभावः

प्राचीनवैयाकरणदार्शनिकैर्भर्तृहरिप्रभृतिभिः

"वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥

इत्यादिस्थलेषु सोमानन्दानुसारं वाचस्त्रित्वमात्रस्वीकारेऽपि अर्वाचीनैर्वैयाकरणदार्शनिकैर्नागेशभट्टप्रभृतिभिः पश्यन्त्यूर्ध्वं परा मन्यते चतुष्ट्वं च वाचः प्रतिपाद्यते सोयं शैवागमदर्शनप्रभावः । अभिनवगुप्तस्य रससिद्धान्तः सर्वैस्तदनन्तरभाविभिर्मम्मटादिभिः स्वीकृतः सोऽपि प्रत्यभिज्ञादर्शनाश्रितः ननु वेदान्ताश्रितः । यथोक्तमभिनवगुप्तपादैः स्वयमेव ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्याम् चमत्कृत्यर्थं व्याख्यायमानैर्यथा :—

"निर्विघ्नास्वादरूपा च रसना । तद्गोचरीकार्याः चित्तवृत्तयो रसा नवेति अयमर्थोऽभिनवभारत्यां नाट्यवेदविवृतौ वितत्य व्युत्पादितोऽस्माभिरिति तत्कुतूहली तामेवालोकयेदिह तु प्रकृतविघ्नकारित्वान्न विवृतः । तस्मादुपचरितस्य स्वसंवेदनरूपतानान्तरीयत्वेनावस्थितस्य स्वतन्त्रस्यैव रसनैकघनतया परामर्शः परमानन्दो निर्वृतिश्चमत्कार उच्यते ।"

( भा० २ पृ० १०८-९ )

आगमदर्शने सर्वेषां दर्शनान्तराणां यथोचितानि स्थानानि तेषु तेष्वागदर्शनस्वीकृतेषु निर्दिश्यन्ते । यथोक्तं प्रत्यभिज्ञाहृदये—

"तद्भूमिकाः सर्वदर्शनस्थितयः ।"
बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वेवार्हताः स्थिताः
स्थिता वेदविदः पुंसि अव्यक्ते पाञ्चरात्रिकाः ॥ इत्यादि

इत्यतीवविशालं प्रभावकञ्चागमदर्शनं बहुकालादुपेक्षितं पुनरपि विदुषां मनांस्याकर्षयतीत्यनुभवन्नतीव मुदितोऽहं विरमामि कामयमानः सर्वतोमुखं साफल्यमस्याः परिषदः ।

॥ इति शिवम् ॥

# वेदान्तदर्शनविमर्शः

पण्डितश्रीरघुनाथशर्ममहोदयानाम्

यतः समुद्भूतमिदं स्थितं यत्र ततः परम् ।
यस्मिन्नन्ते लयं याति तस्मै मे सततं नमः ॥१॥
द्वैतमद्वैतमद्वैतद्वैतं यद् गौरभीप्सितम् ।
दुग्धा दुग्धं सुगोपालैस्तस्मै व्यासाय मे नमः ॥२॥
वंशीवाचौ सदा वक्त्रे रागवैराग्यसम्भृते ।
यद्वक्त्रे संप्रभासेते तस्मै कृष्णाय मे नमः ॥३॥

अयि चतुर्विभागवत्या दर्शनपरिषदश्चतुराध्यक्षाः श्रीसम्पूर्णानन्दमहाभागाः, समेषु संस्कृतविश्वविद्यालयाधिकृतेषु आप्रस्तोतृप्राध्यापकम् आप्रेष्यं च समदृष्टयः, शमदमश्रद्धातितिक्षासम्पन्नाः, अर्थोपरतिसर्वजनवित्तसर्वविषयविरागाः, विद्याधिकार-सम्पन्नाः, श्रद्धेयाः, उपकुलपतिमहाभागाः, सकलदुरवगाहदर्शनाम्भोधिमज्जनसमुन्नीत-तत्त्वरत्ना विदुषां शिखामणयः, अन्ये च दर्शनतत्त्वदर्शनबद्धश्रद्धाः श्रावकाः, दर्शनेषु विनेयाश्च विद्यार्थाः !

अद्य आधिभौतिकविविधविज्ञानवादभूतवादविमोहिते लोके अज्ञाननिबिड-तमश्छन्ने चाध्यात्मिकविज्ञाने परीक्षणायापि समुपेक्षितेषु आर्षदृष्टिप्रभवेषु अवितथेषु पुराणेषु, दर्शनेषु, सर्वतः प्रचरत्सु पाश्चात्त्यविविधवादानुप्राणितेषु अनागमतर्कमात्र-निबन्धनेषु स्वेच्छादर्शनेषु, भवतां वेदान्तदर्शनपरिषदि समवेतानाम् अभिरुचिम् उपस्थितिं च समवेक्ष्य मोमुद्यमानमानस आयत्यामपि आध्यात्मिकविज्ञानस्य तत् प्रसुवानानां वेदान्तदर्शनानां चाभ्युदयं भाविनं समवेक्षे । अहं चाशैशवाद् वार्द्धकं यावद् दर्शनतत्त्वानि पर्येषमाणो विषीदँश्च, लोकवृत्तेषु असंस्तुतोऽस्मिन् वेदान्तदर्शनसमुत्थान-समीक्षाकर्मणि वेदान्तदर्शनपरिषद आध्यक्ष्यं कर्तुं यन्नियुक्तस्तं दुर्विषहं भारं वोढुमक्षमोऽपि भवतामादेशाद् उद्विवक्षुरस्मि ।

भवतश्च महान्तं क्लेशमुरीकृत्य अहातव्यं च कर्तव्यजातमवधीर्य वेदान्त-दर्शनपरिषदि महतोत्साहेन सङ्गतान् भूयो भूयो भूयोभिः सहार्दैः साधुवादैः सम्प्रार्थ्य किञ्चिद् निविवेदयिषामि ।

अस्या वेदान्तदर्शनपरिषदो लक्ष्यं वेदान्तसिद्धान्तानां लोके प्रचारप्रसाराभ्यां सर्वप्राणिषु समत्वदृष्ट्या सहजस्नेहसमुद्भावनद्वारा एककुटुम्बीकरणेन रागद्वेषतन्मूलक-हिंसास्तेयपराभिद्रोहकलहादीनां जगद्दुःखबीजानां निवृत्तिसम्पादनम् । साम्प्रतं प्रतिदिशं दरीदृश्यमानस्य लोभमूलकस्य निरवधेरर्थासन्तोषस्य तत्परिणामभूतस्य च महतो दारिद्र्यस्य महतोऽन्नवस्त्रसङ्कटस्य कृत्रिमस्य समाधानसम्पादनम्, तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादिश्रुतिभ्यः । यत एकत्वदृष्टौ सत्यां न कस्यापि शोकमोहौ सम्भवतः ।

इयमेव च श्रुतिप्रतिपादिता तत्तद्वेदान्तैर्विविधरूपेण व्याख्याता सर्वप्राणिषु एक-त्वदृष्टिः, समत्वदृष्टिः, अविभक्तत्वदृष्टिः, सर्वप्राणिषु समवस्थितसर्वेश्वरदृष्टिः, एतद्-दृष्टिप्रचयमूलिका च सर्वप्राणिषु विषमसंविभागदृष्टिश्च वेदान्ताध्ययनस्य परमं प्रयोजनं शान्तिसौख्यस्य, सन्तोषसौख्यस्य अनुत्तमस्य, परसौख्यस्य च नित्यस्य स्वरूपभूतस्य परमं प्राप्तिसाधनम् । साम्प्रतञ्च जगति महान् कोलाहलः श्रूयते भीष्मो हृदयदारणः । तथा हि—क्वचिद् देशसीमानो भज्यन्ते, क्वचित्परायत्तदेशेषु स्वातन्त्र्यमभिलष्यन्तो निर्दयं रहसि अविज्ञातं हन्यन्ते, क्वचित् शासनाधिकृता राष्ट्रसमितिश्छद्मना विघट्यते, क्वचिद् भीषणानि तोप्यास्त्रगोलकानि भूयांसि भूमियोजनानि महागर्तयितु तत्रत्यांश्च प्राणिनश्चराचरान् महाप्रलयं साक्षात्कारयितुं महाब्धिमपि महाकाशे तरङ्गयितु क्षमाणि परस्परं विजिगीषया निर्मीयन्ते, क्वचिद् दूरतोऽपि शत्रुदेशं भस्मसात्कर्तुं राकेटसृष्टिः, क्वचिदुपग्रहाणां रचना, क्वचिन्महतां विमानानां संहारसम्भारसम्भृतानां नभसि मनोरंहसा प्रसर्पणम्, क्वचिन्महाम्भोधेरन्तस्तलेऽपि जलपोतानां महामत्स्यव-त्प्रधावनम्, भूमावपि रयलमोटरत्तरद्राक्तरादीनां यानानां श्लाघ्येन रंहसा प्रद्रवणम्, रेडियोटेलीवीजनयन्त्रादीनां परदेशवृत्तानामनुकूलप्रतिकूलानां द्राक्परिज्ञानायाविष्कर-णम्, नवनवानाञ्च सौख्यसाधनानां निर्माणेऽप्यसंतोषोऽवितृप्तता चेति । एवमी-दृशस्य जगद्व्यसनस्य समुपस्थितस्य किं मूलम्, कश्च परिहारोपाय इति चिन्तायां सत्यां विषयेषु रागः, अभीष्टविषयप्राप्तिप्रतिबन्धकेषु च प्रद्वेष इति निश्चीयते । तथा हि—

विषयेषु स्रक्चन्दनवनितादिषु साधुत्वरूपसम्यक्त्वकल्पनया विषयान् ध्यायतो विषयेषु राग आसक्तिरूपोऽभिनिवेशो जायते, सङ्गाच्च तेषु कामो जायते, कामाच्च प्रतिहतात् तत्प्रतिबन्धकेषु प्रद्वेषो जायत इति क्रमः। तदुक्तं गीतासु—

ध्यायतो विषयान् पुंसः संगस्तेषूपजायते।
संगात्सञ्जायते कामः कामात्क्रोधोऽभिजायते॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥ इति।

न चैतस्य विषयेषु संगरूपस्य रागस्य तेषूत्कटाभिलाषरूपस्य च कामस्य प्रक्षयः काम्यमानविषयाणामुपभोगेन संभवति। तदुक्तम्—"न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" इति। भागवते ययातिगीतञ्च—"यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। एकस्यापि न पर्याप्तं तस्मात्सर्वं परित्यजेत्" इति। किन्तु विषयेषु क्षयित्वानित्यत्वादिदृष्ट्या तदुपभोगे च व्याध्याद्यनर्थहेतुत्वदृष्ट्या इन्द्रियाणां तेभ्यः प्रत्याहरणरूपेण निरोधेनैव विषयेषु कामस्य सर्वानर्थबीजस्य प्रक्षयः। तदुक्तं गीतासु—"तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ। पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्" इति। अभ्यासवैराग्ये चेन्द्रियनिरोधोपायत्वेन प्रसिद्धे। एवमस्मिन् कराले काले सहजस्नेहसद्भावभावनया रागद्वेषनिवृत्तिसाधनानां शमदमतितिक्षोपरतिसंतोषादीनां विषयदोषाणाञ्च सर्वत्र साम्यदृष्टेश्चाविरतमुपदेशपरस्य वेदान्तशास्त्रस्याध्ययनमत्यन्तमुपयुक्तम्।

किञ्च प्राचीनभारतीयसंस्कृतेरविरोधेन सर्वसंस्कृतिसमन्वयपुरस्सरं निर्मित्सितायां साम्प्रतिक्यां भारतीयसंस्कृतौ विविधवेदान्तदर्शनानामन्यतममद्वैतदर्शनं सुमहदुपयुक्तम्। तत्र हि न संप्रदायवादः, अनुसरन्ति हि अद्वैतवादं संन्यासिनः, उदासीनाः, निर्मलाः, दादूसंप्रदायिनः, तुलसीदासप्रभृतयो रामानन्दसम्प्रदायमनुगताः, कबीरसंप्रदायमनुसरन्तश्च। अन्येऽपि च बहवो ज्ञाताज्ञाताः। यवनेषु अपि सूफीपदव्यपदेश्या मन्सूरप्रभृतयः प्रसिद्धाः।

सर्वेषां च वेदान्तदर्शनानां व्याख्याभेदभिन्नानां प्रस्थानत्रयं वर्तते परमनिःश्रेयससम्प्राप्तौ साधनम्। उपनिषदः, सूत्राणि, गीताशास्त्रं चेति। तत्रोपनिषदः श्रवणरूपाणि स्वतः प्रमाणानि, सूत्राणि तु उपनिषद्वाक्यार्थविचारपराणि मनन-

रूपाणि, गीताशास्त्रन्तु उपनिषदः सांख्ययोगौ पुराणानि चानुगतम्। तत्र—गीता-शास्त्रस्योपनिषदनुसारित्वे सर्वोपनिषदो गाव इत्यादीनि वचनानि, सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्, इत्येवंविधानि सांख्यशास्त्रपराणि, "समं कायशिरोग्रीवं धारयन्नचलं स्थिरः" इत्यादीनि योगपराणि, न मे भक्तः प्रणश्यति, भक्त्या त्वनन्यया शक्य इति, भक्त्या मामभिजानाति, इत्यादीनि भक्तिमाहात्म्यप्रख्यापकाणि वचनानि पुराणमनुसृतानि। तत्र प्रतिष्ठते लक्ष्यं प्राप्तुमनेन पथा इति प्रस्थानं मार्ग उच्यते। तत्र उपनिषत्प्रस्थाने छान्दोग्योपनिषदमाश्रित्य लक्ष्यप्राप्तिपद्धतिः प्रदर्श्यते—तत्रोपनिषत्सु परापराविद्याभेदेन द्वे मुख्यतः प्रस्थाने। तत्र परा यया तदक्षरमधिगम्यते निर्गुणब्रह्मविद्या। सा तु एकैवाध्यारोपापवादन्यायेन सर्वोपनिषत्सु प्रपञ्चिता। तत्रापरा विद्या यद्यपि ऋग्यजुःसामादिलक्षणा कर्मज्ञापिका तथापि सगुणब्रह्मविद्याऽपि गुणप्रहाणेन निर्गुणब्रह्मविद्याप्रापकत्वाद् अपरैव। तस्याश्च बह्व्यो विधा बहवो भेदा बहूनि आलम्बनानि बह्व्यश्च वंशपरम्पराः श्रूयन्ते। बहूनि च नामानि शास्त्रकृद्भिः कल्पितानि। तद्यथा—छान्दोग्योपनिषदि प्रथमाध्यायमारभ्य पञ्चमाध्यायं यावद् नानाविधानि उपासनानि उक्तानि। षष्ठाध्याये तु निर्गुणब्रह्मविद्योपदेश आरुणेः श्वेतकेतु प्रति, तत्र च षोडशकलपुरुषोपदेशपुरःसरं निष्कलपुरुषोपदेशः। सप्तमेऽध्याये तु नारदं प्रति वागादिरूपभूयोवस्तूपदेशपरम्परया निरतिशयब्रह्मस्वरूपोपदेशः। अष्टमेऽध्याये तु निर्गुणब्रह्मप्राप्तिसाधननानाविधोपासनोपदेशानन्तरम् इन्द्रविरोचनौ प्रति ब्रह्मण उदशरावादिदृष्टान्तेन निर्गुणब्रह्मोपदेशो विपरीतग्रहेण संशयालु प्रतिनिवृत्तम् इन्द्रं प्रति च पुनरुपदेशः, तदनन्तरं च 'श्यामाच्छबलं प्रपद्ये' इत्यादिमन्त्रस्य जपार्थस्य ध्यानार्थस्य च अपरब्रह्मप्राप्तये उपदेशः १३, १४ खण्डाभ्याम्। ततः परं एतस्या ब्रह्मविद्याया वंशपरम्परोपदेशो ब्रह्मा प्रजापतये उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य इति। विद्यानां च मधुविद्या, पञ्चाग्निविद्या, संवर्गविद्या, दहरविद्यादीनि नामानि। किञ्च अत्रोपनिषदि त्रिविधानि उपासनानि उक्तानि। कानिचिद् अभ्युदयफलानि कानिचित् क्रममुक्तिफलानि कानिचित् कर्मफलगतातिशयफलानि। तत्राद्यानि स यो वै वायु दिशां वत्सं वेद न पुत्ररोदं रोदिति इत्यादीनि। द्वितीयानि तु सगुणब्रह्मविषयाणि, तृतीयानि तु उद्गीथाद्युपासनानि कर्मसमृद्धिफलानि। तत्र आत्मविद्याप्रकरणे त्रिविधोपासनोपन्यासे कारणं त्रिविधोपासनानाम् आत्मज्ञानस्य च

मनोवृत्तिरूपत्वं रहस्यत्वरूपं च सामान्यमेव। किञ्च—उपासनानामीश्वरार्पणबुद्ध्याऽनुष्ठितनित्यादिकर्मवच्चित्तशुद्धिद्वारा ज्ञानकारणत्वात् कार्याच्च कारणस्य प्राथम्यप्रसिद्धेः साकारवस्तुविषयत्वेन सुसाध्यत्वाच्च मन्दानां सहसा तेषु प्रवृत्त्युपपत्तेरादावुपदेशः कृत इति। ब्रह्मसूत्ररूपे तु वेदान्तदर्शनानां प्रस्थाने उपनिषत्प्रस्थानैकरूप्यमेव उपनिषद्वाक्यार्थविचाररूपस्य अस्य उपनिषदर्थमननरूपत्वेन अतिरिक्तप्रस्थानत्वासम्भवात्।

ब्रह्मसूत्राणां च वेदान्तदर्शनेषु द्वैतपरत्वम्, द्वैताद्वैतपरत्वम्, विशिष्टाद्वैतपरत्वम्, शुद्धाद्वैतपरत्वम्, अद्वैतपरत्वं, च बहुभिराचार्यैर्बहुधा व्याख्यातम् इत्यन्यदेतत्। गीताशास्त्रप्रस्थानन्तु प्रत्येकमध्यात्मविद्यानुविद्धेन अध्यायषट्कत्रयेण यथाक्रमं कर्मभक्तिज्ञानानि अध्यात्मविद्याप्राप्तये उपदिशति। तत्र च यद्यपि कर्मभक्त्योर्ज्ञानाङ्गत्वम् ज्ञानस्य तु प्राधान्यं कैवल्ये साधनीये इति केचिदाचार्याः, अपरे तु ज्ञानकर्मणोः समुच्चितयोः समं प्राधान्यं मुक्तौ, भक्तेस्तु तयोरुपकारकत्वम् इति, अन्ये तु भक्तेरेव प्राधान्यम्, ज्ञानकर्मणोस्तु तदुपकारकत्वमिति बहुधा विप्रतिपन्नाः, तथापि कर्मादिरूपे मार्गत्रयेऽविप्रतिपन्नाः।

किञ्च वेदान्तदर्शनेषु उपनिषद्वाक्यसमाश्रयेण स्वस्वविकल्पजा बहवो वादाः प्रसृताः। तद्यथा दृष्टिसृष्टिवादः, सृष्टदृष्टिवादः, अजातवादः, वैतथ्यवादः, व्यावहारिकसत्त्ववादः, सत्त्ववादः। तत्र दृष्टिसृष्टिः अद्वैतदर्शने, सृष्टदृष्टिस्तु व्यावहारिकसत्त्वमादाय अद्वैतदर्शने, अन्येषु च वेदान्तदर्शनेषु सर्वथा अबाध्यत्वरूपं सत्त्वमादाय। अजातवादस्तु माण्डूक्योपनिषत्कारिकासु गौडपादैरुपदिष्टः। वैतथ्यवादोऽपि तत्र अन्यत्र च अद्वैतदर्शने। जगतो व्यावहारिकसत्त्ववादोऽपि अद्वैतदर्शने एव। जगत्सत्यत्ववादस्तु षट्सु वैष्णववेदान्तदर्शनेष्वेवेति। एवं विज्ञानात्माद्वयवादोऽद्वैतदर्शने जगतो वैतथ्यवादव्यावहारिकसत्त्ववादाजातवादसमाश्रयेण, विशिष्टाद्वैतवादः श्रीरामानुजाचार्याणां चिद्विशिष्टाचिद्विशिष्टयोरद्वैताभ्युपगमेन। तथा हि—अस्मिन् मते चित्, अचित्, ईश्वरश्चेति तत्त्वत्रयमस्ति। तत्र चित्पदेन जीवाः, अचित्पदेन जडजातं दृश्यम्। चिद्विशिष्टस्याचिद्विशिष्टेन सह परस्परमद्वैतमिति विशेषणांशमादाय भेदो विशेष्यांशमादाय त्वभेद इत्युभयं सिद्ध्यति।

शुद्धस्यैव ब्रह्मणोऽद्वैतदृष्ट्या श्रीवल्लभाचार्याणां शुद्धाद्वैतवादः। एषां मते जगदभिन्नमेवेश्वरात्। श्रीनिम्बार्काचार्याणान्तु द्वैताद्वैतवादः कार्यकारण-

योर्भेदाभेदाऽभ्युपगमात् । श्रीमध्वाचार्याणान्तु द्वैतवादो न्यायवैशेषिकादिवत् ।

सोयमद्वैतिनां विज्ञानाद्वयवादो योगाचाराणां विज्ञानाद्वयवादाद् विशिष्यते । यतो विज्ञानवादाद्वैतवादयोः प्रामाणिका भेदा इमे । तथा हि—१—विज्ञानवादी विज्ञानस्य क्षणिकत्वं ब्रूते, यत्सत् तत् क्षणिकमिति स्थितेः । अद्वैती तु नित्यत्वम् । साधितञ्चैतत्पञ्चदश्यामारम्भ एव । उक्तञ्च तत्र तत्रोपनिषत्सु गीताभाष्यादिषु च । २—प्रथमो विज्ञानस्यानेकत्वम्, क्षणिकत्वेन । अद्वयत्वं तु समानकालिकसजातीयानेकमूलविज्ञानसत्त्वाभावाभिप्रायेण । आलयविज्ञानानि प्रवृत्तिविज्ञानानि च परस्परं भिद्यन्ते, तेषामुपादानभूतं मूलविज्ञानं त्वेकमेवेति सिद्धान्तात् । समाधिदशायां मोक्षदशायां च ग्राह्यग्राहकाकारद्वयशून्यत्वेन च । तदुक्तम्—द्वयग्राहविसंयुक्तं लोकोत्तरमनुत्तमम् । निर्विकल्पं मलापेतं ज्ञानं स लभते पुनः ।। इति (महायानसूत्रालङ्कारे २८)। द्वितीयः कूटस्थनित्यत्वेनैकत्वम्, एकमेवाद्वितीयम् इत्यादिश्रुतिभ्यः । ३—प्रथमो विज्ञानस्य विषयाकारेण परिणाममभ्युपैति । स च परिणामो न सांख्यानामिव सान्वयः किन्तु निरन्वयः । तथा च विज्ञप्तिमात्रतासिद्धिप्रथमकारिकाव्याख्याने परिणामलक्षणम्—"कारणक्षणनिरोधसमकालः कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणामः, एवञ्च सर्वं विज्ञेयं परिकल्पितस्वभावत्वाद् वस्तुनो न विद्यते । विज्ञानं पुनः प्रतीत्य समुत्पन्नत्वाद् द्रव्यतोऽस्तीत्यभ्युपेयम् । प्रतीत्य समुत्पन्नत्वं पुनर्विज्ञानस्य परिणामशब्देन ज्ञापितम्" इति । द्वितीयो विवर्तं विज्ञानस्य विषयं ब्रूते । अतात्त्विकोऽन्यथाभावो वस्तुनो विवर्तः प्रसिद्धो भामत्यादिषु शारीरकभाष्ये च सुबहुशः । ४—प्रथमो विज्ञानस्यार्थाकारः परिणाम इति ब्रूते, द्वितीयस्त्वन्तःकरणस्यार्थाकारः परिणामो वृत्तिरूप इति । ५—प्रथमो बाह्यार्थसत्तां न स्वीकुरुते । द्वितीयस्तु वृत्तिहेतुतया तत्सत्तामभ्युपैति । तदुक्तं पञ्चदश्यां द्वैतविवेकप्रकरणे—विज्ञानवादो बाह्यार्थवैयर्थ्यात् स्यादिहेति चेत् । न हृद्याकारमाधातु बाह्यस्यापेक्षितत्वतः ।। वैयर्थ्यमस्तु वा बाह्यं न वारयितुमीश्महे । प्रयोजनमपेक्षन्ते न मानानीति हि स्थितिः ।। ६—प्रथमो विज्ञानपरिणामस्य ग्राह्यार्थस्य तत्त्वेन सतोऽपि क्षणिकत्वेन मायोपमत्वम्, तदुक्तं महायानसूत्रालङ्कारे—मायोपमान् पश्यति लोकधातून्; मायोपमान् वीक्ष्य स सर्वधर्मान् इति । द्वितीयो मायापरिणामत्वेन मायामयत्वम् । 'तद्धेदं तर्ह्यव्याकृत-

मासीत्तन्नामरूपाभ्यामेव व्याक्रियत' इत्यादिश्रुतीनां सुबहुशः समुल्लेखात्। ७—प्रथम एकस्मिन् ग्राह्यग्राहकभावाभ्युपगमेन स्वप्रकाशत्वम्। द्वितीयः परप्रकाश्यत्वाभावेन प्रकाशरूपत्वेन च स्वप्रकाशत्वम्। ८—विज्ञानवादे विज्ञानस्य ग्राह्यग्राहकाकारपरिणामनिवृत्तिर्मोक्षः। अद्वैतवादे नित्यनिवृत्तस्याविद्याप्राप्तस्य प्रपञ्चस्य निवृत्तिज्ञानमात्रम्। ९—आद्यो बाह्यार्थस्य सांवृतं सत्त्वं मन्यते। संवृतिश्च भ्रान्तिधीरेवानिर्वाच्या वक्ष्यमाणलङ्कावतारसूत्रोक्तरीत्या। द्वितीयस्तु व्यावहारिकं प्रातिभासिकञ्च सत्त्वम्, तत्प्रयोजकञ्चानिर्वाच्यमविद्याद्वितीयम्, मूलतूलभेदेन। १०—आद्यमते विज्ञानस्य वासनासहकारेण जगत्स्रष्टृत्वम्, द्वितीयमते मायासहकारेणाविद्यासहकारेण च ईशजीवयोः स्वातिरिक्तजगद्विवर्तोपादानत्वम्। तत्रेशशक्तिर्माया व्यावहारिकजगदुपादानम्, अविद्या च जीवात्मशक्तिः। सा तु मनोमयप्रातिभासिकजगदुपादानम्। ११—आद्यमते सर्वं विज्ञानं स्वलक्षणमात्रविषयकं निर्विकल्पकम्, अपोहादिविषयकं सविकल्पकं वा भ्रान्तम्, असदर्थावभासनात्। द्वितीयमते औपनिषदं तत्त्वमस्यादिवाक्योत्थमखण्डब्रह्मविषयकं निर्विकल्पकं विषयाबाधेन सर्वथा प्रमाणम्। १२—प्रथमो भ्रान्तिमेवाविद्यां भावत्वेनाभावत्वेन चानिर्वाच्यामनादिपरम्परासिद्धत्वेन नित्यां च मन्यते। तदुक्तं लङ्कावतारे—"नित्यशब्दः पुनर्भगवन् क्व अभिहितः। भगवानाह भ्रान्तौ महामते। कथं पुनर्महामते भावाभावविवर्जिता भ्रान्तिः, एतस्मात्कारणात् शाश्वता भ्रान्तिः" इति (द्वितीयपरिवर्ते)। द्वितीयस्तु भ्रमात्संस्कारतोऽप्यन्या मण्डूकमृदुदाहृतेः। अविद्याऽनादिभावात्मा मता वाचस्पतेरिह॥ (कल्पतरौ) इति वदन् भ्रमसंस्कारोभयभिन्नाऽनिर्वाच्याऽऽत्मशक्तिरनादिभावरूपाऽविद्येति मन्यते। १३—योगाचारमतम्—'आत्मैवेदं सर्वम्' इत्यादिश्रुत्योपक्रान्तम्। अद्वैतमतन्तु—अगन्धमरसम् इत्यादिनोपसंहृतमिति सिद्धान्तभूतम्। तथा चात्मतत्त्वविवेकान्त उदयनाचार्यः—अथार्थाकारः, यमाश्रित्य त्रैदण्डिकमतोपसंहारः, योगाचारसमुत्थानञ्च, तत्प्रतिपादनार्थम्—आत्मैवेदं सर्वम् इत्यादि, तद्धानार्थम्—अगन्धमरसम् इत्यादीति। यदपि कैश्चिदुच्यते—शून्यवादमायावादयोर्वैलक्षण्याभाव इति, तदपि न युक्तिसहम्, भूयसां भेदानामुपलम्भात्। तथा हि—१—शून्यवादे परमार्थतत्त्वं शून्यत्वम्। तच्च सत्त्वादिनाऽनिर्वाच्यं सर्वेषां भावानां परमार्थरूपम्। द्विविधं हि वस्तूनां तत्त्वम्, सत्त्वमसत्त्वञ्च।

तदुक्तमध्यासभामत्यां बाह्या अप्याहुः—स्वरूपपररूपाभ्यां नित्यं सदसदात्मके। वस्तुनि ज्ञायते किञ्चित् कैश्चिद्रूपं कदाचन इति॥ तत्र सत्त्वं तेषां सांवृतं रूपम्, तच्चानिर्वाच्यं बाध्यञ्च, भावाभावविलक्षणभ्रान्तिरूपसंवृतिप्रयुक्तत्वेन तत्स्वभावत्वात्, शून्यत्वरूपमसत्त्वन्तु तेषां पारमार्थिकं रूपम्। यद्यपि शून्यत्वमनिर्वाच्यत्वेन नासत्त्वरूपं तथापि सत्त्वाभावरूपतयाऽसत्त्वं व्यवह्रियते। तदुक्तम्—न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥ इति। तच्च शून्यत्वरूपं भावानामसत्त्वमनिर्वाच्यत्वेऽपि न बाध्यम्, किन्तु परमार्थभूतम्। नैरात्म्यभावनापर्यन्तायाः सर्वशून्यत्वभावनाया गोचरीभूतस्य शून्यत्वस्य बाधकाभावेनाबाधात्। शून्यत्वदृष्टिस्तु विषयस्य पारमार्थिकत्वेऽपि स्वरूपतोऽपरमार्थभूता। अद्वैतवादे परमार्थतत्त्वं सच्चिदानन्दरूपं ब्रह्मनित्यविज्ञानस्वरूपम्। निरधिष्ठानिकाया ग्राह्यकल्पनायाः शून्यत्वकल्पनाया वाऽसम्भवात्। एषां मते सर्वे विज्ञानातिरिक्ता भावा अनिर्वाच्यमायाकार्यत्वेनानिर्वाच्याः। विज्ञानं तु सद्रूपतया निर्वाच्यम्। एतन्मते भावानां सत्त्वमनिर्वाच्यं बाध्यञ्च। तदुक्तं खण्डने—एवं सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति। तदुक्तं भगवता लङ्कावतारे–बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते। अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः। इति। विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनः सङ्गिरन्ते इति। २—शून्यवादे ग्राह्यग्राहकयोर्द्वयोरपि सांवृतं सत्त्वम्। अद्वैतवादे तु ग्राहकस्य पारमार्थिकं सत्त्वम्, ग्राह्यस्य तु व्यावहारिकं प्रातिभासिकञ्च। ३—शून्यवादिमते शून्यत्वस्य सत्त्वादिनाऽनिर्वाच्यत्वेन निरधिष्ठानैव सर्वा कल्पना। यद्यपि सा न दृष्टचरी, तथापि युक्तिबलात् सर्वशून्यत्वसिद्धौ स्वीकर्तव्या भवतीति। अद्वैतिमते सत्त्वेन निर्वाच्यस्य विज्ञानस्य कल्पनाऽधिष्ठानत्वम्। कल्पनायाः सदधिष्ठानिकाया एव दृष्टत्वात्। ४—शून्यवादिमते प्रागुक्तानिर्वाच्यसर्वशून्यत्वरूप एव मोक्षः। अद्वैतिमते तु मोहनिवृत्त्युपलक्षितः प्रकाशमानानन्दरूपविज्ञानात्मरूपः। ५—सर्वशून्यत्ववादे नैरात्म्यभावना मोक्षोपायः। अद्वैतवादिमते तु ऐकात्म्यभावनेति भेदः। ६—सौगतयोरपि प्रागुक्तयोर्निरीश्वरवादः। अद्वैतवादे तु व्यावहारिकमीश्वरसत्त्वम्। ७—शून्यवादोऽसत्कारणतावादत्वेन श्रुतौ श्रुतः—"तद्धैक आहुरसदेवेदमग्र आसीदिति। कथं तु खलु सौम्यासतः सज्जायेत" इति। तथा चात्मतत्त्वविवेकान्त उदयनाचार्यः—"अथा-

र्थाभावः, यमाश्रित्य वेदान्तद्वारमात्रोपसंहारः शून्यत्वनैरात्म्यसमुत्थानञ्च, तत्प्रतिपादनार्थम्—असदेवेदमग्र आसीत् इत्यादि। तद्धानाय—अन्धं तमः प्रविशन्ति ये के चात्महनो जना इत्यादीति। अद्वैतवादस्तु सत्कारणतावादत्वेन सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम् इत्यादिश्रुतिषु श्रुत इति। किञ्चाद्वैतिनां दृष्टिसृष्टिवादोऽपि विज्ञानवादिनां दृष्टिसृष्टिवादाद् विभिद्यते। तथा हि—अद्वैतिनां दृष्टिसृष्टिवादे दृश्यस्य प्रातिभासिकस्य आविद्यकस्य अविद्यावृत्तिरूपात् चिद्रूपाद्वा विज्ञानात्पृथक् सत्त्वमङ्गीक्रियते, अविद्योपादानकत्वेऽपि अविद्यावृत्तितद्विषययोर्भेदाऽभ्युपगमात्। विज्ञानवादिनां तु दृश्यस्य विज्ञानाकारतैव, न तु विज्ञानाद् भेद इति। सोऽयं दृष्टिसृष्टिवादः शब्दाद्वयवादिनां वैयाकरणानामप्यभिप्रेतः। तदुक्तं भर्तृहरिणा आगमसमुच्चयापरनाम्नि ब्रह्मकाण्डे—शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी। यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते॥११८॥ इति कारिकाव्याख्यावसरे—"यथाऽपरेषामिन्द्रियेषु विषयमात्राशक्तयः प्रतिलयं गच्छन्ति, तथेन्द्रियमात्राशक्तयो बुद्धिषु, बुद्धिमात्राशक्तयः प्रतिसंहृतक्रमे वागात्मनि। सा चेयं स्वप्नप्रबोधवृत्तिः प्रविभक्तपुरुषानुकारा महत्यपि वाक्तत्त्वे कारणे नित्यमवस्थिता इति। गीतास्वपि अयं दृष्टिसृष्टिवादः स्मर्यते—भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते। रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे॥ इति। सृष्टदृष्टिवादस्तु अबाधितप्रत्यभिज्ञाबलात्स्वीक्रियते, दृष्टिसृष्टिवादिनान्तु सा प्रत्यभिज्ञा वस्तुसाजात्यनिबन्धना न तु अर्थैक्यनिबन्धना ज्वालैकत्वप्रत्यभिज्ञावत्। तत्राजातवादः, वैतथ्यवादः, व्यावहारिकसत्त्ववादः, अद्वैतात्मोपपत्तये स्वीक्रियते। अजातवादस्य साधिका श्रुतिस्तु—न निरोधो न चोत्पत्तिर्न बद्धो न साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥ इत्यादिका। अयमजातवादो माध्यमिकानामपि सर्वशून्यत्ववादिनां संमतः। अनिर्वचनीयत्वरूपवैतथ्यवादस्तु युक्तिसिद्धः। तथा हि—असत्त्वे प्रतीत्यनुपपत्तिः। सत्त्वे बाधानुपपत्तिरिति सत्त्वासत्त्वाभ्यामनिर्वाच्यमेव विश्वम्। व्यावहारिकसत्त्ववादोऽपि व्यवहारप्रवृत्त्यन्यथाऽनुपपत्तिमूलक एव। तत्र व्यावहारिकं सत्त्वं यावद् व्यवहारकालमबाध्यत्वरूपम्। प्रागुक्तस्य च जगतो वैतथ्यवादस्य युक्तिसिद्धस्योपपत्तय एव जगतो मूलकारणमपि कार्यानुरूपमेव भावाभावविलक्षणं त्रिगुणात्मकमविद्यारूपं स्वीक्रियते। किञ्चाद्वैतिनां मते सत आत्मनो जगद्विवर्तोपादानत्वरूपं कारणत्वं मायासहकारेण संभवति, मायायास्तु परिणाम्युपादानत्वम्।

शून्यवादिनान्तु असत्कारणत्ववादे कार्यकारणभावो नोपपद्यते। तदुक्तं गौडपादकारिकासु शून्यवादिमतप्रत्याख्यानावसरे—सतो हि मायया जन्म युज्यते न तु तत्त्वतः। तत्त्वतो जायते यस्य जातं तस्य हि जायते॥ असतो मायया जन्म तत्त्वतो नैव युज्यते। वन्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते॥ (अद्वैतप्रकरणे २७-२८)। व्याख्यातञ्च भाष्यकृद्भिः—"असद्वादिनामसतो भावस्य मायया तत्त्वतो वा न कथञ्चन जन्म युज्यते, अदृष्टत्वात्। नहि वन्ध्यापुत्रो मायया तत्त्वतो वा जायते। तस्मादत्रासद्वादो दूरत एवानुपपन्न इत्यर्थः" इति। शून्यवादे कार्यकारणभावो नोपपद्यत इति विवर्तवाद एव सदधिष्ठानककल्पनारूप आश्रयणीय इति तत्तात्पर्यम्। अथञ्च विवर्तवादोऽजातवाद एव पर्यवस्यति। अतात्त्विकोऽन्यथाभावो विवर्तः, तात्त्विकोऽन्यथाभावः परिणाम इत्यभ्युपगमात्। किञ्चास्ति वेदान्तेषु भ्रमस्थले ख्यातिमुद्दिश्य विप्रतिपत्तिः। तथा हि—शुक्तिकायाम् "इदं रजतम्" इति भ्रमस्थलेऽद्वैतिनां मतेऽनिर्वचनीयख्यातिः, सत्त्वासत्त्वाभ्यामनिर्वाच्यस्य रजतस्याविद्योपादानकस्याविद्यावृत्तौ रजताकारायां सत्यां साक्षिभास्यत्वाभ्युपगमात्। शुक्तिकायां हट्टस्थं रजतं ज्ञानलक्षणप्रत्यासत्त्या प्रत्यक्षीक्रियत इत्यन्यथाख्यातिवादिनो नैयायिकाः। तन्न, ज्ञानलक्षणप्रत्यासत्त्यङ्गीकारेऽनुमानोच्छेदप्रसङ्गात्, रजतस्येदंतया निर्देशासंभवाच्च। विवेकाख्यातिवादिनस्तु प्राभाकराः—इदं रजतमिति द्वे ज्ञाने, तत्र प्रथमं प्रत्यक्षम्, द्वितीयन्तु प्रमुष्टतत्ताकं स्मरणम्, ज्ञानयोर्विषययोश्च मिथो भेदाग्रहात् प्रवृत्तिव्यवहारौ भवतः। नास्ति कश्चन मिथ्याप्रत्ययः। कस्मिंश्चित् प्रत्यये स्वविषयव्यभिचारे हि सर्वत्रानाश्वासप्रसङ्गादिति। सर्वत्रैव हि चेतनस्य प्रवृत्तिव्यवहारयोः संसर्गज्ञानपूर्वकत्वेनासंसर्गाग्रहमात्रतस्तदसंभवात्। विज्ञानवादिमते तु विज्ञानाकारमेवान्तरं रजतं तत्र प्रथते। नेदं रजतमिति निषेधोऽपि न रजतस्य किन्तु इदन्ताया इत्यात्मरूपस्य विज्ञानाकारस्य रजतस्य ख्यातिरित्यात्मख्यातिवादः। नैतदपि युज्यते, इदन्तया निर्दिश्यमानस्य रजतस्यान्तरत्वे मानाभावात्। शून्यवादिनामसत्ख्यातिरपि न संभवति, असतो वन्ध्यापुत्रादेः ख्यात्यदर्शनादिति। वैष्णववेदान्तिनान्तु सत्ख्यातिवादः, शुक्तिकायां सद्भ्यो रजतावयवेभ्यस्तदानीं सतो रजतस्य जन्माभ्युपगमात्। तदिदं मतं मनःप्रत्ययमासादयति न वेत्यत्रानुभवः प्रष्टव्यः। सदसत्ख्यातिस्तु सांख्यानाम्, इदञ्च मतं परस्परविरोधपराहतमिति। किञ्चाद्वैतिनां नित्यविज्ञाना-

त्मवादिनां नित्यविज्ञानस्य स्वप्रकाशत्वम्, सुषुप्तौ आत्मनः स्वयं ज्योतिष्ट्वश्रवणात्, अन्तःकरणवृत्तिरूपविज्ञानस्य तु साक्षिभास्यत्वमन्तःकरणपरिणामत्वेन जडत्वात्। तच्च स्वप्रकाशत्वं परप्रकाशत्वाभावरूपम्, ब्रह्मणो निर्धर्मकत्वात्, एकस्मिन् कर्तृकर्मभावविरोधाच्च। योगाचाराणान्तु क्षणिकविज्ञानस्य स्वप्रकाशत्वम्, एकस्मिन् कर्तृकर्मभावस्वीकारेण। तत्स्वीकारे चासन्देहाविपर्यासानुगृहीतानुभव एव शरणं तेषाम्। गुरूणां स्वप्रकाशत्वन्तु आश्रयत्वकर्मत्वयोर्विरोधाशङ्काया अभावादुपपन्नमेव। अद्वैतवादिनां मते नित्यविज्ञानस्य सत्यमिथ्याभेदभिन्नसर्ववस्त्ववभासकस्य न प्रामाण्यम्, किन्तु वृत्तिरूपज्ञानस्यैव प्रामाण्यमप्रामाण्यञ्च। तच्चोत्पत्तौ ज्ञप्तौ च स्वत एव। तस्योत्पत्तौ स्वतस्त्वं ज्ञानजनकसामग्रीमात्रजन्यत्वरूपम्, ज्ञप्तौ तु ज्ञानग्राहकसामग्रीमात्रग्राह्यत्वरूपम्। अप्रामाण्यन्तु उत्पत्तौ ज्ञप्तौ च परत एव। वृत्तिरूपं ज्ञानमेव चाविद्याविरोधि, नित्यविज्ञानन्तु अविद्यायाः साधकत्वान्न विरोधि।

अथाधुनाऽद्वैतवादमनुसृतः शैवागमसंमतः शिवाद्वयवादो निरूप्यते। तत्र "पत्युरसामञ्जस्यात्" (२-२-३७) इतिवेदान्तसूत्रभाष्यीयभामतीप्रभानन्दगिरीयेषु चत्वारो माहेश्वराः समुपलभ्यन्ते। ते च शैवाःपाशुपताःकारुणिकसिद्धान्तिनःकापालिकाश्चेति। सर्वेऽमी माहेश्वरप्रणीतागमानुगामित्वान्माहेश्वराः। तेषां मते पञ्च पदार्थाः—कार्यं कारणं योगो विधिर्मोक्ष इति। तत्र कार्यं महदादिकं सांख्ययोगाभिमतम्। कारणं प्रधानमीश्वरश्च योगाभिमतम्। योगः समाधिः। विधिस्त्रिषवणस्नानादिः। दुःखान्तो मोक्ष इति।

शैवदर्शनानि च त्रीणि सम्प्रति दृश्यन्ते—नकुलीशपाशुपतदर्शनं शैवदर्शनं प्रत्यभिज्ञादर्शनञ्चेति। तेषु प्रत्यभिज्ञावादिनो वस्तुतो जीवेश्वरयोरैक्यं मन्यन्त इति त्रिषु श्रेयांसः। नकुलीशपाशुपतास्तु ईश्वरस्य जगत्सृष्टौ कर्मापेक्षित्वं नानुमन्यन्त इति जघन्याः। शैवास्तु ईश्वरस्य वैषम्यनैर्घृण्यदोषपरिहाराय जगत्सृष्टौ कर्मापेक्षित्वमङ्गीकर्तव्यमिति वदन्तः पाशुपतापेक्षयाभ्यर्हिताः। पाशुपतमते ईशः कर्म चेति द्वयं जीवस्य सुखदुःखरूपं फलं ददाति। तत्र ईश्वरस्य फलदाने न कर्मापेक्षा। कर्मणस्तु फलदान ईश्वरापेक्षास्त्येव। तथा च कर्मणो न वैयर्थ्यं नापीश्वरस्य पूर्णस्वातन्त्र्यहानिः। दुःखान्ताय दुःखमूलं पारतन्त्र्यमवश्यं ज्ञेयम्। तथा च स्वतन्त्रास्वतन्त्रभेदेन तत्त्वज्ञानाद्दुःखान्तः। तच्च पाशुपातशास्त्रादेव जायत इति। शैवदर्शने तु प्रकारान्तरेण षट्पदार्थाः प्रदर्शिताः तेषां तत्त्वज्ञानाद् दुःखान्तः। तथा हि—

प्रतिविद्ये तथाविद्या पशुः पाशश्च कारणम् ।
तन्निवृत्ताविति प्रोक्ताः पदार्थाः षट् समासतः ॥

प्रत्यभिज्ञादर्शने तु जगत्कारणत्वं न कर्मणोऽचेतनत्वात् । नापि कर्मसापेक्ष-स्येश्वरस्य जगत्कारणत्वम्, ईश्वरस्य जगदुपादाने कर्मावलम्बित्वे पूर्णस्वातन्त्र्यभङ्गा-पत्तेः । पूर्णस्वातन्त्र्यं ह्यन्यमुखप्रेक्षित्वाभावः । अतो निरपेक्ष एवेश्वरः स्वेच्छयैवाका-शादिभावान्वितं जगन्निर्मिमीत इति सिद्धम् । आकाशादीन् भावांश्च परमेश्वरः स्वात्मन्येवाभासयति, दर्पणे प्रतिबिम्बवत् । यतश्चेतनाचेतनात्मकं सर्वमिदं जगन्न परमेश्वरापेक्षया पृथग्भूतं किन्तु तदन्तर्गतमेव यद्यपि जीवा मिथो भिन्नाः, एवं नानाविध-मानमेयादिभिन्नं जगदपि, तथापि परमेश्वरापेक्षया न किञ्चिद् भिन्नम् । अहमीश्वर एव नान्य इत्येवं यः साक्षात्कारः स प्रत्यभिज्ञेत्युच्यते । प्रत्यभिज्ञामात्रेणैव च परापर-सिद्धिर्भवति । न तदर्थं बाह्याभ्यन्तरचर्याप्राणायामादिक्लेशः । परसिद्धिर्मुक्तिः । अपरसिद्धिरभ्युदयो देवलोकप्राप्त्यादिः । यथा यथा साक्षात्कारस्तथा सिद्धिरिति साक्षात्कारानुरोधेन सिद्धितारतम्यमिति । माययान्धं सन्नीश्वरस्वरूपाज्ञानात् कर्मणा बध्यते संसरति च । नूनमीश्वरोऽहं इत्याकारकप्रत्यभिज्ञया साक्षात्कृतेश्वरस्वरूपस्तु दृक्-क्रियाशक्तिपरिपूर्णो मुक्त इत्युच्यते इति । इदञ्च प्रत्यभिज्ञादर्शनमद्वैतदर्शनमेवानुगच्छति । तथा हि—संविद्रूपः परमशिव एवैषां परं तत्त्वम् । तदेव च मुक्तौ प्राप्यम् । तद्रूपतापत्तिरेव मोक्षः । दीक्षया शक्तिपातेन मलत्रयापगमे शुद्धाध्वप्राप्तिक्रमेण च मोक्षः । अविद्यया बन्धो विद्यया च मोक्ष इत्येभिरपि स्वीक्रियत एवेति । पुराणेष्वपि पृथिव्याद्यष्टकस्य शिवमूर्ति-त्वोपवर्णनेन शिवाद्वैतं सूच्यते । तथा हि— भूमिरापोऽनलो वायुः खमिति भूतपञ्चकम्, सूर्याचन्द्रमसौ द्वौ यजमानश्चाष्टमः । आभिश्चाष्टाभिरर्चाभिः शिवस्य सर्वात्मकत्वं सर्वोपादानत्वं सर्वकर्तृत्वं सर्वज्ञत्वञ्चाक्षिप्तं भवति । तथा हि—मायाशक्त्युपहितः शिवः कालकर्मापेक्षया पञ्चभूतात्मकसर्वजगदाकारेण परिणमतीति स्थितिः । तदुक्तं वाक्य-पदीये ब्रह्मकाण्डे—अव्याहताकला यस्य कालशक्तिमुपाश्रिताः । जन्मादयो विकाराः षट् भावभेदस्य योनयः ॥ इति । अत्र शब्दब्रह्मणो जगत्सृष्टौ कालापेक्षा दर्शिता । 'वैषम्यनैर्घृण्येन सापेक्षत्वात्तथा हि दर्शयति' इति वेदान्तसूत्रे च परमेश्वरस्य सृष्टौ कर्मापेक्षा प्रदर्शिता । तत्र परमेश्वरस्य स्वातिरिक्तकालकर्मापेक्षत्वे स्वातन्त्र्यमेव हीयेतेति कालकर्मणी अपि भगवत्कृते भगवद्रूपे एवेति च स्वीक्रियते । तथा हि यजमान-

रूपेण शिव एव कर्माणि करोति। रविचन्द्ररूपाभ्यां स एव कालमपि विविधं विदधाति। तयोः सहकारेण च पञ्चभूतात्मकं सर्वं जगल्लीलया निर्मिमीते। तदुक्तम्—'लोकवत्तु-लीलाकैवल्यम्' इति ब्रह्मसूत्रे। एतदेव पौराणिकपृथिव्यादिमूर्त्यष्टकोपासनारहस्यम्।

वाक्यपदीये आगमसमुच्चयापरनामधेये ब्रह्मकाण्डे प्रथमे महता संरम्भेण प्रत्यक्षपरोक्षाभ्यामभिधाव्यञ्जनाभ्यां समुपदिष्टः शब्दब्रह्माद्वयवादोऽपि वेदान्ति-नामद्वैतवादान्न विशिष्यते। तथा हि—तत्र प्रथमं परस्य वाक्तत्त्वस्य ब्रह्मरूपत्वं कालश-क्त्युपकृतानिर्वाच्यविविधशक्तिसमाश्रयेण जगद्विवर्तोपादानतया जगजन्मादिहेतु-त्वञ्च सामान्येन प्रकाशितम्—शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः। छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत॥ (वाक्य०, ब्रह्मका० १२०) इति कारिकया च शब्दस्य विवर्तोपादानत्वं पूर्वार्धेन, उत्तरार्धेन तु छन्दःशब्दानां निमित्तकारणत्वं च विशेषरूपेणो-क्तम्। अत्र कारिकायां पूर्वार्द्धे परिणामशब्दो लक्षणया विवर्तपरः, शब्दस्य कूटस्थनित्यस्य परिणामासम्भवात्। शब्दस्य कूटस्थनित्यत्वञ्च बहुशो भाष्ये दर्शितम्। यद्वा मायारूप-स्वशक्त्युपहितस्य शब्दब्रह्मण उपाधिभूतमायायां जगदाकारपरिणामसम्भवेन शब्दस्य परिणामोऽयमित्युक्तेः सम्भवः। व्याख्याता चेयं कारिका स्वयमेव हरिणा। तथा हि— "यथैवान्ये कार्यकारणभावमाचक्षाणाः कार्येषु कारणधर्मसमन्वयं दृष्ट्वा व्यावृत्तभेदं सूक्ष्ममसंवेद्यं सर्वविकारशक्त्यनुगतं प्रत्यस्तमितव्यक्तिशक्तिरूपमणुग्रामं प्रधानशक्ति-समूहं विद्याकारणं जन्मपरिणामासंसर्गं विवर्तं व्यवस्थापयन्ति तथैवाम्नाये संहृत-भोग्यभोक्तृशक्तेर्वागात्मनो बहुधा कारणत्वमाम्नातम्। स उ एवैष ऋङ्मयो यजुर्मयः साममयो वैराजः पुरुषः। पुरुषो वै लोकः। पुरुषो यज्ञः। तस्यैता लोकम्पृणास्तिस्र आहु-तयस्ता एव त्र्या लिखिता वैत्रयो लोकाः" इति। अत्र वैराजपुरुषस्य ब्रह्माण्डशरीरस्य ऋङ्मयादित्वोक्त्या शब्दपरिणामत्वमुक्तम्। तथा—एष वै छन्दस्यः साममयः प्रथमो-त्क्षन् वैराजः पुरुषो योऽन्नमसृजत। तस्मात्पशवोऽन्वजायन्त। पशुभ्यो वनस्पतयो वन-स्पतिभ्योऽग्निः। तस्मादाहुर्न दारुपात्रेण दुह्यादग्निर्वा एव दारुपात्रम्। तस्मान्न दारुपात्रेण दुह्यते इति। अत्रापि वैराजपुरुषस्य सर्वलोकात्मकस्य ब्रह्माण्डशरीरस्य साममयत्वोक्त्या शब्दप्रभवत्वं प्रदर्श्य तस्माद् व्रीहियवादिरूपान्नसृष्टिक्रमेण पश्वादिसृष्टिपरम्परा प्रदर्शिता। तथा—"ऋग्वर्णाः खल्वपि—इन्द्राच्छन्दः प्रथमं प्रास्पदन्नं तस्मादिमे नामरूपे विषूची। नाम प्राणाच्छन्दसो रूपमुत्पन्नमेकं छन्दो

बहुधा चाकशीति ।। इति । अत्र परमैश्वर्यसम्पन्नं परं वाक्तत्त्वम् इन्द्रशब्दार्थः। छन्दःपदेन च प्रथमं कार्यं महत्तत्त्वाख्यं समष्टिरूपं बुद्धितत्त्वम्। स्वस्मिन् अव्याकृतयोर्नामरूपयोच्छादकत्वात् । महत्तत्त्वाच्च नामरूपयोः सृष्टिरुक्ता मार्गभेदेन। तत्र प्राणं द्वारीकृत्य तत्तत्स्थानाभिघातपुरःसरं नामसृष्टिरुक्ता। इन्द्रियञ्च द्वारीकृत्य रूपसृष्टिरत्राभिप्रेता, अन्यत्र तथैवोक्तत्वात् । दर्शिता च ब्रह्मकाण्डे वाक्यपदीये हरिणा शब्देष्वेवाश्रिता शक्तिरिति ११८ कारिकाव्याख्यावसरे—इन्द्रियं द्वारीकृत्य बुद्धितत्त्वाद् विषयाणामुत्पत्तिरिति । अथापरोऽपि मन्त्र आह—वागेव विश्वा भुवनानि जज्ञे वाच इत् सर्वममृतं यच्च मर्त्यम् । अथेद् वाग् बुभुजे वागुवाच पुरुत्रा वाचो न परं यच्च नाह ।। इति । अत्र परस्य वाक्तत्त्वस्यैव विश्वभुवनरूपेण जन्म, वाचो नित्यानित्यजगदात्मकत्वम्। वाच एवात्मरूपतया भोक्तृत्वं वक्तृत्वञ्च, सर्वस्यैव वक्तव्यस्यार्थस्य वाच्यन्तर्भावश्चोक्तः। वाचः सर्वोपादानत्वाद् वाच एव नित्यस्याप्यर्थस्य कल्पिताकारोपादानत्वाच्च । पुराकल्पोऽपि वाचः सर्वोपादानत्वं सर्वात्मकत्वं चाह। तद्यथा—विभज्य बहुधाऽऽत्मानं स छन्दस्यः प्रजापतिः। छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ।१। साध्वी वाग् भूयसी येषु पुरुषेषु व्यवस्थिता। अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः ।२। प्राजापत्यं महत्तेजस्तत् पात्रैरिव संवृतम्। शरीरभेदे विदुषां स्वां योनिमुपधावति ।३। यदेतन्मण्डलं भास्वद् धामचित्रस्य राधसः। तद्भावमभिसम्भूय विद्यायां प्रविलीयते ।४। इति ।

शब्दस्य च द्वे रूपे अभिहिते वाक्यपदीये—एकं नित्यं निरवयवं संहृतक्रमं वाचकं स्फोटाख्यम्। यत् स्थानभेदेन चतुर्धाऽभिधीयते। परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता। हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ।। इति। तद्यथाव्याकरणं तु पश्यन्त्यादित्रयस्यैव ज्ञापकम्, न तु परस्या वाचः। तस्या लोकबुद्ध्यगोचरत्वेन लोक-व्यवहारातीतत्वात्। तदुक्तम्—वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्। अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ।। (वाक्य० ब्रह्मकाण्डे १४४) इति। अत्रैतत् पदेन व्याकरणमुच्यते। द्वितीयं तु प्राणवायोर्विवक्षाजनितप्रयत्नेनोर्ध्वं प्रेरितस्य तत्तत्स्थानकरणाभिघातेन जायमानं ध्वनिरूपं प्रथमस्य व्यञ्जकम्। तदुक्तम्—द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः। एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ।। (वाक्य० ब्रह्म०४४) इति। नित्यं च वाक्तत्त्वं स्फोटाख्यं प्राकृतध्वनिभिर्व्यज्यमानं तद्धर्मैकत्वादिभि-

ह्रस्वत्वदीर्घत्वादिभिश्च रूषितं जायमानमिव अक्रमञ्च सक्रमामिव वैकृतध्वानसंसर्गेण च कालानवच्छिन्नमपि द्रुतादिवृत्तिमदिव अवभासते। तदुक्तं संग्रहे—स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते। वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥ इदं च समुद्धृतं वाक्यपदीयटीकायां हरिणा—स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु। प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥ (वाक्य० ब्रह्म० ७६) इति।

इदञ्च शब्दतत्त्वमग्न्यादित्यचन्द्रादीनां ज्योतिषां तत्प्रकाशकस्य ज्ञानस्यापि च वृत्तिरूपस्य प्रकाशकम्। तदुक्तम्—वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती। न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ (वाक्य०ब्रह्मका० १२६) सर्वेषां बहिरन्तरवस्थितानां ज्योतिषामपि प्रकाशकत्वादिदं शब्दतत्त्वं परब्रह्मैव। तदुक्तम्—सैषा संसारिणां संज्ञा बहिरन्तश्चवर्तते। तन्मात्रामप्यतिक्रान्तं चैतन्यं सर्वजन्तुषु ॥ (वाक्य०ब्रह्मका १२६) इति। व्याख्यातञ्च हरिणा—योऽयं चैतन्ये वाग्रूपताऽनुगमस्तेन लोके ससंज्ञो विसंज्ञ इति व्यपदेशः क्रियते। एवं ह्याह—अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः। तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुड्यवत् ॥ इति। अन्तःसंज्ञानामपि सुखदुःखसंविन्मात्रा यावद् वाग्रूपताऽनुवृत्तिस्तावदेव भवति। बहिःसंज्ञेषु तन्निबन्धनो लोकव्यवहारस्तद्भावान्नियतमुत्सीदेत्। नहि सा चैतन्येनानाविष्टा जातिरस्ति यस्यां स्वपरसंबोधो यो वाचा नानुगम्यते। तस्माच्चितिक्रियारूपमलब्धवाक्शक्तिपरिग्रहं न विद्यते। वाक्तत्त्वरूपमेव चितिक्रियारूपमित्यन्ये। तथा हि—

भेदोद्ग्राहविवर्तेन लब्धाकारपरिग्रहा।
आम्नाता सर्वविद्यासु वागेव प्रकृतिः परा ॥१॥
एकत्वमनतिक्रान्ता वाङ्नेत्रा वाङ्निबन्धना।
पृथक्प्रत्यवभासन्ते वाग्विभागा गवादयः ॥२॥
षड्द्वारां षडधिष्ठानां षट्प्रबोधां षडव्ययाम् ॥
ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते ॥३॥ इति।

तदेवं शब्दाद्वयवादो नाद्वैतवेदान्तिनां ब्रह्माद्वयवादमतिशेते।

वेदान्तदर्शनेषु ब्रह्मसूत्राणां व्याख्याविशेषमूलकं पूर्णप्रज्ञदर्शनमप्येकम्। तथा हि—"स आत्मा तत्त्वमसि श्वेतकेतो" इत्यादि वेदान्तवाक्यजातस्य भङ्ग्यन्तरेणार्थान्तरपरत्वमुपपाद्य ब्रह्ममीमांसाविवरणव्याजेनानन्दतीर्थः प्रस्थानान्तरमास्थिषत। तन्मते च

द्विविधं तत्त्वं स्वतन्त्रास्वतन्त्रभेदात्। तदुक्तं तत्त्वविवेके—स्वातन्त्र्यमस्वातन्त्र्यञ्च द्विविधं तत्त्वमिष्यते। स्वतन्त्रो भगवान् विष्णुर्निर्दोषोऽशेषसद्गुणः॥ इति। अस्वतन्त्रञ्च तदितरच्चराचरम्। जीवेश्वरयोश्च भेद एव नाभेदः। तत्त्वमस्यादिश्रुतयस्तु नैकत्व-प्रतिपादनपरा किन्तु तयोर्बुद्धिसारूप्यम्, शरीररूपैकस्थाननिवेशित्वं हृदयादिरूपा-भिव्यक्तिस्थानैक्यमपेक्ष्य वा प्रवृत्ताः। तथा च परमा श्रुतिः—

जीवस्य परमैक्यञ्च बुद्धिसारूप्यमेव वा।
एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य वा॥
न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः।
स्वातन्त्र्यपूर्णतेऽल्पत्वपारतन्त्र्ये विरूपता॥ इति।

किञ्च एकमेवाद्वितीयं ब्रह्मेत्यादयः श्रुतयस्तु अस्मिन् ग्रामेऽयमेक एवाद्वितीयः पुरुष इतिवत्सजातीयभेदं वारयन्ति। किञ्च प्रत्यक्षादिप्रमाणसिद्धो भेद इति तद्बलेन तत्त्वमस्यादिश्रुतेः 'आदित्यो यूपः' इत्यादिवदन्यार्थपरत्वमेव युक्तम्। तथा हि सर्वविध-प्रत्यक्षसिद्धो भेद इति नापलपयितुं शक्यते। अनुमानेनाऽपि भेदोऽवसीयते। परमेश्वरो जीवाद्भिन्नः, तं प्रति सेव्यत्वात्, यो यं प्रति सेव्यः स तस्माद् भिन्नः, यथा भृत्याद् राजा इति। नहि 'सुखं मे स्याद् दुःखं मे न मनागपि' इति पुरुषार्थमर्थयमानाः पुरुषाः स्वपतिपदं कामयमानाः सत्कारभाजो भवेयुः प्रत्युत सर्वानर्थभाजनं भवन्ति। तदाह—

घातयन्ति हि राजानो राजाऽहमितिवादिनः।
ददत्यखिलमिष्टञ्च स्वगुणोत्कर्षवादिनाम्॥ इति।

एवं ज्ञेयत्वादिनाऽपि भेदोऽनुमातव्यः। तथा श्रुत्यापि भेदोऽव-गन्तव्यः। तथा च श्रुतिः—"सत्यमेतमनुविश्वे" इत्यादिकमुपक्रम्य "सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा मयि वारुणयो मयि वारुणयः" इति। "इदं ज्ञान-मुपाश्रित्य मम साधर्म्यमागताः" इति स्मृतिः। 'जगद्व्यापारवर्जम्' इत्यादिसूत्राणि च भेदप्रख्यापकाणि। 'ब्रह्मविद् ब्रह्मैव भवति' इति श्रुतिस्तु—"संपूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्" इतिवत्।

प्रपञ्चो यदि वर्तेत निवर्तेत न संशयः।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥

इति वचनन्तु यद्ययं प्रपञ्चो वर्तेत उत्पद्येत तर्हि निवर्तेत न संशयः। तस्मादनादिरेवायं प्रकृष्टः पञ्चविधो भेदप्रपञ्चः। इदं द्वैतं मायामात्रम्। मायेति भगवदिच्छा उच्यते प्रज्ञप्तिश्च। अद्वैतं समाभ्यधिकशून्यं विष्णुतत्त्वमेव परमार्थतः, विष्णुसमाभ्यधिककल्पनारूपा द्वैतकल्पना तु अपरमार्था इति। तथा च परमा श्रुतिः—

जीवेश्वरभिदा चैव जडेश्वरभिदा तथा।
जीवभेदो मिथश्चैव जडजीवभिदा तथा॥
मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः।
सोऽयं सत्योऽप्यनादिश्च सादिश्चेन्नाशमाप्नुयात्॥
न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः।
कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते॥

द्वैतं न विद्यते इति तस्मादज्ञानिनां मतम्। एकविज्ञानेन सर्वविज्ञानञ्च विष्णोः प्रधानत्वकारणत्वादिना युज्यते न तु सर्वमिथ्यात्वेन। यथा प्रधानपुरुषाणां ज्ञानाज्ञानाभ्यां ग्रामो ज्ञातोऽज्ञात इत्येवमादिव्यपदेशो दृष्टः। यथा च कारणे पितरि ज्ञाते जानात्यस्य पुत्रम्, एवं मृत्पिण्डेन ज्ञातेन सर्वं मृण्मयं जानाति। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेरप्ययमाशयः। यस्य नाम्नो वाचारम्भणं बहिः सदपि वाचा बुद्धौ प्रकल्पिताकारं मृदादिकं विकारस्तदविकृतं नित्यं नामधेयं मृत्तिकेत्यादिकमित्येतद् वचनं सत्यमिति। 'अथातो ब्रजिज्ञासा' इति सूत्रार्थस्तु—अथशब्दो मङ्गलार्थः, ब्रह्मजिज्ञासा मङ्गलमिति। यद्वाऽधिकारार्थः। लक्षणाया ब्रह्मविचाररूपाया जिज्ञासाया अधिक्रियमाणत्वसंभवात्। आनन्तर्यार्थो वा, श्रवणानन्तरं मननात्मिका ब्रह्मविचाररूपा ब्रह्मजिज्ञासा कर्तव्या इति। अतःशब्दो हेत्वर्थः। यतो नारायणप्रसादमन्तरेण न मोक्षो लभ्यते, प्रसादश्च न ज्ञानमन्तरेण, अतो ब्रह्मजिज्ञासा कर्तव्येति। जिज्ञास्यब्रह्मणो लक्षणमुक्तम्—जन्माद्यस्य यत इति। सृष्टिस्थित्यादि यतो भवति तद् ब्रह्मेति वाक्यार्थः। तत्र प्रमाणमप्युक्तम्—'शास्त्रयोनित्वात्' इति। शास्त्रं योनिर्ज्ञापकं यस्येति बहुव्रीहिः। शास्त्रस्य तत्र प्रामाण्यमुपपादितम्—'तत्तु समन्वयात्' इति। शास्त्रस्वरूपन्तु स्कान्दे उक्तम्—ऋग्यजुःसामाथर्वञ्च भारतं पाञ्चरात्रकम्। मूलरामायणञ्चैव शास्त्रमित्यभिधीयते॥ यश्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्। अतोऽन्यो ग्रन्थ-

विस्तारो नैव शास्त्रं कुवर्त्म तत् ॥ इति । दिङ्मात्रमत्र प्रदर्शितं विस्तरस्तु आनन्दतीर्थभाष्यादौ द्रष्टव्यः।

गौडीयं वेदान्तदर्शनं तु सर्वेभ्यो वेदान्तदर्शनेभ्योऽर्वाचीनम्। अस्य च प्रस्थानस्य मूलभूतं व्याससूत्रेषु गोविन्दभाष्यम्। तन्मतन्तु—जीवस्य स्वज्ञानपूर्वकं यत् सर्वेश्वरस्य पुरुषोत्तमस्य स्वरूपतो गुणतश्च परिज्ञानं ततो मुक्तिः। तदुक्तम्—"ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैक्लेशैर्जन्ममृत्युप्रहाणिः। तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवलमाप्तकामः ॥ इति। यदा तत्त्वेन तु ब्रह्मतत्त्वम्, दीपोपमेनेह युक्तः प्रपश्येत्। अजं ध्रुवं सर्वतत्त्वैर्विशुद्धम्, ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ इति च। अत्र प्रथममन्त्रे—तस्य देवस्याभिध्यानात्संकल्पाद् भक्तस्य देहभेदे लिङ्गशरीरप्रध्वंसे सति स देवज्ञ आप्तकामश्चान्द्रब्राह्मपदापेक्षया तृतीयं भागवतं पदं विन्दतीति शेषपूरणेन तृतीयपादार्थः। द्वितीयमन्त्रे तु—दीपोपमेनात्मतत्त्वेन स्वज्ञानेन युक्तो मुमुक्षुर्यदा ब्रह्मतत्त्वं प्रपश्येत् तदा देवं ज्ञात्वा सर्वपाशैर्मुच्यते इति योजना। देवस्य च विशेषणानि—अजं ध्रुवं सर्वतत्त्वैर्विशुद्धमिति। अजं, जन्मादिविकारशून्यम्, ध्रुवं कूटस्थनित्यम्। सर्वतत्त्वैर्विशुद्धम्, प्रधानादितत्त्वैरस्पृष्टम्। तत्र भगवतः स्वरूपं विग्रहश्च विज्ञानानन्दः। विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानात्, रसो वै स इत्यादिश्रवणात्। तच्च भगवत्स्वरूपमैश्वर्यात्मकं शक्त्यात्मकञ्च। मायाख्यया परया शक्त्या च बुद्धिमनोऽङ्गप्रत्यङ्गरहितोऽपि तद्वानिव लक्ष्यते। ज्ञानानन्दविग्रहत्वन्तु तस्य श्रुतिमात्रेण गम्यम्, न तु तर्केण, अचिन्त्यालौकिकवस्तुत्वात्। तदुक्तं भगवता सूत्रकृता—अरूपवदेव हि तत्प्रधानत्वात् (ब्र० सू० ३-२-१४) इत्यत्राधिकरणे गुणाश्च भगवतः सत्यकामत्वसत्यसंकल्पत्वादयो ज्ञानानन्दादयश्चानन्ताः, तेषाञ्च भगवतोऽभिन्नानामपि जलकल्लोलवद् भेदव्यपदेशः। तदुक्तं सूत्रकृता—उभयव्यपदेशात्त्वहिकुण्डलवत् (ब्र० सू० ३-२-२८)। तस्मिंश्च भगवति स्वगतसजातीयभेदौ न स्तः, विजातीयभेदस्त्वस्त्येव, द्वा सुपर्णा इत्यादिश्रुत्या द्वाविमौ पुरुषौ इत्यादिस्मृत्या च भेदस्य सिद्धत्वात्। यद्यपि ज्ञानं कर्म भक्तिश्चेति त्रयं निःश्रेयसोपायस्तथापि ज्ञानभक्त्योरेव समुच्चितयोः साक्षान्निःश्रेयसहेतुत्वम्, कर्मणस्तु चित्तशुद्धिद्वारा तद्धेतुत्वम्। ह्लादसंविदोरभिन्नयोः सारो रतिप्रेमाख्या भक्तिरिति च तस्या लक्षणम्। एषा खलु भक्तिरहैतुक्येव मुक्तिं साधयति नान्या। अहैतुकी निष्कामा।

ऐश्वर्यमाधुर्यभेदेन च भगवतो रूपं द्विविधमिति तज्ज्ञानमपि द्विविधम्— तत्र श्रीयशोदाया ऐश्वर्यज्ञानम्—तद्यथा— किं स्वप्न एतदुत देवमाया किं वा मदीयो ननुबुद्धिमोहः। अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः॥ इति मृद्भक्षणावसरे मुखव्यादाने। श्रीवसुदेवस्य वा—युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ इति। अर्जुनस्य—सखेति मत्वा प्रसभं यदुक्तमिति। माधुर्यज्ञानन्तु श्रीराधायाः, तद्यथा—भागवते दशमे भ्रमरमुद्दिश्य श्रीराधावाक्यम्—मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृतविरूपां स्त्रीजितः कामयानाम्। बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः॥ इति। सर्वासाञ्च व्रजगोपिकानाम्—धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः। यान् ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये (भाग० दशम०)। इति। ये च लोके महादोषत्वेन कीर्तिताः संमुग्धत्वादयोऽष्टादश - तद्यथा–मोहस्तन्द्रा भ्रमो रूक्षरसता काम उल्वणः। लोलता मदमात्सर्ये हिंसाखेदपरिश्रमाः। असत्यं क्रोध आकाङ्क्षा आशङ्का विश्वविभ्रमः। विषमत्वं परापेक्षा दोषा अष्टादशोदिताः॥ इति। ते भगवति महागुणत्वं गता लोकानुग्रहहेतुत्वात्। तथा हि–मुग्धताऽऽशङ्काभ्यामैश्वर्यसेविनां वितर्कविस्मयरसोदयः, माधुर्यसेविनान्तु तत्प्रबोधनादिरसः। लोलतामदाभ्यां सवयसं नियुद्धादिक्रीडा, सुभ्रुवां तु स्मराहववृद्धिः। तन्द्राखेदश्रमा भृत्यानां सेवानन्दविवर्धनाः, मात्सर्यक्रोधहिंसाभिरसतां विनाशात् ताः सद्रक्षा एव। भ्रमलोलताभ्यां पितृवर्गकौतुकाभिवृद्धिः। असत्येन क्वचित्सवयसां सुभ्रुवाञ्च कोपोदयेन तत्तद्रसाभिवृद्धिः। विश्वविभ्रमेण प्रकृतिलीनजीवमात्रानुग्रहः। विषमत्वपरापेक्षाऽऽकाङ्क्षाभिः सर्वभक्तानुग्रह इति। एतेषां भगवति गुणत्वादेव भगवान् निर्दोषपूर्णगुणः स्मर्यते। त एते मौग्ध्यादयो भगवति स्वरूपशक्तिसारभूतलीलानन्दात्मका एव स्वरूपानतिरेकिनखरकुन्तलादिवन्मन्तव्याः। तदेवमैश्वर्यमाधुर्यविषयत्वेन भगवतो ज्ञानं द्विविधम्। तद्द्वारिका भक्तिरपि द्विविधा। तत्राद्या विधिभक्तिः।

अत्र विधिर्भगवन्माहात्म्यप्रतिपादकं शास्त्रमुच्यते। तया सिद्धाः सनिष्ठा दक्षाश्चाऽर्चिरादिमार्गेण परं पदं लभन्ते। ये तु आर्ता हरिं विना क्षणमात्रमपि स्थातुमशक्ता अत एव तदतिकृपार्द्रास्ते खलु भगवतैव तार्क्ष्यवाहनेन नीतास्तद्धाम विशन्ति इति। द्वितीया तु रुचिभक्तिः। तया सिद्धास्तु स्वयं भगवतैव तद्विशन्ति। यत एते तस्यातिप्रेष्ठाः। तदेवं विविधज्ञानभक्तिगोचरः कृष्णाभिधानः पुरुषोत्तमः कृत्स्नशक्ति-

व्यञ्जी स्वयं भगवान् उच्यते। अकृत्स्नतद्व्यञ्जी द्व्येकतद्व्यञ्जी च विलासोंऽशः कला चेति एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्, इति पुराणवचनात्। गौतमीये तन्त्रे च –श्रीकृष्णस्य भगवतस्तच्छक्तिभूतायाः श्रीराधायाश्च तत्त्वत्रयरूपत्वं कार्यत्वकारणत्वतदुभयपरत्वरूपैरुक्तं भगवता स्वयं श्रीबलदेवं प्रति––

सत्वं तत्वं परत्वं च तत्त्वत्रयमहं किल।
त्रितत्त्वरूपिणी सापि राधिका मम वल्लभा॥
प्रकृतेः पर एवाहं सापि मच्छक्तिरूपिणी। इति।

भगवतस्तु वैकुण्ठाख्यं धाम नित्यम्, अप्राकृतत्वात्। तदुक्तं पाद्मे—वैकुण्ठभुवने नित्ये निवसन्ति महोज्वला इति। सूत्रकृता श्रीव्यासेनापि—'अन्तराभूतग्रामवत् स्वात्मनः' इत्यत्र वैकुण्ठाख्यं धाम ब्रह्मात्मकत्वेन वर्णितम्—तदुपरि द्वावंती पुरी तदुपरि मधुपुरी तदुपरि गोकुलमित्येवं भगवद्धामस्थितिक्रमव्यवस्था। भगवतो लीला तु द्विविधा—स्वरूपेण चिच्छक्त्या च कृता लीला सनातनी। तेन प्रकृतिकालाभ्याञ्च कृता तु लीला कादाचित्की। सा च सर्गादौ दैत्यवधादिरूपैव स्यात्। तदेवमैश्वर्यमाधुर्यौदार्यादिगुणरत्नाकरस्य नित्यधामादेः पुरुषोत्तमस्य पूर्णाविर्भावे स्वयं भगवच्छब्दोदितस्यापूर्णाविर्भावे तु विलासांशादिशब्दबोधस्य तस्यैश्वर्यमाधुर्य्यविषयतया द्विविधेन ज्ञानेन जायमाना विधिप्रवृत्ता रुचिप्रवृत्ता चेति द्वेधा भक्तिः साधनरूपा साध्यरूपा च। सैवात्यन्तिकयोः सुखदुःखपरिहारयोः सिद्धौ हेतुः। तदिच्छयैव तस्यां तस्यां ते ते जीवाः प्रवर्तन्ते, तेषूत्तरे श्रेष्ठा इति दर्शितं भगवता सूत्रकृता––"छन्दत उभयाविरोधात्, गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः" इत्यादिसूत्रेषु। व्याख्यातञ्चैतद् गोविन्दभाष्ये। सुबालोपनिषदि च तमःशब्दितसूक्ष्मशक्तिकात्पुरुषाद् ब्रह्माण्डं जातम्, तस्मिन् सहस्रशीर्षाख्यपुरुषवपुषा स एवाविर्भूतः, तस्माद् ब्रह्मरुद्रादिसृष्टिरभूदिति श्रूयते। तथा च परस्य भगवतः परमकारणत्वं सर्वान्तर्य्यामित्त्वं च। तस्माद् ब्रह्मरुद्रयोरुत्पत्तिः, रुद्राद् ब्रह्मणो भीतिः, रुद्रस्यानपहतपाप्मत्वञ्च अवगम्यते। 'अनपहतपाप्मा वा अहमस्मि' इति सृष्टिप्रकरणे शतपथे श्रवणात्। न चैवं विष्णोः श्रूयते। तस्मात्सर्वेश्वरो विष्णुश्चौरेषु मिलितो राजेव जगत्कार्याय देवेषु प्रविष्टः, तस्य स्वेच्छयाऽभिव्यक्तिर्जन्मेत्यभिधीयते। तच्च दिव्यमिति ज्ञानाद् नृणां जन्मनिवृत्तिरिति श्रीभगवताऽभिहितम्—जन्म कर्म च मे दिव्यमित्यादि। तस्मात् त्रिमूर्तिमध्येऽवतीर्णो विष्णुः

साक्षात्सर्वेश्वर इति सिद्धम्। किञ्चाप्राकृतानन्तगुणरत्नाकरो हरिः साक्षात्परम्परया वा आपरोक्ष्येण पारोक्ष्येण वा सर्ववेदवाच्यः। यानि तु निर्गुणब्रह्मप्रतिपादकवाक्यानि तानि हरौ प्राकृतगुणनिषेधपराणि। किञ्च स वेदः कृष्णादिशब्दैः सर्वस्याश्रयभूतं शुद्धं विभुचैतन्यं प्रतिपादयति। जीवप्रकृतिकालादिशब्दैस्तु चिज्जडात्मकमाश्रितमिति। "यतो वाचो निवर्तन्ते, यद्वाचाऽनभ्युदितम्" इत्यादिवचनानि तु भगवतः साकल्येन वाच्यत्वं निषेधन्ति, न तु सर्वथैवावाच्यत्वं वदन्ति, 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतिविरोधात्। साकल्येनावाच्यत्वञ्चानन्तगुणत्वात्। तथा चायं गौडीयवेदान्तदर्शनकृतान्तसंग्रहः—ज्ञानस्वरूपो ज्ञाताऽहमर्थश्चात्मा कर्तृत्वादिमान्। स चेशो जीवश्चेति द्विविधः। तत्रेशो विभुः स्वद्वारा जगत्कर्ता, स्वायत्तवृत्तिकप्रकृतिद्वारा तु तदुपादानञ्चेति 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिकात् सूत्रपञ्चकात् तद्भाष्यपञ्चकाच्चावसीयते। प्रकृतिजीवरूपात्प्रपञ्चात् तदाश्रयस्येशस्य भेदस्त्वानन्दमयाद्यधिकरणेभ्यः सिद्धः। जगज्जन्मादिहेतुत्वञ्च ब्रह्मणः स्वरूपलक्षणम्। तच्च दर्शितम्—"जन्माद्यस्य यतः" इति सूत्रेण। जगच्च परमार्थतः सत्यम्। जीवस्त्वणुः। बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥ इत्यादिश्रुतिभ्यः। परमार्थतो बहुत्वञ्च जीवस्य। ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥ इति। इदं ज्ञानमुपाश्रित्येत्यादिषु विध्वस्ततमसां भगवत्साम्यभाजां बहुत्वाभिधानात्। ज्ञानस्वरूपस्यापि तस्य ज्ञानगुणकत्वं स्वीकार्यम्। यो विज्ञाने तिष्ठन् मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुष इति श्रुतेः। अत्र प्रथमवाक्यस्य योऽन्तर्यामी विज्ञाने चिदेकधातौ जीवे तिष्ठन् तदन्तर्यमयतीत्यर्थः। द्वितीयवाक्ये तु विज्ञानात्मा इत्यनेन चिदेकधातुत्वम्, बोद्धा इत्यनेन तु विज्ञातृत्वमुक्तम्। किन्तु स ज्ञानरूपो गुणस्तस्य नित्यः, नहि विज्ञातुर्विज्ञाते लोपो विद्यत इत्यादिश्रुतेः। इत्थञ्चेशतुल्योऽपि स्वरूपसामर्थ्याभ्यामल्पीयस्त्वेनोपसर्जनत्वात् तादृशोऽसौ भण्यत इत्यंशाधिकरणे तद्भाष्ये च विवृतम्। तदेवं नित्यज्ञानादिगुणकमणुचैतन्यं जीवस्वरूपम्। तदेवं ब्रह्मवदनादिसिद्धोऽपि ज्ञानात्मा जीवस्तद्भिन्नोऽपि तच्छक्तिरूपत्वात्तदंशो निगद्यते। तस्य तदंशभूतस्य स्वांशिभगवद्वैमुख्यान्मायया परिभवस्तत्सांमुख्ये तु सा विलीयते। तत्स्वरूपसाक्षात्कारश्च सदा स्फुरति। तद्वैमुख्यञ्चानादिकालिकमपि सत्सङ्गाद् विनश्यति साम्मुख्यञ्चाविर्भवति। सत्सङ्गविशुद्धे जीवे ज्ञानानन्दात्मकभगव-

त्स्वरूपावरकाविद्याविशेषविनाशात्मा वेदान्तजन्यभगवद्विषयकमानसापरोक्षप्रागभावविनाशात्मा वा भगवत्सम्बन्धः। स एष सत्सङ्गहेतुकाद् भगवत्प्रसादशब्दितात् तत्साम्मुख्यादेव भवति। ततो विरतोऽनुवृत्त्या जीवं प्रति भगवद्गुणावरकोऽविद्याविशेषो विनश्यति। ततस्तम् असौ साक्षात्करोतीति द्वयोरविद्ययोर्ध्वंसो विमोक्षः। तदूर्ध्वंसश्च कार्योऽपि नित्यः, अभावरूपत्वात्। एवञ्च दुःखहानिसुखलाभरूपो मोक्षः। किञ्च दुःखाभावोऽपि आत्मनिष्ठः सन् पुरुषार्थो न तु स्तम्भादिनिष्ठः। तदेवं सर्वेश्वरस्य भगवतः श्यामसुन्दरस्य जीवजडात्मकात् प्रपञ्चाद् भेदः, तज्ज्ञानभक्तिभ्यां जीवस्यात्यन्तिकदुःखहानिसुखप्राप्तिसम्भव इति कृत्स्नं वेदान्तशास्त्रं जीवेशभेदपरम्। तत्र यान्यभेदपराणीव वाक्यानि कानिचित्प्रतीयन्ते तानि क्वचित्तन्मात्रायत्तवृत्तिकतया तन्निष्ठतया तद्व्याप्यतया वा विश्वं तदात्मकमिति बोधयेयुः। क्वचिज्जीवेशयोः स्थानैक्यान्मत्यैक्याच्चाभेदं बोधयन्ति। क्वचिच्छक्तेर्जीवजडरूपायाः शक्तिमतः परेशादनन्यत्वादभेदमाहुः, क्वचिच्च भगवदाविर्भावेषु प्रतीतेः स्वगतभेदं निवारयन्तीति। एषु च स्थूलदृष्ट्या प्राङ्निरूपितेषु वेदान्तदर्शनेषु सप्तसु यद्यपि सन्त्यवान्तराणि बहूनि मतानि। तद्यथा—भर्तृप्रपञ्चमतम्, भट्टभास्करमतम्, अन्यानि च सिद्धान्तलेशे सङ्गृहीतानि। तथापि कालसङ्कोचाद् बिभ्यता समुपेक्षितानीति।

तदेवमद्वैतादिगौडीयान्तेषु सप्तस्वेषु वेदान्तदर्शनेषु उपनिषदो ब्रह्मसूत्राणि गीताशास्त्रं चेति प्रस्थानत्रयं मूलम्। सर्वेष्वपि चैषु दर्शनेषु भक्तिर्ज्ञानं कर्म चेति मुक्तिप्राप्त्यै प्रस्थानत्रयं निर्दिष्टम्। तत्रापि चाधिकारिभेदेन रुचिभेदेन च ज्ञानकर्मभक्तीनां समुच्चितानां समं प्राधान्यम्। सोऽयं वैष्णवानां ज्ञानकर्मसमुच्चयवादः, भक्तेरपि ज्ञानपर्यवसायित्वात्, तत्प्रयुक्तभगवत्सेवारूपव्यापारस्य च कर्मरूपत्वात्। अद्वैतवादिनां तु—अद्वितीयात्मविज्ञानमेवैकं मुक्त्यै प्रभवति। भेदज्ञानसापेक्षस्य कर्मणस्तु न तदानीं सम्भवः, अद्वितीयात्मविज्ञानेन भेदज्ञानस्योपमर्दनात्। कर्म तु चित्तशुद्धिद्वारा ज्ञानस्य साधनम्, भक्तिरपि तथैव।

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।<br>
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥

इति गीतास्मरणाच्च।

तदेवम्—

द्वैतमद्वैतमद्वैतद्वैतं सर्वं पराहतम्।
परस्परं ततः स्वात्मा ब्रह्माऽपि परिशिष्यते ॥१॥
स्वरूपसाम्यं भेदश्चाप्यनयोरनुभूयते।
मुक्तौ भेदोऽस्त्वभेदो वा तस्यां यत्नो विधीयताम् ॥२॥

अथेदं किमपि सर्वामप्यविधेयत्वविधामतिक्रान्तमवश्यं भावयितव्यभावनं समाजशिरसस्समुपसर्पद् भारं महत्याऽऽर्त्या विनिवेद्यते। तत्कर्णाभ्यन्तरवर्त्मनाऽपेक्षा-बुद्धिसङ्गतं सत्कृत्य वहिरर्थवद् विधेयमिति प्रार्थये।

अद्य खलु भारतीयार्यसंस्कृतेः संस्कृतस्य च कालपर्ययेण समुपेक्षके लोके चतुर्दशानामपि विद्यानां ग्रन्थरत्नानि कालेन कीटैः क्रोधपरुषैः कापुरुषैश्च प्रागवधीरितानि सम्मार्जनीभिर्गेहाद् बहिर्हृतानि जलाग्न्यादिसात्कृतान्यवधीर्यन्ते तथा क्रियन्ते च। अतो वानरकरपतितानर्घ्यरत्नवत् कानरकरपतितानि समुपेक्षितानि वेदान्तदर्शनग्रन्थरत्नानि यावन्न विनश्यन्ति तावदेव तानि मुद्रणप्रकाशनाभ्यां व्याख्याटिप्पण्यादिभिः समुपबृंहणेन यथायथं तत्तत्साम्प्रदायिकविशिष्टपुरुषैः, साम्प्रदायिकसंस्थाभिः, वाराणसेयसंस्कृतविश्वविद्यालयेन, विद्वद्भिश्च तत्तद्वेदान्त-विद्यावंश्यैः संरक्षणीयानि संवर्धनीयानि संस्करणीयानि चेति। किञ्चैषां वेदान्त-दर्शनानां सम्प्रदायः साम्प्रतमनवरतमहर्निशं प्रतिक्षणं प्रतिपलं च वार्धकमुपगतं वपुरिवोपनिधनं जिगमिषत् सम्प्रदायनियमाधीतविद्यानां विदुषां क्रमशोऽवसानेनान्येषाञ्च तादृशामनुत्पादेन अरमलञ्च ह्रसति, तद् यावदेव स्नेहवर्तिक्षयात् प्रदीप इव न निर्वाति तावदेव तद्रक्षाविधिर्विधीयताम्। पूर्वक्रमप्राप्ताध्ययनाध्यापनपरम्परास्थापनेन राज्याधिकारिभिः, संस्कृतविश्वविद्यालयेन तत्तत्सम्प्रदायसंस्थाभिर्विद्वद्भिश्च। अस्य च विधेयस्यार्थस्य साम्प्रतं क्रिया केवलमुत्तरं न तु विधानोपायचिन्ता। आदेयस्य प्रदेयस्य कर्त्तव्यस्य च कर्मणः क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसमित्यभियुक्त-वचनं न विस्मर्तव्यम्। तदलमनल्पजल्पनेन।

चैतन्यमिव यश्चायमविच्छेदेन वर्तते।
आगमस्तमुपासीनैस्तस्य रक्षा विधीयताम्॥

अन्ते च विश्वेश्वरं वाणीविनायकौ च वेदान्तदर्शनपरम्परारक्षायै प्रणत्या प्रार्थनया च प्रवणीकुर्वाण आशासे—

विद्यार्थाः परितः पठन्तु सुभृशं शास्त्राणि बद्धादरा
मोदन्तां परिपालिताश्च विभवैर्वेदान्तपारङ्गमाः।
ईतिग्राम उदन्वदन्तमयतां नीत्या हृतः सर्वथा
विश्वेशो विदधातु विश्वमखिलं मोदप्रमोदास्पदम् ॥

---

# सांख्ययोगसम्बन्धिशाङ्करमतालोचनालोचनम्

श्रीरामवृक्षशर्मा, वाराणसीस्थविश्वनाथगुरुकुलमहाविद्यालयेऽध्यापकः ।

परिपक्वमला ये तान् शक्तिपातेन शोधयन् ।
परे तत्त्वे योजयते तस्मै श्रीगुरवे नमः ॥ १ ॥
विज्ञानभिक्षुणाऽन्वर्थनाम्ना द्वेषेण दूषितम् ।
शाङ्करं परमं शास्त्रं यत्नादुद्ध्रियते मया ॥ २ ॥

तत्र सांख्यप्रवचनभाष्यारम्भे एव सांख्याचार्यं कपिलं प्रणमता भिक्षुणा—

एकोऽद्वितीय इति वेदवचांसि पुंसि सर्वाभिमानविनिवर्तनतोऽस्य मुक्त्यै ।
वैधर्म्यलक्षणभिदा विरहं वदन्ति नाऽखण्डतां ख इव धर्मशताविरोधात् ॥

इति शाङ्करमतं कटाक्षितम् । अत्र भिक्षोरिदमभिप्रेतम्—एकमेवाद्वितीयं ब्रह्म इत्येवंजातीयकानि वेदवचनानि पुंसि आत्मनि वैधर्म्यलक्षणस्य भेदस्याभावं वदन्ति । तेन सर्वेऽप्यात्मानश्चिद्रूपतयाऽसङ्गत्वादिना च सदृशा एव न तु विधर्माण इति वदन्ति । तेन च वैधर्म्याभावज्ञानेन कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वादिरूपसर्वाभिमान-विनिवृत्त्या जीवस्य मुक्तिः सिध्यति । श्रीशङ्करभगवत्पादाभिप्रेतां सर्वधर्मशून्यत्व-रूपां स्वगतसजातीयविजातीयभेदाभावोपलक्षितस्यात्मनोऽखण्डतां तु न वदन्ति । ख इव आत्मन्यपि चित्त्वासङ्गत्वनित्यत्वसत्त्वादिधर्मशतसत्त्वेऽविरोधादिति ।

अत्रेदमालोच्यते—यदि "एकमेवाद्वितीयं ब्रह्म" इति वाक्यं पुंसि वैधर्म्यलक्षण-भेदाभावमेव वदति तदा एकमेवाद्वितीयमिति पदत्रयस्य वैयर्थ्यम्, एकेनैव पदेन तदुक्तेः । तस्मात्स्वगतसजातीयविजातीयभेदनिषेधार्थं पदत्रयोपादानमिति । एवं पदत्रयेण ब्रह्मणि भेदत्रयस्य निषेधेऽखण्डत्वं ब्रह्मणः सिध्यति । किञ्च, ख इव धर्मशताविरोधादित्यपि श्रुतिविरुद्धम् । तथा हि—यदि ब्रह्मणि धर्मशताविरोधस्तर्हि ब्रह्मणो धर्मोपग्रहप्रवर्तिष्णु-वाग्व्यवहारगोचरत्वसम्भवेन तत्तद्धर्मपुरस्कारेण मनसा च गोचरीकरणात् "यत्र वाचो निवर्तन्ते अप्राप्य मनसा सह" इति, "यद्वाचानभ्युदितं येन वागभ्युद्यते" इति,

"यस्यामतं तस्य मतं मतं यस्य न वेद सः" इति, "न तत्र चक्षुर्गच्छति न वाग्गच्छति न मनः" इत्येवंजातीयकानां श्रुतिवचनानां का गतिः। किञ्च, वैधर्म्यलक्षणाभिदाविरहोक्त्या वैधर्म्याभिमानरूपभेदविभ्रमनिवृत्तावपि कथं सर्वाभिमानविनिवृत्तिरिति भिक्षुरेव प्रष्टव्यः। यदपि—"तत्त्वमेव त्वमेवैतदेवं श्रुतिशतोदितम्। सर्वात्मनामवैधर्म्यं शास्त्रस्यास्यैव गोचरः ॥" इत्युक्तं तदपि न सम्यक्। तथा हि—तत्त्वमसीति महावाक्यस्य तत्त्वंपदार्थयोः सादृश्यमूलकोऽभेदाध्यारोपो विषय इति भिक्षोरभिप्रेतम्। तत्तु "ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसि श्वेतकेतो" इति वाक्यस्वारस्यविरुद्धम्। यतोऽत्र स आत्मा इति सर्वात्मकस्य ब्रह्मणोऽभेदं जीवस्वरूपे प्रबोध्य तत्त्वमसीत्यनेन तत्त्वंपदार्थयोरैक्यं प्रबोध्यत इत्युचितम्। किञ्चात्र एकविज्ञानेन सर्वविज्ञानोपपादनाय ब्रह्मणः सर्वात्मकत्वं प्रतिपिपादयिषितम्, तच्च जीवस्य परस्माद्भेदे नोपपद्येतेति।

यदपि शाङ्करमतस्य निराचिकीर्षया—

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् ॥
कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते।
सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते ॥
परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते।
ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया ॥
सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे।
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ॥
मयैव कथितं देवि जगतां नाशकारणात्।

इति पद्मपुराणोक्तत्वप्रख्यापनपूर्वकं श्लोकपञ्चकमुपन्यस्तम्, तदपि न, एतेषां वचनानां सर्वेषु पद्मपुराणपुस्तकेष्वनुपलम्भेनाप्रामाणिकत्वात्। अत एव १८९४ ई० वर्षे पुण्यपत्तने नगरे आनन्दाश्रममुद्रणालये मुद्रयित्वा प्रकाशिते पद्मपुराणपुस्तके एतानि वचनानि कोष्ठकबद्धानि कृतानि। यत्तु—"एषा तेऽभिहिता सांख्ये बुद्धियोंगे त्विमां शृणु" इत्यादिस्मृतिषु सांख्यशब्देन सांख्यशास्त्रमेव ग्राह्यम्, न पुनर् अर्थान्तरं कल्पयितव्यमिति भिक्षोर्वचस्तदपि नापेशलम्। यथा 'योगे' इत्यस्य न

योगशास्त्रपरत्वं तथा 'सांख्ये' इत्यस्यापि न सांख्यशास्त्रपरत्वम्। किञ्चात्र 'सांख्ये' इति सप्तम्यन्तेन पदेन "न त्वेवाहं जातु नाशम्" इत्यादिनोपक्रान्तः "न जायते म्रियते वा" इत्यादिनोपपादितश्च परमार्थवस्तुविवेकः परामृश्यते, परमार्थदर्शनस्यैवोपक्रान्तत्वात्, उपसंहृतत्वाच्च। न तु सांख्यशास्त्रम्, सांख्यशास्त्रोक्तविषयाणामत्र साधारण्येनाप्रतीयमानत्वात्। किञ्चात्र गीताशास्त्रे निष्ठाद्वयं प्रतिपिपादयिषितम्, "ज्ञानयोगेन सांख्यानां कर्मयोगेण योगिनाम्" इति विभागश्रवणात्। अत्र सांख्यानामित्यस्य सांख्यशास्त्रज्ञानवतां सांख्यशास्त्राध्यायिनां वेत्यर्थे गृहस्थानामपि सांख्यानां कर्मत्यागेन ज्ञानयोगेनैव निष्ठोक्ता स्यात्, या शास्त्रविरुद्धा शिष्टजुगुप्सिता च स्यात्। अतोऽत्र सांख्यानामित्यस्य आत्मानात्मविषयकविवेकज्ञानवतां परमहंसपरिव्राजकानामित्येव योगलभ्योऽर्थः। तथैव "एषा तेऽभिहिता सांख्ये" इत्यत्रापि सांख्यपदस्य परमार्थवस्तुविवेक एव योगलभ्योऽर्थः। यत्तु सांख्यशास्त्रीयप्रथमाध्यायस्य "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इति प्रथमसूत्रस्य व्याख्यावसरे भिक्षुणा—"यत्तु कण्ठचामीकरवत् सिद्धेऽप्यसिद्धत्वभ्रमात् पुरुषार्थता स्यात्" इति शाङ्करमतमनूद्य "तन्न, एवमपि पुमान् निर्दुःख इति श्रवणमननोत्तरं दुःखहानार्थं निदिध्यासनादौ प्रवृत्त्यनुपपत्तेः। बह्वायाससाध्ये ह्युपाये फलनिश्चयादेव प्रवृत्तिर्भवति। प्रकृते तु श्रवणमननाभ्यां सिद्धत्वज्ञानाद् नाप्रामाण्यज्ञानानास्कन्दितफलस्यासिद्धत्वनिश्चयोऽस्ति" इति प्रत्याख्यातम्, तदपि भावानवबोधमूलकम्। तथा हि—प्रत्यक्षस्य पुंसि दुःखित्वभ्रमस्य निदिध्यासनहेतुकात्मसाक्षात्कारं विना श्रवणमननाभ्यां जायमानेन परोक्षेण निर्दुःखित्वप्रत्ययेनानिवर्त्यतया श्रवणमननोत्तरं दुःखहानार्थं निदिध्यासनादौ प्रवृत्त्युपपत्तेः। दृश्यते च प्रादेशमितश्चन्द्र इत्यस्य प्रत्यक्षविभ्रमस्य ज्यौतिषशास्त्रजनितेन लक्षयोजनपरिमितश्चन्द्र इति परोक्षेण विपरीतप्रत्ययेन प्रमारूपेणानिवर्त्यता।

यत्तु "न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः" इति सप्तमसूत्रव्याख्यावसरे भिक्षुणोक्तम्—"अथैवमात्मनाशादेव मोक्षोऽस्तु, इति चेन्न, "अहं बद्धो विमुक्तः स्याम्" इति बन्धसामानाधिकरण्येनैव मोक्षस्य पुरुषार्थत्वात्" इत्यत्र शाङ्करमतमेव कटाक्षितं शाङ्करसिद्धान्तमबुध्वा। यथा नैषधे बौद्धमुखेन भिक्षुवदेव शाङ्करमतमुपालब्धम्—"स्वञ्च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम्। इति स्वोच्छित्तिमुक्त्युक्तिर्वैदग्धी वेदवादि-

नाम् ॥" इति । तदिदं बाह्यानां वचनमिव तदनुगामिनो भिक्षोरपि वचनं सिद्धान्तानवबोधमूलकमेव, विदेहकैवल्ये कार्यकारणसंघातरूपोपाधेरुच्छेदेऽप्युपधेयस्यात्मनोऽनुच्छेदात् । नहि घटरूपोपाध्युच्छेदेनाकाशस्योच्छेद उपपद्यते । यत्तु "विजातीयद्वैतापत्तिश्च" इति द्वाविंशे सूत्रे विज्ञानवादिमतखण्डनावसरे भिक्षुणोक्तम्—एभिश्च सूत्रैर्ब्रह्ममीमांसासिद्धान्तो निराक्रियत इति भ्रमो न कर्तव्यः, ब्रह्ममीमासायां केनापि सूत्रेणाविद्यामात्रतो बन्धस्यानुक्तत्वात्, "अविभागो वचनात्" इत्यादिसूत्रैर्ब्रह्ममीमांसाया अभिप्रेतस्याविभागलक्षणाद्वैतस्याविद्यादिवास्तवत्वेऽप्यविरोधाच्च । यत्तु वेदान्तिब्रुवाणामाधुनिकस्य मायावादस्यात्र लिङ्गं दृश्यते, तत्तेषामपि विज्ञानवाद्येकदेशितया युक्तमेवेत्यग्रिमतद्वचनेनैव पराहतम् । यदि तूच्यते वेदान्तिब्रुवाणामाधुनिको मायावादो न ब्रह्ममीमांसासिद्धान्त इति भिक्षोरभिप्राय इति न परस्परपराहतिरिति, तदेदं वक्तव्यम्—भ्रान्तो भिक्षुर्ब्रह्ममीमांसासिद्धान्तं न वेत्त्येव, वस्तुतो मायावाद एव श्रीमद्भगवत्पादसम्मतः । औपनिषदो ब्रह्ममीमांसासिद्धान्तः । स्थापितश्चासौ ब्रह्मसूत्रशाङ्करभाष्ये, यत्र भिक्षोः पङ्गुः पराक्रमः । यदपि—"अविभागो वचनात्" इत्यादिसूत्रैर्ब्रह्ममीमांसाया अभिप्रेतस्याविभागलक्षणाद्वैतस्याविद्यादिवास्तवत्वेऽपि—"अविरोधाच्च" इत्यग्रे उक्तम्, तदपि स्वरूपव्याक्रिययैव पराकृतम् । तथा हि—अविद्यादीनां वास्तवत्वेऽप्यद्वैतस्याविरोध इति वचः 'जिह्वा मे नास्ति' इतिवद् व्याहतम् । यत्तु विज्ञानवाद्येकदेशित्वं भगवत्पादानामुक्तम्, तदपि भिक्षोर्विज्ञानवादाबोधमूलकम् । तथा हि सन्त्येते विज्ञानवादाद्भेदा औपनिषदेऽद्वैतदर्शने—

१—विज्ञानवादी विज्ञानस्य क्षणिकत्वं ब्रूते, यत् सत् तत् क्षणिकमिति स्थितेः । अद्वैती तु नित्यत्वम् । साधितश्चैतत पञ्चदश्यामारम्भे एव ।

२—प्रथमो विज्ञानस्यानेकत्वम्, क्षणिकत्वेन । द्वितीयस्तु कूटस्थनित्यत्वेनैकत्वम्, "एकमेवाद्वितीयम्" इत्यादिश्रुतेः, बहुशो भाष्यादिषु श्रुतत्वात् ।

३—प्रथमो विज्ञानस्य परिणामम् । स च परिणामो न सांख्यानामिव सान्वयः, किन्तु निरन्वयः । द्वितीयो विवर्तम् । अतात्त्विकोऽन्यथाभावरूपो विवर्तस्तु भामतीमङ्गलपद्ये शारीरकभाष्ये सुबहुशः श्रुत इति न तत्र प्रयत्यते ।

४—प्रथमो विज्ञानस्यार्थाकारः परिणाम इति ब्रूते । द्वितीयस्त्वन्तःकरणस्यार्थाकारः परिणामो वृत्तिरूप इति ।

५—प्रथमो बाह्यार्थसत्तां न स्वीकुरुते। द्वितीयस्तु वृत्तिहेतुतया तत्सत्तामभ्युपैति।

६—प्रथमो विज्ञानपरिणामस्य ग्राह्यार्थस्य मायोपमत्वम्। तदुक्तं महायानसूत्रालङ्कारे—"मायोपमान् पश्यति लोकधातून्", "मायोपमान् वीक्ष्य स सर्वधर्मान्" इति। द्वितीयो मायापरिणामत्वेन मायामयत्वम्।

७—प्रथम एकस्मिन् ग्राह्यग्राहकभावाभ्युपगमेन स्वप्रकाशत्वम्। द्वितीयः परप्रकाशत्वाभावेन प्रकाशरूपत्वेन च स्वप्रकाशत्वम्।

८—विज्ञानवादे विज्ञानस्य ग्राह्यग्राहकाकारपरिणामनिवृत्तिर्मोक्षः। अद्वैतवादे नित्यनिवृत्तस्याविद्याप्राप्तस्य प्रपञ्चस्य निवृत्तिर्ज्ञानमात्रम्।

९—आद्यो बाह्यार्थस्य सांवृतं सत्वं मन्यते। संवृतिश्च भ्रान्तिधीरेवानिर्वाच्या। द्वितीयस्तु व्यावहारिकं प्रातिभासिकं च सत्त्वम्। मूलतूलभेदेन तत्प्रयोजकञ्चानिर्वाच्यमविद्याद्वितीयम्।

१०—आद्यमते विज्ञानस्य वासनासहकारेण स्वाकारजगत्स्रष्टृत्वम्। द्वितीयमते मायासहकारेणाविद्यासहकारेण च ईशजीवयोर्जगद्विवर्तोपादानत्वम्।

११—आद्यमते सर्वं विज्ञानं स्वलक्षणमात्रविषयकं निर्विकल्पकम्, अपोहादिविषयकं सविकल्पकं वा भ्रान्तम्, असदर्थावभासमानात्। द्वितीयमत औपनिषदं तत्त्वमस्यादिवाक्योत्थमखण्डब्रह्मविषयकं निर्विकल्पकं स्वार्थाबाधेन सर्वथा प्रमाणम्।

१२—प्रथमो भ्रान्तिमेवाविद्यां भावत्वेनाभावत्वेन चानिर्वाच्यामनादिपरम्परासिद्धत्वेन नित्यां च मन्यते। द्वितीयस्तु—

भ्रमात्संस्कारतोऽप्यन्या मायद्धकमृदुदाहृतेः।
अविद्यानादिभावात्मा मता वाचस्पतेरिह॥

इति कल्पतरौ वदन् भ्रमसंस्कारोभयभिन्नाऽनिर्वाच्याऽऽत्मशक्तिरनादिभावरूपाऽविद्येति मन्यते।

१३—योगाचारमतम् "आत्मैवेदं सर्वम्" इत्यादि श्रुत्योपक्रान्तम्। अद्वैतमतं तु "अगन्धमरसम्" इत्यादिनोपसंहृतं सिद्धान्तभूतमिति।

यस्त्वौपनिषदस्याद्वैतमतस्य विज्ञानवाद्येकदेशित्वप्रख्यापनाय भिक्षोः प्रयासो

मायावादमसच्छास्त्रमित्यादिवचनोपन्यासरूपः, स त्वेतादृशानां वचनानां भिक्षुसयूथ्यैः प्रक्षिप्तत्वान्निष्फल एव ।

यदि तु पद्मपुराणे न प्रक्षिप्तानि वचनानि सन्तीति भिक्षुः प्रतिजानीते, तदा भस्मरुद्राक्षमालाधारणादीनां प्रशंसनं तन्निन्दा च परस्परविरुद्धं कथंकारमुपपद्येत ।

किञ्चाग्रे—"अनयैव च रीत्या नवीनानामपि प्रच्छन्नबौद्धानां मायावादिनामविद्यामात्रस्य तुच्छस्य बन्धहेतुत्वं निराकृतं वेदितव्यम्" इति यदुक्तं भिक्षुणा, तदपि न, तथा हि—स्वप्ने यथा तुच्छस्य बन्धहेतुत्वं दृष्टम्, तथैवाविद्यायास्तत्कार्यस्य च बन्धहेतुत्वमुपपद्यते ।

किञ्चाविद्यायास्तुच्छत्वं ब्रुवाणो भिक्षुरौपनिषदमद्वैतवादं न वेत्त्येव, तन्मते मायायास्तुच्छत्वानङ्गीकारात्, अविद्याया अनिर्वाच्यत्वस्यैव स्वीकाराच्च ।

किञ्च, वेदान्तिब्रुवाणामिति प्रच्छन्नबौद्धानामिति विज्ञानवाद्येकदेशितयेति चैवंविधं बहु प्रलपन् भिक्षुरात्मनोऽसाधुत्वं प्रख्यापयति । यच्च चतुर्विंशे सूत्रे भिक्षुणोक्तम्—"अपि चाविद्यायाः साक्षादेव दुःखभोगाख्यबन्धहेतुत्वे ज्ञानेनाविद्याक्षयानन्तरं प्रारब्धभोगानुपपत्तिः, बन्धपर्यायस्य दुःखभोगस्य कारणनाशात्" इति, इदमप्यौपनिषदमताज्ञानमूलकम्, प्रक्षालिते घृतलशुनादिभाण्डे स्नेहगन्धानुवृत्तिवद् अविद्यालेशानुवृत्त्या प्रारब्धभोगोपपत्तेः । यदपि प्रथमाध्यायस्य षड्विंशसूत्रव्याख्यावसरे—"नासद्रूपा न सद्रूपा माया नैवोभयात्मिका । सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी ॥" इति सौरवाक्यमन्यथा व्याख्यातम्, तथा हि—मायाख्या प्रकृतिः परमार्थसती न भवति, पूर्वपूर्वविकाररूपैः प्रतिक्षणमपायात् । नापि परमार्थाऽसती भवति, अर्थक्रियाकारित्वेन शशशृङ्गविलक्षणत्वात् । नापि तदुभयात्मिका, विरोधात् । अतः सदसद्भ्यामनिर्वाच्या सती एवेति, असती एवेति च निर्धार्योपदेष्टुमशक्या, किन्तु मिथ्याभूतालयाख्यव्यावहारिकासत्यवती परिणामिनित्यतारूपव्यावहारिकसत्यवती चेति ।

अत्रेदं वक्तव्यम्—यदुच्यते "किन्तु मिथ्याभूतालयाख्यव्यावहारिकासत्यवती परिणामिनित्यतारूपव्यावहारिकसत्यवती च" इति, अस्मिन्नर्थे किं प्रमाणम् ? नहि प्रतिज्ञामात्रेणाभिमतार्थसिद्धिः ।

यत्तु "समानः प्रकृतेर्द्वयोः" इति प्रथमेऽध्याये ६६ सूत्रेऽद्वैतिमतं कटाक्षीकृत्य

भिक्षुणोक्तम्—"न तु ज्ञाननाश्याऽविद्या मायाशब्दार्थः, नित्यत्वाऽनुपपत्तेः। किञ्चाविद्याया द्रव्यत्वे शब्दमात्रभेदो गुणत्वे च तदाधारतया प्रकृतिसिद्धिः, पुरुषस्य निर्गुणत्वादिभ्यः। अथ द्रव्यगुणकर्मविलक्षणैवास्माभिरविद्या वक्तव्येति चेन्न, तादृक्पदार्थाऽप्रतीतेरुक्तत्वात्" इति। तदप्यविचारितरमणीयम्। तथा हि—ज्ञाननाश्याया अविद्याया मायाशब्दार्थत्वाभावे नित्यत्वाऽनुपपत्तिरूपो हेतुरुक्तः। तत्रेदं वक्तव्यम्—मायाया नित्यत्वं क्व श्रुतम्? यदनुपपत्तिरविद्याया मायाशब्दार्थत्वे बाधिका भवतीति तु भिक्षुणा न प्रसाधितम्। किञ्च "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते। योगी मायाममेयाय तस्मै विद्यात्मने नमः॥" इति श्रुतौ मायाविद्ययोः सामानाधिकरण्येन निर्देशानुपपत्तिः सत्यात्यन्तिके भेदे।

यदपि—अविद्याया द्रव्यत्वे शब्दमात्रभेदः, गुणत्वे च तदाधारतया प्रकृतिसिद्धिः, द्रव्यगुणकर्मविलक्षणत्वे च तादृक्पदार्थाप्रतीतिः, इत्येते दोषा उक्ताः, तदपि न, अविद्याया मायारूपायास्तत्कार्यरूपाया वा भावाभावविलक्षणत्वस्वीकारेणैतेषां विकल्पानामनवकाशात्। मायाया एतद्रूपत्वे च—

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
अनिर्वाच्या ततो ज्ञेया मिथ्याभूता सनातनी॥

इति सौरवचनमेव प्रमाणम्। अस्य वचनस्यान्यथाव्याख्यानं तु प्रागेव दूषितम्। यत्तु प्रथमेऽध्याये ८७ सप्ताशीतितमे सूत्रे भिक्षुणोक्तम्—"केचित्तु वृत्तौ प्रतिबिम्बितं सदेव चैतन्यं वृत्तिं प्रकाशयति, तथा वृत्तिगतप्रतिबिम्ब एव वृत्तौ चैतन्यविषयता, न तु चैतन्ये वृत्तिप्रतिबिम्बोऽस्तीत्याहुः। तदसत्, उपदर्शितशास्त्रविरोधेन केवलतर्कस्याप्रयोजकत्वात्, विनिगमनाविरहेण वृत्तिचैतन्ययोरन्योन्यविषयताख्यसम्बन्धरूपतयान्योन्यस्मिन्नन्योन्यप्रतिबिम्बसिद्धेश्च, बाह्यस्थलेऽर्थाकारतयैव विषयतारूपत्वसिद्धान्तेऽपि तत्तदर्थाकारताया विषयतात्वौचित्याच्च" इति।

अत्रेदं वक्तव्यम्—वृत्तौ प्रतिबिम्बितं सदेव चैतन्यं वृत्तिं प्रकाशयति, तथा वृत्तिगतप्रतिबिम्ब एव वृत्तौ चैतन्यविषयतेति नाद्वैतवादिनां सिद्धान्तः। वृत्तिर्ह्यन्तःकरणपरिणामरूपान्तःकरणस्य साक्षात्साक्षिण्यध्यस्ततया साक्षात्साक्षिसम्बद्धेति

साक्षिविषयता वृत्तेः। तच्च विषयत्वं तादात्म्यरूपम्, सर्वत्रैव चिच्चैत्ययोस्तादात्म्यस्यैव विषयत्वरूपत्वात्।

वृत्तेस्तु अर्थेन सह आकाराख्यः सम्बन्ध इत्यस्ति वृत्तिविषयत्वे चिद्विषयत्वे च महान् भेदः। एतेन वृत्तिगतप्रतिबिम्ब एव वृत्तौ चैतन्यविषयतेत्यपास्तम्, अनङ्गीकारात्। चैतन्यत्वरूपेऽमूर्ते च न कस्यापि प्रतिबिम्बसम्भवः, किमुत बुद्धेः, दृष्टविरोधात्।

कस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥

इति वचनन्तु प्रतिबिम्बमिवाचरन्ति प्रतिबिम्बन्तीति व्युत्पत्त्या प्रतिबिम्बवद् दृश्यन्त इत्यर्थकम्, अतो न दृष्टविरोधः। किञ्च, अभास्वरे स्वच्छे भास्वरस्याभास्वरस्य वा प्रतिबिम्बो दृष्टः, यथा जलतैलखड्गमुकुरादिषु मुखप्रदीपादेः। न तु प्रदीपे प्रभास्वरे जलतैलादेः प्रतिबिम्बः। तथा च वृत्तात्रभास्वरस्वच्छायां प्रभास्वरस्य चेतनस्य सूर्योपमस्य प्रतिबिम्बो युक्तः, न तु वृत्तेश्चैतन्य इति।

यदप्याधुनिकेन सांख्यब्रुवेण भिक्षुणा श्रीशङ्करभगवत्पादान् कटाक्षीकृत्य प्रथमाध्यायस्य १५१ सूत्रभाष्ये किमप्यनर्गलमुक्तम्, तद् यथा—

"यदपि केचिन्नवीना वेदान्तिब्रुवा आहुः—एकस्यैवात्मनः कार्यकारणोपाधिषु प्रतिबिम्बानि जीवेश्वराः, प्रतिबिम्बिनां चान्योन्यं भेदाज्जन्माद्यखिलव्यवस्थोपपत्तिरिति, तदप्यसत्, भेदाभेदविकल्पासहत्वात्। बिम्बप्रतिबिम्बस्याचेतनतया भोक्तृत्वबन्धमोक्षाद्यनुपपत्तिः, जीवब्रह्माभेदतत्सिद्धान्तक्षतिश्च, जीवेश्वरभिन्नस्यात्मनोऽप्रामाणिकत्वञ्च। अभेदे तु साङ्कर्यापरिहारः। भेदाभेदाभ्युपगमे तु तत्सिद्धान्तहानिः, भेदाभेदविरोधश्च। अस्मन्मते त्वभेदोऽविभागलक्षणो भेदश्चान्योन्याभाव इति। अवच्छेदप्रतिबिम्बादिदृष्टान्तवाक्यानि त्वग्रे व्याख्यास्यामः। स्यादेतत्—बिम्बप्रतिबिम्बादिभेदं परिकल्प्य श्रुत्या बन्धमोक्षव्यवस्था कल्पितेत्येवास्माभिरुच्यते, न तु परमार्थतो बिम्बप्रतिबिम्बभावस्तयोर्भेदो बन्धमोक्षादिकं चेष्यत इति, मैवम्, एवं सति बन्धमोक्षादिश्रुतिगणस्य भेदश्रुतिगणस्य चोभयोर्बाधापेक्षया केवलाभेदश्रुतिगणस्यैवाविभागपरतयैव संकोचो लाघवाद्युक्तः, श्रुतिस्मृत्यन्तरैरविभागस्य सिद्धत्वाच्च" इति।

अत्रेदं वक्तव्यम्—बिम्बप्रतिबिम्बयोर्भेदे प्रतिबिम्बस्याचेतनतया भोक्तृत्वबन्धमोक्षाद्यनुपपत्तिः, जीवब्रह्माभेदरूपतत्सिद्धान्तक्षतिश्चेति यद्भवता दूषणद्वयं दत्तं तदनवधाननिबन्धनम्, सूर्यप्रतिबिम्बस्य सूर्यब्रह्मसमानत्वमिव चित्प्रतिबिम्बस्यापि चित्सदृशत्वात्, प्रतिबिम्बस्य बिम्बधर्मानुसारित्वनियमात्। किञ्च, श्रुतिरपि—"रूपं रूपं प्रतिरूपो बभूव", "जीवेशावाभासेन करोति" इत्यादिका मन्ये न श्रुता भवद्भिः। यत्तु प्रतिज्ञातमत्रैव भिक्षुणा—"अवच्छेदप्रतिबिम्बादिदृष्टान्तवाक्यानि त्वग्रे व्याख्यास्यामः" इति, तत्रोच्यतेऽस्माभिर्वयमपि भवद्व्याख्यानमग्रे खण्डयिष्याम इति। किञ्च, साधिष्ठानं कार्यकरणसंघातोपहितञ्च बुद्धौ चित्प्रतिबिम्बं जीव इति श्रीशङ्करभगवतः सम्मतमिति तन्मताज्ञानमूलक एष आक्षेपः। किञ्च, तव मत इव श्रीभगवत्पादमतेऽपि बन्धमोक्षादिकं मनस एव न ब्रह्माभिन्नस्य जीवस्य, "न निरोधो न चोत्पत्तिः" इत्यादिश्रुत्यनुरोधादित्यनुक्तोपालम्भवचनं भवतः। यत्तूक्तं भेदाभेदाभ्युपगमे सिद्धान्तहानिरिति। तत्रेदमुच्यते—व्यावहारिको भेदः पारमार्थिकस्त्वभेद इति स्वीकारेण का हानिस्तत्र दृश्यतेऽपूर्वबुद्धिना भवता। जीवस्वरूपान्तर्गतस्य आभासस्य कार्यकरणसंघातरूपोपाधेश्च मिथ्यात्वेनाधिष्ठानस्य च सत्यत्वेन जीवस्य प्रतिबिम्बरूपत्वे का नाम जीवब्रह्माभेदसिद्धान्तक्षतिः। नहि "तत्त्वमसि" इत्यादिश्रुतिरपि शक्यार्थयोरैक्यं निर्दिशति, किन्तु लक्ष्यार्थस्य निर्दिष्टस्याधिष्ठानस्यैव। यत्तु बिम्बप्रतिबिम्बभावस्य तयोर्भेदस्य बन्धमोक्षादिकस्य च पारमार्थिकत्वानङ्गीकारे बन्धमोक्षादिश्रुतिगणस्य भेदश्रुतिगणस्य च बाधापत्तिरुक्ता भिक्षुणा, तदपि न सम्यक्। तथा हि—आद्यस्य श्रुतिगणस्य न निरोधो न चोत्पत्तिरित्यादिश्रुतिविरोधेन कल्पितबन्धमोक्षपरत्वात्। द्वितीयस्यापि लोकसिद्धभेदानुवादकत्वात्। तस्मात्तत्त्वमस्यादिश्रुतिसंकोचे मानाभावः। यदप्यग्रे उक्तम्—"श्रुतिस्मृत्यन्तरैरविभागस्य सिद्धत्वाच्च" इति, तत्रेदं वक्तव्यम्—यदि जीवपरयोर्भेदः श्रुतिगणसिद्धस्तदा कथं श्रुतिस्मृत्यन्तरैरविभागस्य सिद्धिः। किमविभाग ऐक्यं चेति भिन्नमिति भवान् मन्यत इत्यलम्।

यत्तु—"अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धेरेकत्वात्" इति १५३ सूत्रे प्रथमेऽध्याये आधुनिकैः सांख्यब्रुवैर्भिक्षुभिः प्रलपितम्—"इमां बन्धमोक्षादिव्यवस्थानुपपत्ति सूक्ष्मामबुद्ध्वैवाधुनिका वेदान्तिब्रुवा उपाधिभेदेन बन्धमोक्षव्यवस्थामैकात्म्येऽप्याहुः,

तेऽप्येतेन निरस्ताः। येऽपि तदेकदेशिन इमामेवानुपपत्तिं पश्यन्त उपाधिगत-चित्प्रतिबिम्बानामेव बन्धादीन्याहुस्ते त्वतीव भ्रान्ताः, उक्तभेदाभेदादिविकल्पासहत्वा-दिदोषात्, अन्तःकरणस्य तदुज्ज्वलितत्वादित्यत्रोक्तदोषाच्च। किञ्च, वेदान्तसूत्रे क्वापि सर्वात्मनामत्यन्तैक्यं नोक्तमस्ति। प्रत्युत—"भेदव्यपदेशाच्चान्यः", "अधिकं तु भेदनिर्देशात्", "अंशो नानाव्यपदेशात्" इत्यादिसूत्रैर्भेद उक्तः। अत आधुनिकाना-मवच्छेदप्रतिबिम्बादिवादा अपसिद्धान्ता एव, स्वशास्त्रानुक्तसन्दिग्धार्थेषु समानतन्त्र-सिद्धान्तस्यैव सिद्धान्तत्वाच्चेत्यादिकं ब्रह्ममीमांसाभाष्ये प्रतिपादितमस्माभिः" इति।

अत्रेदं वक्तव्यम्—का पुनरैकात्म्यस्वीकारे बन्धमोक्षादिव्यवस्थानुपपत्तिः। उपपद्यते ह्यन्तःकरणरूपोपाधिभेदेनैकात्म्यवादेऽपि बन्धमोक्षादिव्यवस्था। नन्वेवं सत्युपाधेरन्तःकरणस्यैव बन्धमोक्षौ नात्मन इति चेत्, को ब्रूते आत्मनो बन्ध-मोक्षौ वास्तवाविति। यतः श्रुतिरप्याह—"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥" इति। एवं प्रतिबिम्बवादेऽपि बन्धमोक्षौ प्रतिबिम्बस्यैव नात्मन इत्यवधेयम्। सांख्यैरपि बन्धमोक्षौ बुद्धिभावा-पन्नायाः प्रकृतेरेव स्वीक्रियेते न तु पुरुषस्य। तदुक्तम्—"तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥" इति सांख्य-कारिकामपि परमर्षिकृतामजानतां भवतां श्लाघ्यं खलु सांख्यसूत्रभाष्यकर्तृत्वम्। यानि तु "भेदव्यपदेशाच्चान्यः" इत्यादीनि सूत्राणि भेदसाधकतयोपन्यस्तानि तान्या-त्मैक्यं यथा न विरुन्धन्ति तथा शाङ्करभाष्ये व्याख्यातानि। यत्तु स्वशास्त्रानुक्त-संदिग्धार्थेषु समानतन्त्रसिद्धान्तस्यैव सिद्धान्तत्वमभ्युपगन्तव्यमित्युक्तम्, तदप्यात्मै-कत्वश्रुत्यनुगृहीतेऽद्वैतसिद्धान्ते न समानतन्त्रसिद्धान्तः श्रुतिविरुद्धोऽनुग्राहकत्वेना-पेक्षितव्य इति पद्धत्या निराकर्तव्यमिति।

यदपि श्रीशङ्करभगवत्पादप्रद्वेषविनिविष्टविवेकैर्विज्ञानभिक्षुभिः प्रलपितं प्रथमेऽ-ध्याये १५७ सूत्रभाष्ये—"यदप्याधुनिकैर्मायावादिभिरुच्यते—अद्वैतश्रुतिविरोधाद् बन्धमोक्षसृष्टिसंहारादिश्रुतयो बाध्यन्त इति, तदप्यसत्, मोक्षाख्यफलस्यापि श्रवण-काल एवाभावनिश्चये श्रवणोत्तरं मननादिविधेरननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्, प्रपञ्चान्तर्गतस्य वेदान्तस्याप्यद्वैतश्रुत्या बाधे वेदान्तावगतेऽप्यद्वैते पुनः संशया-पत्तेश्च। स्वाप्नवाक्यस्य जाग्रति बाधे तद्वाक्यार्थे पुनः संशयवत्। किञ्च, "मिथ्या-

बुद्धिर्नास्तिकता" इत्यनुशासनवद् धर्मादिषु स्वाप्नवन्मिथ्यादृष्टयो बौद्धप्रभेदा एव, सांवृतिकशब्देन प्रपञ्चस्याविधिकतायाश्च तैरभ्युपगमादिति दिक्" इति।

अत्रेदं वक्तव्यम्—मोक्षाख्यफलस्यापि श्रवणकाल एवाभावनिश्चये श्रवणोत्तरमननादिविधेरनुष्ठानलक्षणाप्रामाण्यप्रसङ्गादिति यदुच्यते, तदज्ञानविजृम्भितम्। नहि श्रवणकाले मोक्षाख्यफलस्य तत्साधनानां सर्वस्य वाद्वैतस्य मिथ्यात्वनिश्चयरूपोऽभावनिश्चयः। श्रवणस्य तदानीं संशयाक्रान्तत्वेनासम्भावनाविपरीतभावनाक्रान्तत्वेन च द्वैतमिथ्यात्वनिश्चयाप्रयोजकत्वात्, तस्य संशयाद्यनाक्रान्तत्वे च मननादिप्रवृत्तेर्वैयर्थ्यात्। किञ्च, मोक्षस्य फलत्वोक्तिरप्यज्ञानादेव, अद्वैतिनां मते मोक्षस्य प्रकाशमानानन्दात्मरूपत्वेन नित्यत्वात्। किञ्च, मननादिषु विधित्वोक्तिरप्यसमञ्जसैव, श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिषु सर्वत्रैव लोकतः प्राप्तत्वेन विधित्वानङ्गीकारात्। यत्तूक्तम्—प्रपञ्चान्तर्गतस्य वेदान्तस्याप्यद्वैतश्रुत्या बाधे वेदान्तावगतेऽप्यद्वैते पुनः संशयापत्तेश्चेति, तदप्यपेशलम्, अद्वैतसाक्षात्कारेणाद्वैतश्रुत्यादिरूपसकलद्वैतबाधेऽद्वैतसंशयापादकसकलदोषाणां च बाधेऽहेतुकं संशयं ब्रुवाणस्य ते महद्बुद्धिवैभवम्। यत्तु मिथ्यादृष्टिर्नास्तिकतेत्यनुशासनबलेन धर्मादिषु मिथ्यादृष्टित्वं हेतुं पुरस्कृत्य भगवत्पादे बौद्धत्वमापादितं भिक्षुनामधारिणा, तत्तस्मिन्नेव दूषणमापतति प्रयोक्तृदोषात्। तथा हि—व्यासेन भागवते प्रथमश्लोक एव—"यत्र त्रिसर्गो मृषा" इत्युक्तम्। तेन विश्वस्य मृषात्वमायाति। किञ्च, ऋषभदेवभरतादीनां साक्षात्कृतात्मतत्त्वानां सर्वधर्मपरित्यागो भागवते श्रुतोऽवहितेनाधीयतामित्यलं भिक्षुभिः सह कलहेन।

यदपि द्वितीयेऽध्याये—"तत्कर्मार्जितत्वात् तदर्थमभिचेष्टा लोकवत्" इति सूत्रभाष्ये भिक्षुप्रलपितम्—"यत्तु कश्चिदविवेकी वदति बुद्धिप्रतिबिम्बितपुरुषस्य कर्मेति। तन्न, योगभाष्येऽस्मदुक्तप्रकारस्यैवोक्तत्वेनान्यप्रकारस्याप्रामाणिकत्वात्, प्रतिबिम्बस्यावस्तुत्वेन कर्माद्यसम्भवाच्च। अन्यथा प्रतिबिम्बस्य कर्मतद्भागाद्यङ्गीकारे बिम्बत्वाभिमतपुरुषकल्पनावैयर्थ्यस्य पूर्वं प्रतिपादितत्वात्" इति।

अत्रेदमभिधीयते—नावस्तुनोऽपि प्रतिबिम्बस्य कर्मभोगाद्यसम्भवः, प्रतिबिम्बे उपाधिधर्मानुविधानस्य खड्गतैलादौ मुखादिप्रतिबिम्बे सुबहुशो दृष्टत्वेन बुद्धिधर्मस्य कर्मभोगादेः प्रतिबिम्बे भानसम्भवात्। नापि च प्रतिबिम्बे

कर्मतद्भोगाद्यङ्गीकारे बिम्बत्वाभिमतपुरुषकल्पनावैयर्थ्यम्, बिम्बं विना प्रतिबिम्बासम्भवात्। यदि तु शुद्ध एव कर्मतद्भोगादिकं स्वीक्रियते तदा पुरुषस्यासंगत्वं सांख्यशास्त्रसिद्धं श्रुतिस्मृतिसिद्धं च व्याहन्येतेति।

यदप्युक्तं भिक्षुणा तृतीयाध्याये "न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च" इति १२ सूत्रभाष्ये—"यत्तु मायावादिनो लिङ्गशरीरस्य तन्मात्रस्थाने प्राणादिपञ्चकं प्रक्षिपन्ति पुर्यष्टकञ्चान्यथा कल्पयन्ति तदप्रामाणिकम्" इति। अत्रेदं प्रतिविधीयते—न मायावादिनो लिङ्गशरीरे प्राणादिपञ्चकप्रक्षेपोऽयुक्तः, लिङ्गशरीरे प्राणादिपञ्चकसत्ताया उत्क्रान्तिप्रतिपादकश्रुत्यैव प्रतिपादितत्वात्। तथा हि—"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यादिकं श्रूयते। किञ्च, प्राणानां लिङ्गशरीरे प्रवेशादेवेन्द्रियाणां प्राणपदेन व्यवहारश्छत्रिन्यायेन तत्र तत्र श्रुतौ। तन्मात्रस्थाने तु भूतसूक्ष्माणां लिङ्गशरीराश्रयतयाऽस्वीकारोऽद्वैतिमते। तस्मादेष सर्वोऽपि प्रलापो भिक्षोरद्वैतवादानवबोधमूलक एव।

यत्तु ३ अध्याये "संस्कारलेशतस्तत्सिद्धिः" इति सूत्रे भिक्षोर्वचनम्—"यत्तु कश्चिदविद्यासंस्कारलेशोऽपि जीवन्मुक्तस्य तिष्ठतीत्याह, तन्न, धर्माधर्मोत्पत्तिप्रसङ्गात्, अन्धपरम्पराप्रसङ्गात, अविद्यासंस्कारलेशसत्ताकल्पने प्रयोजनाभावाच्च। एतच्च ब्रह्ममीमांसाभाष्ये प्रपञ्चितम्" इति।

अत्रेदं समाधीयते—जीवन्मुक्तस्याविद्यासंस्कारलेशे प्रारब्धभोगोपपत्त्यर्थं स्वीक्रियमाणेऽपि न धर्माधर्मोत्पत्तिप्रसङ्गः। रागद्वेषपूर्वकप्रवृत्त्यैव हि धर्माधर्मोपचयः। न चैक्यसाक्षात्कारोन्मथितयो रागद्वेषयोः पुनः प्ररोहसम्भवः। नापि कर्तृत्वाभिमानरहितेन क्रियमाणकर्मणि धर्माधर्मोत्पत्तिः, "न हन्ति न निबध्यते" इति स्मरणात, प्रारब्धभोगार्थं जीवन्मुक्तस्य स्वाभाविकचेष्टाया एव वर्णनाच्च। तद्यथा—"नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्।···तिष्ठन् गच्छन् स्वपन् श्वसन्" इत्यादि स्मर्यते। न हि परानन्दं साक्षात्कुर्वतः क्षुद्रसुखसाधनेषु धर्माधर्मजनकेषु रागद्वेषादिपूर्विका प्रवृत्तिः सम्भाव्यते। यदि च कथञ्चित् प्रारब्धकर्मवेगात स्यादपि प्रवृत्तिस्तदापि न तया प्रवृत्त्या धर्माधर्मोत्पत्तिः। तदुक्तम्—"यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमान् लोकान् न हन्ति न निबध्यते॥" इति। यद्यप्यविद्यासंस्कारलेशसत्ताकल्पने प्रयोजनाभाव इति, तदपि न, प्रारब्धकर्मफलोपभोगस्यैव फलस्य सत्त्वात्।

यदपि पञ्चमेऽध्याये "नात्माविद्या नोऽभयं जगदुपादानकारणं निःसङ्गत्वात्" इति सूत्रभाष्ये उक्तं भिक्षुणा—"तस्माद् वेदान्तानामखण्डात्माऽद्वैतं नार्थः। तथाप्याधुनिका वेदान्तिनोऽत्रत्यपूर्वपक्षजातमेव ब्रह्ममीमांसासिद्धान्ततया कल्पयन्ति। तच्च ब्रह्मसूत्रानुक्तत्वेन प्रत्युत तद्विरोधेन चास्माभिस्तत्रैव निराकृतम्" इति। अत्रेदं वक्तव्यम्—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति श्रुतौ पदत्रयेण भेदत्रयनिषेधात् कथं नाखण्डात्माऽद्वैतं श्रुत्यर्थः। यदपि "न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत्पश्येत्" इति श्रुत्यन्तरमविभागप्रतिपादकमस्तीति "एकमेवाद्वितीयम्" इत्यस्याप्यविभक्तमित्येवार्थ इत्युक्तम्, तदपि न, न तु ततोऽन्यत्तद् द्वितीयमस्ति यद्विभक्तं पश्येदिति श्रुत्यर्थस्वीकारेणास्या अपि भेदनिषेधपरत्वात्। विभागो भेदः पृथक्त्वं चेत्येक एव पदार्थ इति स्वीकारेणाविभक्तमित्यस्याप्यभिन्नमित्यर्थकत्वाच्चेत्यलम्।

यदप्युक्तं भिक्षुणा षष्ठेऽध्याये "द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात्"४८ इति सूत्रे—"अद्वैतवादिनामुत्तरं सिद्धान्तश्च न घटते, आत्मसाधकप्रमाणस्याभावात्, तदङ्गीकारे च तेनैवाद्वैतहानेरिति जितं नैरात्म्यवादिभिः" इति। तदिदमुपालम्भवचनं तदैव शोभते यदि स्वप्रकाशचिद्रूपस्यात्मनः स्वसत्तायां प्रमाणान्तरापेक्षा स्यात्, सैव तु नास्तीति नास्त्येव प्रमाणसत्त्वासत्त्वविकल्पेनैतदुपालम्भावसर इति।

यदप्यन्ते प्रद्वेषिणो भिक्षुब्रुवस्य भगवत्पादे पादप्रहारः—"तदिदं सांख्यशास्त्रं कापिलं भगवान् विष्णुरखिललोकहिताय प्रकाशितवान्, यत्तत्र वेदान्तिब्रुवः कश्चिदाह—सांख्यप्रणेता कपिलो न विष्णुः, किन्त्वग्न्यवतारः कपिलान्तरम्—"अग्निः स कपिलो नाम सांख्यशास्त्रप्रवर्तकः" इति स्मृतेरिति, तल्लोकव्यामोहनमात्रम्, "एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात्। प्रसंख्यानाय तत्त्वानां सम्मतायात्मदर्शनम्॥" इत्यादिस्मृतिषु विष्ण्वतारस्य देवहूतिपुत्रस्यैव सांख्योपदेष्टृत्वावगमात्, कपिलद्वयकल्पनागौरवाच्च। तत्र चाग्निशब्दोऽग्न्याख्यशक्त्यावेशादेव प्रयुक्तः। यथा "कालोऽस्मि लोकक्षयकृत्प्रवृद्धः" इति श्रीकृष्णवाक्ये कालशक्त्यावेशादेव कालशब्दः। अन्यथा विश्वरूपप्रदर्शककृष्णस्यापि विष्ण्ववतारकृष्णाद् भेदापत्तेरिति दिक्" इति। तदिदं सर्वं बोधदारिद्र्यमूलकम्। तथा हि—नहि विष्णोरवतारः कपिलो न सांख्यशास्त्रप्रणेतेति भगवतोऽभिप्रायः, चतुर्विंशतिसूत्रीरूपस्य सांख्यशास्त्रस्यापि सत्त्वात्, तत्प्रणेतृत्वाद् विष्ण्ववतारकपिलस्य। किञ्च, कपिलद्वयकल्पने गौरवाच्चेति वचनमपि न शोभनम्,

नहि कपिलद्वयं कल्प्यते, किन्तु कपिलद्वयं क्लृप्तमेव श्रुतिस्मृतिभ्याम्। तथा हि—"ऋषिं प्रसूतं कपिलं यस्तमग्रे" इत्यादिश्रुतिर्भागवतञ्च विष्णोरवतारं कपिलं बोधयति, "अग्निः स कपिलो नाम" इति स्मृतिस्त्वग्नेरवतारं कपिलम्। अग्निः स कपिलो नाम इत्यत्राग्निशक्त्यावेशाद् विष्णुरग्निस्तदवतारः कपिल इति, लक्ष्यार्थं तु मुख्यार्थबाधाभावादत्र न कोऽपि प्रत्येति मृषार्थदुरभिनिवेशिनं भवन्तं विना।

"कालोऽस्मि लोकक्षयकृत्प्रवृद्धः" इत्यत्र तु जन्यभावोपहितस्य भगवतः कालरूपत्वं स्वीक्रियत एवेति कृतं कालशक्त्यावेशज्ञापनदुराग्रहेण। यदपि श्रीकृष्णस्य विष्णववतारत्वमुक्तं तदपि पुराणाज्ञानमूलकम्। तथा हि—"एते चांशकलाः प्रोक्ताः कृष्णस्तु भगवान् स्वयम्" इति श्रीकृष्णस्यावतारत्वप्रत्याख्यानेन विष्णुरूपत्वोक्तिरिति। अत एवावतारेषु श्रीकृष्णस्य न गणना।

तदेवमद्वैतगवी भगवत्पादपालिता।
भिक्षुवाग्दण्डपातेन मूर्च्छिता जरयावृता॥ १॥
अवेक्षमाणेन परं धर्मं संजीविता मया।
कर्मणानेन भगवान् मयि तुष्यतु शङ्करः॥ २॥

———

# सांख्यसम्बन्धिशाङ्करालोचनालोचनम्

श्रीउदयवीरशास्त्री, गाजियाबादस्थः ।

ब्रह्मसूत्रभाष्यकारः शङ्कराचार्यो बहुत्र सूत्रव्याख्यानावसरेषु कपिलाचार्यो नेश्वरवादीति मत्त्वा चेतननिरपेक्षप्रकृतिप्रवृत्तिपरं कापिलमतमभिलक्ष्य महता प्रयासेन तत्प्रत्याचख्यौ । परं कपिलो नेश्वरममन्यत प्रकृतेर्नियन्तारमधिष्ठातारं वेति नैकमप्यत्र प्रमाणमुपलभामहे । शङ्कराचार्यः स्वयमपि ब्रह्मसूत्रभाष्ये कपिलप्रोक्तमेकमपि तादृशमीश्वरप्रतिषेधपरं सन्दर्भं नोदाजहार । केवलं भ्रान्त्याधारां परम्परामाश्रित्य यथाभूतमपि कापिलं मतमन्यथा व्याख्याय तत्प्रत्याख्यानपरो बभूव ।

यत्तु—कपिलप्रोक्तं न किमपि शास्त्रम्, स तूपदेशमात्रेण शिष्याय आसुरये तांस्तानर्थान् प्रबोधयामास, सोऽपि स्वशिष्याय पञ्चशिखाय, स च शास्त्रं रचयामास, परं तदपि शङ्कराचार्यकालाद् बहोः प्रागेव ध्वस्तप्रायमिति शङ्कराचार्यः कपिलप्रोक्तं प्रमाणमीश्वरप्रतिषेधपरं कुतः समुद्धरेदित्यादिकथनम्, तत्सर्वथापि प्रलापमात्रम् । यतः स्वयमेव भाष्यकारः "स्मृत्यनवकाश"-(२।१।१) सूत्रव्याख्यानावसरे—"स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता, अन्याश्च तदनुसारिण्यः स्मृतयः" इति प्रतिपादयन् परमर्षिपदाभिहितकपिलप्रणीतं शास्त्रमङ्गीचकार । तच्च षडध्यायात्मकं षष्टितन्त्रापरनामधेयं लोकप्रसिद्धं सांख्यदर्शनमेव ।

अस्यैव सांख्यस्य "न वायुक्रिये पृथगुपदेशात्" ( वे० सू० २।४।९ ) इति सूत्रभाष्ये भाष्यकारो भगवानाचार्यः सूत्रमेकमित्थमुद्दधार—"एवं हि तन्त्रान्तरीया आचक्षते—"सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्च" इति । वस्तुतो भाष्यकारकाले 'सामान्या करणवृत्तिः' इति पदद्वयं सूत्रस्यासमस्तमेव पठितमासीत् । इदमेव सांख्यदर्शनं षष्टितन्त्रापरनामधेयमुपजीव्य स्वग्रन्थमार्यात्मना रचयता विदुषा ईश्वरकृष्णेन सूत्रस्याद्यं पदद्वयं समासीकृत्य सूत्रमिदं कारिकारूपतां नीतम् । कालान्तरेणाध्ययनाध्यापनप्रणाल्यां कारिकाग्रन्थस्यैव प्रसारबाहुल्येन तदध्येतृभिस्तादृशसंस्कारप्राबल्यात् सूत्राध्ययनावसरे सूत्रपाठप्रतिलिपिकाले वा सूत्रपाठोऽपि कारिकानुसारतां

नीतः, येनाधुना सूत्रकारिकयोः सम एव पाठ उपलभ्यते। परं ब्रह्मसूत्रशाङ्करभाष्यस्य साम्प्रतमपि मुद्रितेषु सर्वेषु प्रामाणिकसंस्करणेषु सूत्रस्यासमस्त एव पाठः, भाष्यस्य प्राचीनहस्तलेखेष्वपि तादृश एवासमस्तपाठः समुपलभ्यते। परमधुनातनेषु वाराणस्यादितः प्रकाशितेषु भाषासंस्करणेषु तादृशासमस्तपाठस्य महत्तामजानद्भिः प्रकाशकैः कारिकापाठसंस्काराभिभूतैः पुरातनपाठोऽपि भाष्यस्य भ्रष्टतां नीतः। स च भाष्यपाठो न कारिकारूपः। एतेन जानीमः—भाष्यकारः प्रमाणत्वेन सूत्रपाठमेवात्रोदाजहार। अत्र विषयेऽधिकं जिज्ञासवो विद्वांसः 'सांख्यदर्शन का इतिहास' इति नामकं सांख्येतिवृत्तप्रतिपादनपरं ग्रन्थमवलोकयन्तु।

एवञ्च भाष्यकारश्चेतननिरपेक्षप्रकृतिप्रवृत्तिरूपं कापिलं मतं यदुपन्यस्यति तत्र न किञ्चित् प्रमाणमुपलभामहे, येन ज्ञायेत—अनेन कपिलवचनेन मतमेतत् प्रसिद्धं भवतीति।

ननु कापिले सांख्यदर्शन एव "ईश्वरासिद्धेः" इतीश्वरासिद्धिप्रतिपादनपरे सूत्रे विद्यमाने क एवं शक्तो वक्तुं नेश्वरप्रतिषेधपरं कापिलं वच उपलभ्यत इति चेत्? न, तत्र सूत्रे जगदुपादानभूतस्यैवेश्वरस्यासिद्धत्वप्रतिपादनात्। अत एव तृतीयाध्यायगतं "स हि सर्ववित् सर्वकर्त्ता,", "ईदृशेश्वरसिद्धिः सिद्धा" (३।५६,५७) इति सूत्रद्वयं संगच्छते। अन्यथानयोः प्रथमतृतीयाध्यायगतयोः प्रसङ्गयोः स्पष्ट एव विरोधः स्यात्। प्रथमाध्याये जगदुपादानभूतस्येश्वरस्यासिद्धिः प्रतिपादिता, जगदुपादानभूत ईश्वरः केनापि प्रमाणेन साधयितुं न शक्यः सांख्यनये, प्रकृतितत्त्वस्य सत्त्वरजस्तमोमयस्य तत्र जगदुपादानत्वस्वीकारात्। अत्र पुनस्तृतीयाध्याये सर्वजगदधिष्ठाता सर्वनियन्ता परमेश्वरः प्रतिपाद्यते। एवम्भूतस्य जगत्कर्तुरीश्वरस्य सिद्धिर्निश्चिता एवेति। अनयैव रीत्याऽनयोः प्रसङ्गयोराशङ्क्यमानो विरोधः शक्यः परिहर्त्तुम्। अत एव पञ्चमाध्याये परमेश्वरस्याधिष्ठातृत्वं प्रतिपाद्य "श्रुतिरपि प्रधानकार्यत्वस्य" (५।१२) इत्युपसंहारसूत्रेण प्रकृतेरेव जगदुपादानत्वं प्रत्यपादयत् सूत्रकारः।

अयमभिप्रायः—सांख्ये हि तत्त्वद्वयमङ्गीकृतम्—चेतनम्, अचेतनं च। चेतनमपि परमात्मा जीवात्मानश्च। तत्र परमात्मा एक एव जगतः केवलमधिष्ठाता तदुत्पत्तिस्थितिप्रलयादिनियामकः। अनन्ता जीवात्मानो भोक्तारः स्वकर्मफलानामधिष्ठातारश्च स्वदेहादीनाम्। प्रकृतिरचेतना परिणामिनी जगदुपादानभूता सत्त्वरजस्तमोमयी।

"द्वा सुपर्णा" ( ऋ० १।१६४।२० ) इति ऋगनुरोधेन "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इनि चेतनवर्गस्य द्वैविध्यं निरणैषीत् कपिलः। न च बद्धमुक्ताभिप्रायेण शक्यं द्वैविध्यमात्मनामुपपादयितुम्। नहि मुक्तोऽनश्नन्नेव सदाऽभिचाकशीति, यावदप्राप्तो मुक्तावस्थां तावदश्नात्येव भोगान् स्वकृतकर्मानुरूपान्।

किञ्चात्मनि चेतने "अधिष्ठानाच्चेति" इति सूत्रयता कपिलेन, सप्तदशसंख्याङ्कितायां सांख्यकारिकायां 'अधिष्ठानात्' इति प्रधानाद्यचेतनातिरिक्तात्मसिद्धौ हेतुमुपन्यस्यता आचार्येणेश्वरकृष्णेन च महत्यारभट्या चेतनस्याधिष्ठातृत्वमुपापादि। "विशेषकार्येष्वपि जीवानाम" इति कापिलसूत्रानुरोधेन विशेषकार्येषु देहादिष्वेव जीवात्मनामधिष्ठातृत्वं सिद्ध्यति। न ह्यल्पज्ञोऽल्पशक्तिर्जीवात्मा सर्वस्य जगतोऽधिष्ठाता सम्भवति, न चाचेतनं प्रकृत्यादिकमनधिष्ठीयमानमङ्गीक्रियते सांख्यैः। कश्चास्य जगतोऽधिष्ठाता स्यादिति विचारः। नहि कश्चिन्मुक्त आत्मा अधिष्ठाता भवितुमर्हति, बद्धापेक्षया तस्य शक्तिप्राबल्ये सत्यपि जगदुत्पत्त्यादौ सामर्थ्यासम्भवात्, तस्य मुक्तावस्थायाः प्रागपि च जगतो विद्यमानत्वात्, सकृदेवान्यमुक्तात्मनामपि जगदधिष्ठातृत्वप्रसक्तेः, सत्स्वनेकेषु मुक्तात्मसु कस्यैकस्यानेकेषां वा केषाञ्चिदधिष्ठातृत्वं स्यादिति नियामकासम्भवाच्च, "अनश्नन्नन्यो अभिचाकशीति" इत्यत्रान्यपदेन परमेश्वर एवाभिप्रेयते नान्यः कश्चिन्मुक्तादिरात्मेति निश्चीयते कापिलमभिमतम्।

अत एव "ईश्वरासिद्धेः" इत्यादिसूत्रदिशा परमेश्वरस्य जगदुपादानत्वं प्रतिषिध्य "तत्सन्निधानादधिष्ठातृत्वं मणिवत्" इति प्रकरणोपसंहारसूत्रेण कपिलश्चेतनस्य सर्वजगन्नियन्तुः परमेश्वरस्यैव जगदधिष्ठातृत्वं प्रत्यष्ठापयत्। सप्तदशसंख्याङ्कितकारिकाव्याख्याने च 'अधिष्ठानात्' इति हेतुं विवृण्वन् माठरः—"ततः पश्यामोऽसौ परमात्मा अस्ति पुरुषो येनाधिष्ठितं प्रधानं महदहङ्कारतन्मात्रेन्द्रियभूतान्युत्पादयति" इत्युपापादयत्। अस्यैव हेतुपदस्य व्याख्याने माठरगौडपादावुभावपि पञ्चशिखसूत्रमेकमित्थमुद्धरतः—"पुरुषाधिष्ठितं प्रधानं प्रवर्त्तते"। पुरुषपदं हि सांख्ये पारिभाषिकं चेतनमात्रपरम्। पूर्वोक्तरीत्या नहि चेतनो जीवात्मा मूलप्रकृतेरधिष्ठाता भवितुमर्हति। एवं चेतनाधिष्ठितप्रधानस्य प्रवृत्तिं व्याचक्षाणः पञ्चशिखः सकलजगदधिष्ठातारं परमात्मानमेवोपपादयति। फलतः कापिलैश्चेतननिरपेक्षा प्रकृतिः प्रवर्त्तत इति मतं नाङ्गी-

क्रियत एव। एवं कपिलनाम्ना तादृङ्मतमाश्रित्य तन्निराकरणं यद्भगवानाचार्यः शङ्करश्चकार सवत्र ब्रह्मसूत्रभाष्ये, तत्सर्वं निराधारमेव सञ्जायते।

ननु यद्येवं कापिलनये प्रधानस्य चेतननिरपेक्षा प्रवृत्तिर्नाङ्गीक्रियते, तदा 'कपिलो निरीश्वरवादी' इति प्रवादः कथमिव बह्वोः कालात् प्रवर्तितः? नायं प्रवादः सर्वथापि निराधारः शक्यते कल्पयितुम्। न केवलमयं प्रवादः, अपि तु शतशो ग्रन्थेषु कपिलस्य निरीश्वरवादित्वमुपपाद्यमानमुपलभामहे, एवं शङ्करकृतैतद्विषय-निराकरणस्य निराधारत्वं कथमुच्येत, इति चेत्, श्रूयताम्—

अस्ति किल सांख्याचार्यपरम्परायां प्रसिद्धोऽतिप्राचीन आचार्यो वार्षगण्यो नाम। स च कापिलतन्त्रं षष्टितन्त्रापरनामधेयमुपजीव्य तद्व्याख्यानभूतमिव सांख्य-योगविषयकं तत्तदर्थप्रतिपादनपरं कमपि ग्रन्थं रचयामास। सोऽपि ग्रन्थः कालान्तरेण षष्टितन्त्रनाम्नैव प्रथित आसीदित्यनुश्रूयते। अयं हि वार्षगण्यः सांख्याचार्योऽपि सन् कापिलमतमनेकेष्वङ्गेषु नाङ्गीकृतवान्। यत्र तत्र च तन्मतमुपेक्ष्य नैजं स्वतन्त्रं मतं प्रतिष्ठापितवान्। यद्यपि वार्षगण्यग्रन्थस्य कतिचन सन्दर्भास्तन्नाम्नैव समुद्धृताः समुप-लभ्यन्ते, तादृशसन्दर्भपर्यालोचनेन कपिलमतविपरीतं वार्षगण्यमतं सुस्पष्टं ज्ञायते। एवम्भूतः प्रधानप्रवृत्तिप्रतिपादनपरोऽन्यतमः सन्दर्भो वार्षगण्यस्य युक्तिदीपिकायां सांख्यकारिकाव्याख्यायां द्व्यधिकशततमे पृष्ठे निम्नाङ्कितरूपेण समुद्धृतो वर्त्तते—

"प्रधानप्रवृत्तिरप्रत्यया पुरुषेणाऽपरिगृह्यमाणाऽऽदिसर्गे वर्त्तते" इति।

आदिसर्गे सृष्ट्यादौ यदा साम्यावस्थामपहाय प्रधानं विषयतां रोचमानं महदादिसर्गोन्मुखतां भजते, एवम्भूता प्रधानप्रवृत्तिस्तदा अप्रत्यया ज्ञानविहीना भवति; अप्रत्ययेति पदार्थं स्वयमेवाह—पुरुषेणाऽपरिगृह्यमाणा, चेतनेनाननुगृह्यमाणा, केन-चिदप्रेर्य्यमाणा इति भावः। चेतनेनेश्वरादिनाऽप्रेर्यमाणा एव प्रकृतिः स्वयं महदादिसर्गे प्रवर्त्तत इत्यभिप्रायः। एतेन जानीमः—वार्षगण्याचार्यः प्रधानप्रवृत्तिं प्रति चेतनापेक्षां नाङ्गीकरोति। कपिलस्तु पूर्वोक्तरीत्या जगदुपादानभूतमीश्वरं प्रतिषेधति, जगद-धिष्ठातृभूतमीश्वरमङ्गीकरोत्येव। यत्प्रेरणया प्रवर्त्तमाना प्रकृतिर्महदादीनि प्रसूते, तत्तदाद्यात्मना परिणमत इत्यभिप्रायः। एवं प्रवर्त्तमानेऽप्यनयोराचार्ययोः सिद्धान्त-विरोधे कापिलसिद्धान्तस्यैव श्रेष्ठत्वमर्हत्वञ्चाभिमतमासीत् तदानीन्तनानां विदुषां प्रजाजनानां चेति वैदिकायुर्वेदमहाभारतपुराणादिसाहित्यपर्यालोचनयाऽबाधं प्रतीमः।

कपिलो हि परमर्षिः सांख्यतन्त्रस्यापि प्रवक्तेति कृत्वा सांख्यशास्त्रेण सह तस्य नाम सुसम्बद्धमिति सुविदितं सर्वेषाम्।

कालान्तरे सर्वात्मना निरीश्वरवादिभिर्बौद्धविद्वद्भिः स्वमतपोषणमभिलषद्भिश्चेतननिरपेक्षप्रकृतिप्रवृत्तिपरं वार्षगण्यमतं सांख्यमतमिति कृत्वा प्रचारितं प्रसारितञ्च। पूर्वजनानां हि सांख्येऽप्रतिहता महती निष्ठा आसीत्, सांख्यनाम्ना प्रसारितं मतमनायासेन जनाः स्वीकुर्युरिति बुद्ध्या बौद्धैः सरणिरेषा स्वायत्तीकृता। कालान्तरे रहस्यमिदमजानद्भिर्जैनैः सांख्यस्येदं मतमिति मत्त्वा तदादिप्रवक्तरि कपिल आरोपितम्। तदाप्रभृत्येवायं प्रवादः प्रवर्तितः—कपिलो निरीश्वरवादीति। आचार्यः शङ्करोऽपि तादृशप्रवादपरम्पराभिभूतः कपिलस्येदं मतमिति मन्वानस्तथा प्रत्याख्यानरीतिमाश्रितवान्। वस्तुतः सांख्यान्तर्गतवार्षगण्यशाखामतस्यैव तत्प्रत्याख्यानं सम्भवति, न तु कापिलमतस्येति निश्चप्रचम्। एवं तदात्मना कापिलमतप्रत्याख्यानपरं ब्रह्मसूत्रशाङ्करभाष्यं चिन्त्यतामेवोपैतीति नास्त्यत्र शङ्कावकाशः।

किञ्चान्यमपि शाङ्करभाष्येऽन्यथाव्याख्यातमर्थं विचारयामः—स्मृत्यनवकाश-(२।२।१)सूत्रे पूर्वपक्षतया समुपस्थापितं कपिलस्मृत्यनवकाशदोषप्रसङ्गमुपेक्ष्य मन्वादिस्मृत्यनवकाशदोषप्रसङ्गप्रतिपादनावसरे मनोर्माहात्म्यं प्रदर्शयन्ती श्रुतिरेषा समुद्धृता—"यद्वै किञ्च मनुरवदत्तद्भेषजम्" (तै० सं० २।२।१०।२), अनन्तरञ्च तत्र 'मनुना च' इति निर्दिश्य "सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति॥" (१२।९१) इति वर्त्तमानसमुपलब्धमनुस्मृतिश्लोकः स्वमतपरिपोषणाय समुद्धृतो वर्त्तते।

अत्रेदमस्ति विचारणीयम्—तैत्तिरीयसंहिताया मनुप्रशंसापरं वाक्यं न मनुस्मृतिकारस्वायम्भुवमनुविषयम्। तत्र प्राक्तनः पाठ एवंभूत उपलभ्यते—"···दुश्चर्मा भवितोरिति मानवी ऋचौ धाय्ये कुर्यात्—यद्वै किञ्च मनुरवदत्तद्भेषजम्" (तै० सं० २।२।१०।२)। अत्र भाविचर्मरोगनिवारणाय किञ्चिदनुष्ठानमुपदिश्यते, तत्र च मनोर्ऋचः काश्चन विनियुज्यन्ते, तस्यैव ऋचो द्रष्टुर्मनोरियं प्रशंसा, न तु लोकसिद्धमनुस्मृतिकारस्य स्वायम्भुवमनोः। अयं प्रसङ्गो वैदिकसाहित्येऽन्यत्रापि बहुत्रोपलभ्यते, तदर्थं काठकसंहितायाः (११।५), मैत्रायणीसंहितायाः (२।१।५), ताण्ड्यमहाब्राह्मणस्य (२३-१६। ५-७) चैतानि निर्दिष्टसंख्याङ्कितानि स्थलानि द्रष्टव्यानि सन्ति।

अत्रैव प्रसङ्गे ताण्ड्यमहाब्राह्मणे सूत्रितम्—"मनोऋृचः सामिधेन्यो भवन्ति" (२३।१६।६)। सर्वत्राप्येषु काम्येष्टिप्रसङ्गेष्वयमेव क्रमोऽनेन निश्चीयते। अत्र कर्मणि कस्यचन मनोः काश्चिद् ऋचां विनियोगाय केवलमयं निर्देशः।

कोऽयं मनुरिति साम्प्रतं सम्मुखमायाति विचारणा। लोकप्रसिद्धमनुस्मृतिकारस्य स्वायम्भुवमनोर्नास्त्येकापि ऋक् क्वचिद्वेदे। ऋग्वेदे त्रयो मनवो ऋषित्वेन निर्दिष्टाः—सांवरणो मनुः, आप्सवो मनुः, वैवस्वतो मनुश्च। अत्र प्रस्तुते कर्मणि वैवस्वतमनोरेव काश्चन ऋचो विनियुज्यन्ते, तैत्तिरीयादिश्रुतयस्तस्यैव मनोर्माहात्म्यं प्रख्यापयन्ति नान्यस्य कस्यचित्, नापि स्वायम्भुवमनोर्मनुस्मृतिकारस्य। सर्वमेतद्विनियोगादिकमृचां तैत्तिरीयसंहितायाः सायणभाष्ये भट्टभास्करभाष्ये च स्फुटीकृतं वर्त्तते। एवं वैवस्वतमनोर्माहात्म्यं प्रख्यापयन्ती श्रुतिः शङ्कराचार्येण भगवता स्वायम्भुवमनोर्माहात्म्ये विनियुक्ता। एवमाचार्येण स्वाभिलषितोऽर्थः सर्वथाऽप्याविलीकृत इति को न विजानीयात्।

अन्येऽप्यनेके प्रसङ्गाः शाङ्करभाष्यस्यालोचनमपेक्षन्ते, दिग्दर्शनमात्रमेतत् प्रस्तुतं विदुषां विचाराय। यथाभूतार्थविशदीकरणमेव मे तादृगाचार्यलेखसमालोचनप्रयोजनम्। अतो विद्वन्मूर्द्धन्येषु भगवच्चरणेषु च तल्लेखसमालोचनजनितापराधक्षान्तिधिया नतिततिं वितरन् विरमति॥

---

# शङ्कराचार्यतः पूर्वमद्वैतवादस्य स्वरूपम्

मुरलीधरपाण्डेयः, वा० सं० विश्वविद्यालयः, वाराणसी ।

अद्वैतवादस्य ब्रह्माद्वैतः, शब्दाद्वैतः, विज्ञानाद्वैत इत्यादयोऽनेके भेदा उपलभ्यन्ते। वैयाकरणाः, शाक्ताः, शैवाः, माध्यमिकाः, योगाचाराश्चाद्वैतवादिन एवासन्। बुद्धस्यैकं नामैव 'अद्वय[1]वादी'इति विद्यते। समेष्वप्यद्वैतवादेष्वधिकमल्पं वा वैषम्यमुपलभ्यत एव, तथाप्येतैः शङ्करात् प्रागद्वैतवादस्य कीदृक् प्रचलनमासीदित्यालोचने सौकर्यमायाति। तेषु प्राधान्यमासादितानां केषाञ्चित्स्वरूपमालोच्य शङ्करात् पूर्वं तदभिमतस्य ब्रह्माद्वयवादस्य का स्थितिरासीदित्यालोच्यते।

## शून्याद्वैतवादः

शून्यवादो माध्यमिकसम्प्रदायस्य सिद्धान्तो विद्यते। अद्वैतवाद एवास्य प्रतिष्ठा। सदसत्सदसदुभयात्मकसदसद्विलक्षणरूपाभ्यश्चतसृभ्यः कोटिभ्यः शून्यं सत्यमेव शून्यपदवाच्यम्। इदमद्वयं परमार्थसत्यम्। अतो माध्यमिकमतेऽद्वयमेव तत्त्वम्। माध्यमिककारिकायां नागार्जुनेनोक्तम्—

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥ इति।

## शून्यवादब्रह्मवादयोः साम्यम्

माध्यमिकमतस्य शङ्कराद्वयमतेन सहातीव साम्यमस्ति। शङ्कराचार्यस्य परमगुरुणा गौडपादाचार्येणोपर्युक्तमाध्यमिकवचनं प्रायोऽनुसृतम्—

अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः।
चलस्थिरोभयाभावैरावृणोत्येष बालिशः॥

---

१. षडभिज्ञो दशबलोऽद्वयवादी विनायकः। (अमरकोषे १।१४)
एकचित्ततिरद्वयवादिन् न त्रयीपरिचितो बुद्धस्त्वम्।
(नैषधीयचरिते १६।८८)

कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः ।
भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥

गौडपादस्याजातवादेऽपि नागार्जुनेन सममर्थतः शब्दतोऽपि साम्यमवलोक्यते। नागार्जुनस्य शब्दा यथा—

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः ।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥

( माध्यमिककारिकायां १।७ )

गौडपादस्य शब्दा यथा—

स्वतो वा परतो वापि न किञ्चिद् वस्तु जायते ।
सदसत् सदसद्वापि न किञ्चिद् वस्तु जायते ॥

( गौ० पा० का० ४।२२ )

माध्यमिकाभिमतं परमार्थतत्त्वं यथा मनसा वाचातीतं विद्यते, शङ्करसम्मतं परमार्थतत्त्वमप्यस्मिन् विषये तथैव ।

## शून्यवादब्रह्मवादयोर्वैषम्यम्

साम्यमिदमवलोक्य केचन शङ्करमतं बौद्धमतस्यैवौपनिषदं संस्करणं मन्यन्ते । किन्तु नैतद् विचारसहम् । बौद्धानां विज्ञानवादात् शून्यवादाच्चापि प्राचीनतमोऽद्वयवाद एव शङ्कराद्वयवादस्याधार इति निरूपयिष्यते ।

## विज्ञानाद्वैतवादः

शून्यवाद इव विज्ञानवादोऽप्यद्वैतभित्तावेव प्रतिष्ठितः । विज्ञानवादिनां मते इन्द्रियार्थग्रहणकार्यमान्तरं भवति । इन्द्रियार्थसन्निकर्षक्रममन्तरा च न कस्यापि बाह्यस्य पदार्थस्य सत्ता ।

## विज्ञानवादब्रह्मवादयोर्वैषम्यम्

किन्तु शङ्करस्य नेदं मतमभिमतम् । ब्रह्मसूत्रे महता समारोहेण तेन प्रमाणानां व्यावहारिकप्रामाण्यमङ्गीकृतम् । तस्य शब्दा यथा—

सर्वव्यवहाराणामेव प्राग् ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः; स्वप्नव्यवहारस्येव प्राक् प्रबोधात् । यावद्धि न सत्यात्मैकत्वप्रतिपत्तिस्तावत् प्रमाणप्रमेयफललक्षणेषु

विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुपपद्यते, विकारानेव त्वहं ममेत्यविद्ययात्मात्मीयत्वेन भावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा, तस्मात् प्राग् ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः।

अभावाधिकरणे शङ्करो बाह्यमर्थमपलपतो विज्ञानमेव तत्त्वमिति मन्यमानस्य विज्ञानवादिनो विरोधेऽकथयद् यदिन्द्रियग्राह्यपदार्थमन्तरा यथा स्वप्ने काल्पनिकी सृष्टिर्भवति तथैव जाग्रदवस्थायां वृक्षस्तम्भादीन्द्रियग्राह्यपदार्थानामुपलब्धिरिति न विचारसहम्। यत एते सृष्टी विरुद्धस्वभाविक्यौ, परस्परं वैधर्म्योपलब्धेः। प्रबोधदशायां स्वप्नव्यवहारस्य यथा बाधो न तथा जाग्रद्व्यवहारस्य क्वापि बाधः। बाह्यार्थसद्भावे न किमपि प्रमाणमित्यपि कथनं नोचितम्, उपलब्धिरूपस्य प्रमाणस्य जागरूकत्वात्। घटादिपदार्थानां बाह्यरूपत्वेनोपलब्धिर्भवत्येव, अतो विज्ञानस्कन्धमात्रता न युक्ता। शङ्कराचार्यस्य शब्दा यथा—

न खल्वभावो बाह्यार्थमध्यवसातुं शक्नोति। कस्मात्? उपलब्धेः। उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः—स्तम्भः, कुड्यम्, घटः, पट इति। न चोपलभ्यमानस्यैवाभावो भवितुमर्हति। यथा हि कश्चिद् भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं ब्रूयान्नाहं भुञ्जे न तृप्यामीति, तद्वदिन्द्रियसन्निकर्षेण स्वयमुपलभमान एव बाह्यमर्थं नाहमुपलभे न च सोऽस्तीति ब्रुवन् कथमुपादेयवचनः स्यात्। ननु नाहमेवं ब्रवीमि न कञ्चिदुपलभ इति, किन्तर्हि तूपलब्धिव्यतिरिक्तं नोपलभ इति ब्रवीमि। बाढमेवं ब्रवीषि निरङ्कुशत्वात्ते तुण्डस्य, न तु युक्त्युपेतं ब्रवीषि, यत उपलब्धिव्यतिरेकोऽपि बलादर्थस्याभ्युपगन्तव्य उपलब्धेरेव। नहि कश्चिदुपलब्धिमेव स्तम्भः कुड्यं चेत्युपलभते, उपलब्धिविषयत्वेनैव तु स्तम्भकुड्यादीन् सर्वे लौकिका उपलभन्ते। अतश्चैवमेव सर्वे लौकिका उपलभन्ते यत्प्रत्याचक्षाणा अपि बाह्यार्थमेव व्याचक्षते यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासत इति। तेऽपि सर्वलोकप्रसिद्धां बहिरवभासमानां संविदं प्रतिलभमानाः प्रत्याख्यातुकामाश्च बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वन्ति। इतरथा हि कस्माद् बहिर्वदिति ब्रयुः। (ब्रह्म० २।२।२८)।

अद्वयत्वं तु विज्ञानवादिभिरप्यङ्गीकृतम्। धर्मधातुं ध्यायन्तो योगिनोऽत्र समाहिता भवन्ति। जलस्य जले मेलनाद् या स्थितिरायाति सैव तेषां मते धर्मधातोर्ध्यातॄणां तादात्म्यादुपलभ्यते। नात्रापि ज्ञातृज्ञेयज्ञानरूपा भेदास्तिष्ठन्ति। किन्तु

नैषां निर्वाणस्वरूपो धर्मधातुः परमार्थसत्यरूपो विद्यते। शङ्करमते तु तदद्वयं ब्रह्मरूपं तत्त्वं परमार्थसत्यं विद्यते।

## शब्दाद्वैतवादः

भर्तृहरेर्वाक्यपदीयेऽद्वैतसिद्धान्त एवोपजीव्यत्वेन कल्पितः। अस्य मते परा वागेव ब्रह्मपदव्यपदेश्या भवति।

चत्वारि वाक् परिमता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥
(ऋक्संहिता १।१६४।१०)

इति श्रुतिमनुरुद्ध्य परा वागेव ब्रह्मपदव्यपदेश्या भवति। शिवदृष्टौ तु परा वाचः पश्यन्त्यामन्तर्भावः। तथा च तन्मते पश्यन्तीवागेव ब्रह्मपदवाच्या। भर्तृहरेः शब्दब्रह्मवादमाश्रित्यैव मण्डनमिश्रेण ब्रह्मसिद्धिर्निरमायीति कथ्यते। शिवाद्वैतस्य प्रधानतम आचार्यः सोमानन्दपादस्तु स्वस्मिन् शिवदृष्टिनामके ग्रन्थे भर्तृहरेः शब्दाद्वयवादं भृशमालोचितवान्।

भर्तृहरेः प्राक् पातञ्जलमहाभाष्ये[1], ततोऽपि प्राग् व्याडिप्रणीते सङ्ग्रहे[2] शब्दाद्वैतसिद्धान्तो निरूपितो दृश्यते। सङ्ग्रहः सम्प्रति नोपलभ्यते, किन्तु तस्य चर्चाऽऽयाति। महाभाष्यकारेण पतञ्जलिना पस्पशाह्निके तस्य नाम्ना निर्देशः कृतः। अस्य शब्दाद्वयवादस्य परमप्राचीनासु संहितास्वपि बीजमुपलभ्यते---

१—वागेव विश्वा भुवनानि जज्ञे
वाच इत् सर्वममृतं मर्त्यं च।
२—वागेवार्थं पश्यति वाग् ब्रवीति
वागेवार्थं सन्निहितं सन्तनोति।
वाचैव विश्वं बहुरूपं निबद्धं
तदेतदेकं प्रविभज्योपभुङ्क्ते ॥

इत्याभ्यां श्रुतिभ्यां शब्दाद् विश्वस्य विकासो लभ्यते।

---

१. ध्वनिस्फोटस्तु शब्दानां ध्वनिस्तु खलु लक्ष्यते।
'''एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः (तपरसूत्रे)।
२. 'सिद्धे शब्दार्थसम्बन्धे' इत्यत्र महाभाष्ये पस्पशाह्निके।

## शब्दाद्वयवादब्रह्मवादयोर्विभेदः

शब्दात् सृष्टिस्तु शङ्करोऽपि मन्यते। किन्त्वस्योपादानत्वं नाङ्गीकरोति—"न चेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्त्ववदुपादानकारणत्वाभिप्रायेणोच्यते। कथं तर्हि स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसम्बन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिः अतः प्रभव इत्युच्यते"। इति।

(ब्र० सू० शा० भा० अ० १ पा० ३ सू० २८)।

भर्तृहरिस्तु शब्दस्यैवोपादानत्वं मन्यत इत्यनयोर्भेदः। ब्रह्मकाण्डस्य प्रथमे श्लोके शब्दब्रह्मणोऽर्थरूपेण विवर्तनं लिखितम्—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

"शब्दस्य परिणामोऽयम्" (वाक्यपदीये ब्रह्मकाण्डे १२०) इत्यत्र परिणामशब्दः फलवाची, न तूपादानसमसत्ताककार्यापत्तिरूपः पारिभाषिकः। अत एवास्मिन्नेव श्लोके "छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत" इत्यग्रिमवचनेन विश्वं वेदस्य विवर्तत्वेनाभिप्रेतम्। अत एव वाक्यपदीयस्य परिणामवादिनां नैकापि टीकोपलभ्यते। अत्र पुण्यराजस्य (?) यद्विवरणमुपलभ्यते तत्तु विवर्तवादमेवाश्रयते—एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिता विवर्तः स्वप्नविषयप्रतिभासवदिति। अत एव माधवाचार्येण सर्वदर्शनसंग्रहे शब्दाद्वयवादिनो विवर्तवादित्वेनैव सूचिताः। अत एव च भट्टनारायणकण्ठेन मृगेन्द्रागमवृत्तौ परमोक्षनिराशप्रकरणे विवर्तवादिषु प्राधान्येन भर्तृहरिरेवोपस्थापितः—"तस्यैव (परमात्मन एव) तथा वैचित्र्येणावस्थिते रसत्वाद् द्वैतप्रतिभासस्य द्विचन्द्रादिज्ञानवद् भ्रान्तत्वात्। तथा चाह भगवान् हरिः—

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते॥

## भर्तृप्रपञ्चस्याद्वैतवादः

शङ्करात् प्राग् भर्तृप्रपञ्चस्याप्येकोऽद्भुतोऽद्वैतसिद्धान्तः। शङ्करात् प्राक् तस्य विचारस्यातीव प्रभावकारिताऽऽसीत्। भर्तृप्रपञ्चेन बृहदारण्यकोपनिषदो विस्तृतं भाष्यमप्युपन्यस्तम्। सम्प्रति तन्नोपलभ्यते, किन्तु शाङ्करभाष्यटीकाप्रणेतुरानन्दगिरेः कालेऽपि तदुपलब्धमासीदिति तत्पङ्क्त्याऽनुमीयते—"भर्तृप्रपञ्चभाष्याद् विशेषान्तरमाह तस्या इयमल्पग्रन्था वृत्तिरारभ्यते" इति। शाङ्करभाष्येऽपि भर्तृप्रपञ्चस्य मतं पूर्वपक्षरूपतया निर्दिष्टं विद्यते।

## भेदाभेदवादः

भर्तृप्रपञ्चस्याभिमतः सिद्धान्तो भेदाभेद आसीत्। स एव द्वैताद्वैतवादानेकान्तवाद्यादिनाम्ना व्यपदिश्यते। भर्तृप्रपञ्चरीत्या एकस्मिन्नेव ब्रह्मणि सामान्यरूपेणैकत्वम्, विशेष्यतया चानेकत्वं सिद्ध्यति। शब्दान्तरेण ब्रह्म शुद्धेन स्वनिर्गुणस्वरूपेणाभिन्नं जीवरूपेण च भिन्नं विद्यते। अत एव "एकमेवाद्वितीयं ब्रह्म", "नेह नानास्ति किञ्चन" इत्याद्यद्वैतवादपरकाणि श्रुतिवाक्यानि, "एषोऽणुरात्मा चेतसा वेदितव्यः" (मुण्डकोपनिषद्), "बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः" इत्यादीनि द्वैतवादपरकाणि च वाक्यानि स्वरसतः समर्थितानि भवन्तीति स कथयति। शङ्करस्य शब्दैर्भेदाभेदवादस्य स्वरूपं यथा—

"...अनेकात्मकं ब्रह्म, यथा वृक्षोऽनेकशाख एवमनेकशक्तिप्रवृत्तियुक्तं ब्रह्म, अत एकत्वं नानात्वं चोभयमपि सत्यमेव। यथा वृक्ष इत्येकत्वं शाखा इति च नानात्वम्। यथा च समुद्रात्मनैकत्वं फेनतरङ्गात्मना नानात्वम्। यथा च मृदात्मनैकत्वं घटशरावाद्यात्मना नानात्वम्। तत्रैकत्वांशेन ज्ञानान्मोक्षव्यवहारः सेत्स्यति। नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति। एवञ्च मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति।"

(ब्रह्मसूत्रभाष्यम्, अ० २ पा० १ सू० १४)

## परिणामवादः

उपर्युक्तनिदर्शनेन भर्तृप्रपञ्चस्य परिणामवादित्वं सूच्यते। एकमेव ब्रह्म स्वस्यैकदेशात् कर्मराशेः वासनायाश्चानुसारेण विभिन्नेषु जीवेषु भूतेषु च परिणमते।

## ज्ञानकर्मसमुच्चयवादः

भर्तृप्रपञ्चः प्रमाणसमुच्चयवादी आसीत्। तस्य मते वेद इव लौकिकमपि प्रमाणं सत्यमेव। अत एव भर्तृप्रपञ्चस्य मते यथा केवलेन कर्मणा न मुक्तिस्तथा केवलेन ज्ञानेनापि न साऽवाप्यते। अतो भर्तृप्रपञ्चस्य ज्ञानकर्मसमुच्चयोऽभिमतः।

## भेदाभेदवादब्रह्माद्वैतवादयोर्विभेदः

भर्तृप्रपञ्चस्योपर्युक्तोऽद्वैतवादस्तु नाम्नैवाद्वैतवादः। यतस्तन्मतेऽद्वैततत्त्वमिव द्वैततत्त्वमपि सत्यमेवाभिमतम्। अतः शङ्करेण महता समारोहेण भर्तृप्रपञ्चस्य मतं खण्डितम्। तेनोक्तं यत् "ऐतदात्म्यमिदं सर्वं तत् सत्यम्" इति श्रुत्या परमकारणस्यैव सत्यरूपत्वेन निर्णीततया भर्तृप्रपञ्चमतं स्पष्टमेव श्रुतिविरोधि। ब्रह्मविदः प्रति समस्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्य अभावमपि बृहदारण्यकश्रुतिर्दर्शयति। अन्याश्च श्रुतयो भर्तृप्रपञ्चस्य विषमवादिन्यो भविष्यन्तीति शङ्करेणोपपादितम्—

"दार्ष्टान्तिकेऽपि "ऐतदात्म्यमिदं सर्वं तत् सत्यम्" इति च परमकारणस्यैवैकस्य सत्यत्वावधारणात्, "स आत्मा तत्त्वमसि श्वेतकेतो" इति च शारीरस्य ब्रह्मभावोपदेशात्। स्वयं प्रसिद्धं ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते न यत्नान्तरप्रसाध्यम्। अतश्चेदं शास्त्रीयं ब्रह्मात्मत्वमवगम्यमानं स्वाभाविकस्य शारीरात्मत्वस्य बाधकं सम्पद्यते, रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम्। बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भविष्यति, यत्प्रसिद्धये नानात्वांशोऽपरो ब्रह्मणः कल्प्येत। दर्शयति च—"यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" (बृहदा० ४-५-१५) इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति समस्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्याभावम्।" (शाङ्करभाष्यम्, अ० २ पा० १ सू० १४)

शङ्करेण बृहदारण्यकस्य घटभाष्ये, उपनिषदां भाष्ये, गीताभाष्ये च भर्तृप्रपञ्चस्य ज्ञानकर्मसमुच्चयवादोऽनेकधा खण्डितः।

## ब्रह्मदत्तस्याद्वैतवादः

शङ्करात्प्राग् ब्रह्मदत्तस्याद्वैतवादोऽपि प्रथित आसीत्। नैष्कर्म्यसिद्धौ (१-६८) सुरेश्वराचार्येण ब्रह्मदत्तोऽद्वैतवादित्वेनैवोपस्थापितः। अस्य मतं बहुषु स्थलेषु

शङ्कराद् विपरीतमस्ति। ब्रह्मदत्तस्य नये आत्मज्ञानेऽपि विधिरावश्यकः। शङ्करादितरेषामपि वेदान्तिनामिदमेव मतमासीत्। तेषां नये "आत्मा वा अरे" इत्यादिविधिवाक्यानां प्राधान्यम्, न तु 'तत्त्वमसि' इत्यादिवाक्यानाम्। तेषां मते 'तत्त्वमसि' इत्यादिवाक्यानां स्वरूपमात्रपरिचायकत्वादुपासनाविधेः शेषत्वम्। अत एव चोभयोरपि कर्मकाण्डज्ञानकाण्डयोः साध्यविषयकत्वं सिध्यति, न तु सिद्धविषयकत्वम्। एवञ्च तेषां मते पूर्वमीमांसोत्तरमीमांसयोरेतावानेव विभेदो यत् पूर्वमीमांसायां कर्मविधिरुत्तरमीमांसायाञ्च भावनाविधिर्भवतीति।

सुरेश्वराचार्यस्य शब्दे ब्रह्मदत्तस्य मतं यथा—केचित् स्वसम्प्रदायबलावष्टम्भादाहुः—यदेतद् वेदान्तवाक्यादहं ब्रह्मेति विज्ञानं समुत्पद्यते, तन्नैव स्वोत्पत्तिमात्रेण अज्ञानं निरस्यति, किन्तर्हि अहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनोपचयान्निःशेषमज्ञानमपगच्छति, "देवो भूत्वा देवानप्येति" इति श्रुतेः।

बृहदारण्यके शङ्करेण पूर्वपक्षरूपतया ब्रह्मदत्तस्य मतमुपस्थापितं खण्डितञ्च। शङ्करो विवक्षितेऽर्थे विद्यासूत्रं विधिस्पर्शं विना व्याख्याय "आत्मेत्येवोपासीत इति नापूर्वविधिः" इत्यादिशब्दैरपूर्वविधिरयमिति पक्षं प्रत्याख्यातवान्। पुनः "तिष्ठतु तावत् पाक्षिक्यात्मोपासनप्राप्तिर्नित्या वेति। अपूर्वविधिः स्याद् ज्ञानोपासनयोरेकत्वे सत्यप्राप्तत्वात्। न स वेदेति विज्ञानं प्रस्तुत्याऽऽत्मेत्येवोपासीतेत्यभिधानाद् वेदोपासनशब्दयोरेकार्थताऽवगम्यते। "अनेन ह्येतत्सर्वं वेद", "आत्मानमेवावेत्" इत्यादिश्रुतिभ्यश्च विज्ञानमुपासनम्। तस्य चाप्राप्तत्वाद् विध्यर्हत्वम्। न च स्वरूपान्वाख्याने पुरुषप्रवृत्तिरुपपद्यते। तस्मात् पूर्वविधिरेवायम्। कर्मविधिसामान्याच्च। यथा "यजेत, जुहुयात्" इत्यादयः कर्मविधयः, न तैरस्य "आत्मेत्येवोपासीत" "आत्मा वा अरे द्रष्टव्यः" इत्याद्यात्मोपासनविधेर्विशेषोऽवगम्यते। मानसक्रियात्वाच्च विज्ञानस्य यथा "यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद् वषट्करिष्यन्" इत्याद्या मानसी क्रिया विधीयते, तथा "आत्मेत्येवोपासीत", "मन्तव्यो निदिध्यासितव्यः" इत्याद्या क्रियैव विधीयते ज्ञानात्मिका। तथाऽवोचाम वेदोपासनशब्दयोरेकार्थत्वमिति। भावनांशत्रयोपपत्तेश्च यथा हि यजेतेत्यस्यां भावनायां किम्, केन, कथमिति भाव्याद्याकाङ्क्षापनयकारणमंशत्रयमवगम्यते, तथोपासीतेत्यस्यामपि भावनायां विधीयमानायां किमुपासीत, केनोपासीत, कथमुपासीतेत्यस्यामाकाङ्क्षाया-

मात्मानमुपासीत मनसा त्यागब्रह्मचर्यशमदमोपरमतितिक्षादीतिकर्तव्यतासंयुक्त इत्यादिशास्त्रेणैव समर्थ्यतेऽशत्रयम्"। (बृ० उ० अ० १ ब्रा० ४ क० ७) इत्यादिनाऽऽत्मज्ञानेऽपि विधिरावश्यक इति पक्षमुपस्थाप्य विस्तृतेन ग्रन्थेन तस्य खण्डनं कृतवान्।

भामतीकारः शङ्करमतं सरलशब्दैरुपस्थापितवान्। तस्यायमाशयः—शब्दजन्यो बोध एव श्रवणम्। बोधश्च प्रमाणाधीनं न तु पुरुषाधीनम्। अतस्तस्य विधिर्नोपपद्यते। 'द्रष्टव्यः' इत्यत्र च तव्यत्प्रत्ययोऽर्हेऽर्थे, न तु विध्यर्थे। अतः 'तत्त्वमसि' इत्यादिमहावाक्यानामेव प्राधान्यम्।

ब्रह्मदत्तनये देहावस्थितिकाले देवताया जातेऽपि साक्षात्कारे तेन सह मेलनं न भवति, मेलनं तु देहावसान एव भवति। उत्तरमीमांसायामपि भावनाविधिस्वीकारादेव ब्रह्मदत्तेन देहावसानान्तरमेव स्वर्गप्राप्तिरिव मुक्तिप्राप्तिरपि स्वीकृता।

## शिवाद्वैतवादः

शङ्करात् प्राक् शिवाद्वैतवादस्यापि प्रतिष्ठाऽऽसीत्। शङ्करेणास्य मतस्याचार्याः 'माहेश्वर'शब्देन सम्बोधिताः। तमेव प्राक्तनं शिवाद्वैतवादमवलम्ब्य आचार्यश्रीकण्ठेन ब्रह्मसूत्रस्य शैवभाष्यं व्यरचि। शिवाद्वयवादस्यापरं नाम विशिष्टाद्वैतवादोऽप्यस्ति। अयं विशिष्टाद्वैतो रामानुजस्य विशिष्टाद्वैतवादाद् भिन्न एवास्ति। एतन्मते शिव एव परमं ब्रह्म। शिवोपासनया मुक्तिर्लभ्यते। ब्रह्मज्ञानं वेदान्तशास्त्रैकगम्यम्। श्रुत्यनुकूलश्च तर्को ब्रह्मज्ञाने सहायकः। ब्रह्मज्ञानेनात्यन्तिकस्य सुखस्योपलब्धिर्दुःखस्य च सर्वथा हानं भवति। अतो ब्रह्मज्ञानमेव परमः पुरुषार्थः, ज्ञानस्य हेतुश्च कर्म। फलकामनात्यागपुरःसरं कृतेन कर्मणा पापं नश्यति तस्माच्च चित्तशुद्धिर्जायते। तदावबोधो भवति। अतः कर्म ज्ञानस्य हेतुः। अतो यावदुत्पद्यते ज्ञानं तावदनुष्ठेयानि कर्माणि।

एतन्मते ब्रह्म सगुणं सविशेषञ्च। सृष्टिस्थितिप्रलयतिरोभावानुग्रहाणां कर्तृ तत्। चेतनाचेतनप्रपञ्चविलासस्तस्यैव कृतिस्तदेव चेतनाचेतनजगद्रूपेण परिणतम्। तत् सर्वज्ञं नित्यतृप्तमनादिज्ञानस्वरूपं स्वतन्त्रमलुप्तशक्त्यनन्तशक्ति च। इन्द्रियादिबाह्यकरणानामभावेऽपि समस्तवस्तुजातं निरन्तरं पश्यति तत्।

ब्रह्मज्ञानस्य परमपुरुषार्थस्वीकरणं शङ्करमतस्य संवादि। किन्त्वस्य परिणामवादः शङ्करस्य विवर्तवादस्य स्पष्टमेव विसंवादी।

उपरिष्टादद्वैतवादस्य केचन प्रसिद्धा भेदा दर्शिताः। समेष्वेतेष्वद्वयवादेषु व्यवहारतो ब्रह्माद्वयवादस्य प्राधान्यमवगम्यते। अप्पयदीक्षितेनैकया नवीनया युक्त्या स्वकीये व्यासतात्पर्यनिर्णये प्रतिपादितं यत् सांख्यमीमांसापातञ्जलन्यायवैशेषिकपाशुपतवैष्णवदर्शनेषु ब्रह्मसूत्रस्यापि चर्चाऽऽयाता। सर्वैरपि तैः स्वस्वसिद्धान्तान् स्थापितुं ब्रह्मसूत्रस्य यत् खण्डनं कृतं तत्तस्याद्वैतपरकत्वेनैव। अतो ब्रह्मसूत्रे व्यासस्य मुख्यं तात्पर्यमद्वैतविषयमेवासीदिति सिद्ध्यति। अप्पयदीक्षितस्येयं युक्तिरतीव सारपूर्णा प्रतिभाति। अद्यत्वेऽपि वेदान्तकथनेन ब्रह्माद्वैतमेव गृह्णन्ति सर्वे। प्राक्तनोऽपि व्यवहार एतादृश एवासीत्। भवभूतिना वेदान्तसिद्धान्तकथनप्रसङ्गे ब्रह्माद्वैत एवोदाहृतः—

विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्तानां क्वापि विप्रलयः कृतः॥

सांख्यसूत्रस्य वृत्तिकारेणानिरुद्धेनापि वेदान्तिपदेनैकान्तवादिन एव गृहीताः—
एक एवात्मेति वेदान्तिनः। (सां० सूत्रवृत्तिः, अ० १)

## शङ्करात् प्रागद्वैतवेदान्तस्य परम्परा

अद्वैतवेदान्तसाहित्ये शङ्करस्य तर्कपूर्णो विचारोऽतीव ज्यायान् सर्वैः सुपरिचितश्चास्ति। अत इयं भावना प्रचलिता यद् ब्रह्माद्वैतवेदान्तस्योद्भावनं शङ्करादेव जातम्। इयमपि भावना यत् शून्यवादस्योपनिषत्संस्करणमेव शङ्करस्य मायावाद इति, किन्तु नेमे कल्पने समीचीने, यतः सम्प्रदायानुसारेण ब्रह्माद्वैतवादस्याद्यप्रवर्तको नारायणोऽमन्यत। नारायणाद् ब्रह्मा, ब्रह्मणो वसिष्ठः, वसिष्ठात् तत्पुत्रः शक्तिः, शक्तेः पराशरः, पराशराद् व्यासः, व्यासात् शुकः, लीलाशुकाद् गौडपादाचार्यः, गौडपादाचार्याद् गोविन्दपादः, गोविन्दपादाच्च शङ्कर इमां सनातनपरम्परां क्रमशः प्राप्तवान्। विद्यार्णवतन्त्रादप्यद्वैतवेदान्तस्य सनातनपरम्पराऽवगम्यते, किन्तु तत्रत्या परम्परा किञ्चिद् वैसादृश्यमावहति।

## नारायणस्य ब्रह्माद्वैतवादः

अतः शङ्करः परम्पराप्राप्तमेव तथ्यं स्वसुपुष्टतर्कैर्विशदीकृत्य जगतेऽदात्।

## शङ्कराचार्यतः पूर्वमद्वैतवादस्य स्वरूपम्

आचार्यशङ्करेण प्रतिपादितं सर्वमपि तथ्यं पूर्वोक्तानां पारम्पर्यक्रमागतानामुक्तिषु यथाकथञ्चिदुपलभ्यत एव। केवलाद्वैतस्याद्यप्रवर्तकस्य नारायणस्योक्तिर्यथा—

अहमेवासमेवाग्रे नान्यद् यत्सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥
ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाभासो यथा तमः॥

(श्रीमद्भागवते[१] स्क० २ अ० १० श्लो० ३२-३३)

अर्थात् सृष्टेः प्राग् ब्रह्मैवासीत्। स्थूलं सूक्ष्मं तयोः कारणमपि च नासीत्। सृष्टेरनन्तरमपि ब्रह्मैवासीत्। यदेतज्जगत् तदपि ब्रह्मैव। प्रलये योऽवशिष्येत सोऽपि ब्रह्मैव। एवञ्च ब्रह्मणयनादित्वमनन्तत्वमद्वितीयत्वं परिपूर्णं कथितम्। द्वितीयस्मिन् श्लोकेऽद्वैते द्वैतभानस्य प्रकारो निरदिश्यत। यथा स्वप्नोऽसन्नपि मनसा स्वस्मिन् प्रतिभासते तथा मायया ब्रह्मणि दृश्यप्रपञ्चस्य भासः।

## ब्रह्मणो ब्रह्माद्वैतवादः

नारायणशिष्येण ब्रह्मणाप्युपर्युक्तमेव तत्त्वं समासेन निर्दिष्टम्—

नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं
मायागुणव्यतिकराद् यदुरुर्विभासि।

(श्रीमद्भा० स्क० ३ अ० ६ श्लो० १)

अर्थाद् ब्रह्मणो भिन्नं किमपि तत्त्वं नास्ति। यत् किञ्चिदपि दृश्यते तदसदस्ति। तदासतः प्रतीतिः कथं भवतीति प्रकारनिर्देशः "मायागुणव्यतिकरात्" इति कथयित्वा कृतः। अर्थाद् मायाया गुणक्षोभाद् ब्रह्मसत्तयैव सदिवासत् प्रतिभासते, त्वत्सत्तयैव सद्वत् प्रतीयत इति भावः। ब्रह्मणोऽन्येयमुक्तिः—

तस्मादिदं जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्।

---

१. सम्प्रति सुदृढैः प्रमाणैः श्रीमद्भागवतस्य व्यासकर्तृकत्वं संसिद्धम्। एतदर्थं कल्याणस्य भागवताङ्को द्रष्टव्यः।

त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्यदपि यत् सदिवावभाति ॥

(श्रीमद्भा० स्क० १० अ० १४ श्लो० २२)

अस्मिन् प्रतीके स्पष्टमेव जगत्स्वरूपं स्वप्नाभमसदित्यकथ्यत । तच्च मायातोऽवभासत इत्यप्यकथ्यत । शङ्करस्य 'ब्रह्म सत्यं जगन्मिथ्या' इत्युक्तिर्नूनं ब्रह्मोक्तेरेव प्रतिफलनमात्रमित्यवसीयते ।

## वसिष्ठस्य ब्रह्माद्वैतवादः

वसिष्ठो ब्राह्मणो मानसपुत्र आसीत् । ब्रह्मणः सोऽद्वैतवादः पूर्णतया वसिष्ठे प्रतिष्ठितः । वसिष्ठरामायणे[1] योगवासिष्ठेऽयमद्वैतवाद ओतप्रोतः । स्थालीपुलाक-न्यायेन कानिचिद् वचनानि प्रस्तूयन्ते—

गन्धर्वनगराकारमपि स्वप्ननरोपमम् ।
जगत्.............................॥

(यो० वा० नि० प्र० पू० स० २२ श्लोक ५२)

अविद्यमानं च जगन्मृगतृष्णाम्बुभङ्गवत् ।

(यो० वा० नि० प्र० पू० स० २२ श्लोक ५२)

अतः किं वास्यते केन कस्य वा वासना कुतः ।
कथं स्वप्ननरेणाङ्ग ! मृगतृष्णाम्बु पीयते ॥

(यो० वा० नि० प्र० पू० स० २२ श्लोक ५३)

उपरितनेषु श्लोकेषु वसिष्ठेन ईश्वरः पृष्ठो यद् मिथ्यात्वेन ज्ञातमपि जगद् दुःखकरं भवतीत्यतो न मिथ्यात्वज्ञानेन दुःखस्य प्रतीकारः सम्भवी । उत्तरदित्सो-रयमभिप्रायो यद् दुःखनिवृत्तेरुपाय आपाततो मिथ्याज्ञानं मा भवतु, किन्तु वासनात्तय-पर्यन्तं दृढतरमिथ्यात्वस्य निश्चयोऽवश्यमेव दुःखनिवृत्त्युपायः । शाङ्कराद्वैतवादे प्रसिद्धा गन्धर्वनगरस्य स्वप्नस्य मृगतृष्णायाश्च दृष्टान्ता उपर्युक्तेषु त्रिष्वेव श्लोकेष्वागताः ।

---

१. डा० भीखनलाल-आत्रेयमहोदयेन योगवासिष्ठरामायणस्य रचनाकालः शङ्करात् प्राक् प्रतिपादितः ।

## शङ्कराचार्यतः पूर्वमद्वैतवादस्य स्वरूपम्

योगवासिष्ठे कानिचिदेतादृशान्यपि वचनानि सन्ति यैर्भेदाभेदवादिनोऽभिमतस्य ज्ञानकर्मसमुच्चयवादस्य मण्डनं प्रतीयते। इत्थं चायं ग्रन्थः शाङ्करमतस्य विसंवादीव प्रतीयते। यथा—

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां जायते परमं पदम्॥
केवलात् कर्मणो ज्ञानान्नहि मोक्षोऽभिजायते।
किन्तूभाभ्यां भवेद् मोक्षः साधनं तूभयं विदुः॥

( यो० वा० वै० प्र० स० १ श्लो० ७-८ )

उद्धरणेनानेन ज्ञानकर्मसमुच्चयपक्ष आपाततः प्रतीयते, किन्तु नायं ग्रन्थकृदभिमतः, अग्रिमेण मणिकाचोपाख्यानेन ज्ञानादेव मुक्तिरिति स्वसिद्धान्तेन च विरोधात्। मणिकाचोपाख्याने स्पष्टमेव लिखितं यत्—

अलब्धज्ञानदृष्टीनां क्रियामात्रं परायणम्।
यस्य नास्त्यम्बरं पट्टं कम्बलं किं त्यजत्यसौ॥

## पराशरस्य ब्रह्माद्वैतवादः

शक्तिपुत्रः पराशरः परम्परात एवाद्वैतनिष्ठां प्राप्तवान्। ब्रह्मणो वरदानादेष विष्णुपुराणस्य प्रवक्ताऽभवत्—

पुराणसंहिताकर्ता भवान् वत्स! भविष्यति।

(विष्णुपु० अं० १ अ० १ श्लो० ३०)

विष्णुपुराणे ब्रह्माद्वैतवादस्य मार्मिकं चित्रणं वर्तते। जडभरतोक्त्या समस्तमपि दृश्यं ब्रह्मरूपमेव, तदतिरिक्तं नान्यत्किञ्चिद्। अस्मद्भावो युस्मद्भाव एतद्भावश्च सर्वे एत आत्मस्वरूपभूता एव—

एकं समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत्।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥

(विष्णुपु० अं० २ अ० १६ श्लो० २३)

ऋभुरपि द्वैतं निषिषेध—

एवमेकमिदं विद्धि न भेदि सकलं जगत्।

(वि० पु० अं २ अ० १५ श्लो० ३५)

ऋभोरुपदेशाद् निदाघस्याद्वैतनिष्ठतापि तत्रैवोल्लिखिता—

एवमुक्तो ययौ विद्वान् निदाघं स ऋभुर्गुरुः।
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥

(वि० पु० अं० २ अ० १६ श्लो० १६)

## व्यासस्य ब्रह्माद्वैतवादः

पाराशर्यव्यासोऽप्यद्वैतनिष्ठाया अतीव पोषक आसीत्। अस्य ब्रह्मसूत्रेऽद्वैत-तत्त्वमेव प्रतिपादितम्। यद्यपि विशिष्टाद्वैतिनो द्वैतिनो वा ब्रह्मसूत्रस्य स्वानुरूपमर्थं कुर्वन्ति, किन्तु समन्वयदृष्ट्या व्यासस्य तथाभिप्रेतत्वेऽपि मुख्यं तात्पर्यमद्वैत-प्रतिपादनमेवास्तीति प्राक् प्रतिपादितम्।

भक्तिसूत्रकारः शाण्डिल्योऽपि बादरायणोऽभेदवादीत्यभ्यमन्यत—"आत्मैक-परां बादरायणः" ( भक्तिसूत्रम् ३० सू० ) इत्यत्र। शाण्डिल्यो न स्वयमद्वैतमतानुयायी आसीत्। स तु काश्यपस्य भेदवादं बादरायणस्य चाभेदवादमुल्लिख्य नैजं सिद्धान्तं स्थापितवान्, अतो नास्य मतं पक्षपातपूर्णमिति सिद्ध्यति।

मम दृष्ट्या तु सूतसंहिता ब्रह्मसूत्रस्य व्याख्यानम्। सूतसंहितायामाचार्य-शङ्करस्य सर्वेऽपि विचाराः क्वचित् सूत्ररूपेण क्वचिच्च विस्तरेणोपलभ्यन्ते। सूत-संहितायामुक्तं यद् ब्रह्मण्यध्यस्तमायया समग्रप्रपञ्चस्य परिकल्पनम्—

अपरः कल्पितः साक्षाद् ब्रह्मण्यध्यस्तमायया।

(सूतसंहितायां यज्ञवैभवखण्डे अ० २ श्लो० १८)

द्वादशेऽध्याये "मायामात्रमिदं द्वैतम्" इत्यादिश्रुतिं निर्दिशन्तीयं संहिता माया-वादं प्रस्तौति—

अतः संसारनाशाय कदाचित् परमा श्रुतिः।
जगत्सर्वमिदं माया वदति................ ॥

(सूतसंहितायज्ञवैभवखण्डे अ० १२ श्लो० १७)

उपरिष्टात् समासेन शङ्करात् प्रागद्वैतवादस्याधारः पारम्परिकः प्राचीनाद्वैतवाद एवास्ति न तु बौद्धानां विज्ञानवादः शून्यवादो वेति दर्शितः। ब्रह्माद्वैतवादादन्ये येऽद्वैत-वादा आसन् तेषामपि समासेन निर्देशः कृतः।

——

# शङ्कराचार्यतः पूर्वमद्वैतवादस्य किं स्वरूपम्

आचार्यं द्विजेन्द्रनाथशास्त्री विद्यामार्तण्डः, मेरठनगरस्थः ।

( संक्षेपः )

अयं शाङ्करोऽद्वैतवादः श्रीशङ्कराचार्योपज्ञो न प्राचीनः, श्रुतिषु भेदश्रुतीनां भूयसीनां सत्त्वात् । श्रीशङ्कराचार्येण तदात्वे लब्धप्रचाराणां सांख्ययोगादिदर्शनोपबृंहितानां वैदिकानां सिद्धान्तार्थानां बौद्धैर्जैनैश्च क्रियमाणं खण्डनमुदीक्षमाणेन तदखण्ड्यवैदिकसिद्धान्तविशेषस्थापनेच्छयाऽयमद्वैतवाद आविष्कृतः, यत्समर्थनार्थमध्यासवादः, बिम्बप्रतिबिम्बवादः, विवर्तवादः, अभिन्ननिमित्तोपादानवादः, अवच्छेदवाद इत्यादयो बहवो वादा आविष्कृताः । अत्र परे दार्शनिका इत्थं विप्रतिपद्यन्ते—किमविद्याया ब्रह्मणि प्रतिबिम्बः, उत ब्रह्मणोऽविद्यायाम् , रूपवतोऽविभोर्हि रूपवति अविभौ स्वच्छो प्रतिबिम्बो दृश्यते । ब्रह्माविद्ये नैवंविधे । नित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणः कथमविद्यासम्बन्धः, कथं नु बन्धः, कथं च निसर्गज्ञानक चपरिणद्धं ब्रह्म अविद्यया पराभूतम्, कथन्तरां च सर्वशक्ति ब्रह्म अविद्यावशंवदं जातम् , कथमियं कल्पना युज्यते पूर्वं नित्यमुक्तज्ञानात्मकं ब्रह्म विद्यया तिरोधीयते, पश्चाद् आविद्यकवाक्यजन्येनाविद्यामेघमेदुरेण भ्रान्तितिमिरततिकवलितेन वाक्यार्थज्ञानेन मुच्यते, अविद्या च बाध्यत इति । शङ्कराचार्यैरपि स्वसिद्धान्ते कयाचिद् विधया स्वीक्रियमाणस्तत्त्वत्रयवाद एव वैदिकः प्राचीन इति वैदिकग्रन्थैः सिध्यति ॥

---

# शब्दब्रह्मवादस्योद्गमो विकासश्च

श्रीवेदानन्दझा, नेपालदेशस्थसिद्धेश्वरसंस्कृतमहाविद्यालयाध्यापकः ।

## ( संक्षेपः )

परिवर्तनशीलस्य जगतो नूनमस्त्यपरिवर्तनीयं मूलं किञ्चित्, यत् तत्सत्यं स आत्मा तत्त्वमसीति विधिमुखेन, नेति नेतीति निषेधमुखेन च श्रुतिषु वर्ण्यते । तद्याथात्म्यज्ञा महर्षयः । तज्जगन्मूलतत्त्वं सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मैव । तदेव शास्त्रेषु बहुधा वर्ण्यते, "एकं सद्विप्रा बहुधा वदन्ति" इति श्रुतेः । यथैकेन पदा स्थितावेवापरेण पदा गतिः, तथा स्थास्नुतत्त्वे ब्रह्मणि सत्येव गतिशीलं जगत् प्रतिष्ठितम् । अत एव श्रूयते "ब्रह्म प्रतिष्ठा" इति । तदेवं गतिशीलस्य जगतो नियामकं ध्रुवमविचाल्यनपायोपजनविकारिमूलभूतं कूटस्थं किञ्चित् तत्त्वमस्ति, तदेव ब्रह्म, तदेव जगतो विवर्तोपादानम् । तेनैवेदं कृत्स्नं जगद्व्याप्तम् । "सर्वं खल्विदं ब्रह्म" इति च श्रुतिः । इदं मूलतत्त्वं नासदीयसूक्तादौ वर्ण्यते । इदं तत्त्वं प्रत्यक्चैतन्याभिन्नम्, "यत् साक्षादपरोक्षाद् ब्रह्म" इति श्रुतेः । तत् प्रत्यक्चैतन्यं शब्दब्रह्म भवितुमर्हति, प्रत्यक्षानुमानाद्यविषयत्वे सति शब्दानुविद्धशाब्दापरोक्षत्वात् प्रत्यक्षादिसकलप्रत्ययवत् । तथा च भर्तृहरिः—"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति । शब्दार्थयोस्तादात्म्यम् । उक्तञ्च—"ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा" इति । शब्दब्रह्मणः परापश्यन्त्यादिचतूरूपत्वं "तिस्रो वाचं ईरयति" इत्यादिना ऋङ्मन्त्रेण वर्ण्यते । कण्ठताल्वादिष्वभिव्यक्तोऽयं शब्द एव सकलजगद्व्यापारनिर्वाहकः । वर्णपदवाक्यात्मना सरणवत्त्वाद् वैखरी वाक् सरस्वती व्याख्यायते । इयं व्यक्ता वाग् न केवलं भौमानामेवेष्टार्थप्रकाशिका, अपि तु स्वाहाकारस्वधाकाररूपेण देवानां पितॄणामपि तर्पिका । इयं वाग् न जडा, अपि तु चित्स्वरूपं ब्रह्म, अत एव "सक्तुमिव तितउना पुनन्तः" इति मन्त्रेण शब्दसंस्कारवतां ध्यानिनां सायुज्यमुक्तिः श्रूयते । अत एव "भद्रैषां लक्ष्मीर्निहिताऽधिवाचि" इति वाचि भासनशीलचिच्छक्तेर्विराजमानत्वं श्रूयते । अस्य शब्दब्रह्मणो न केवलं जगदात्मकत्वं यज्ञात्मकत्वमेव वा, किन्तु यज्ञाधिष्ठातृसर्वनियन्तृसर्व-

देवमयत्वमपि, "स ब्रह्मा स शिवः" इत्यादिश्रुतेः। सृष्टिः शब्दब्रह्मपूर्विका। अत एव मनुः—"वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" इति। बादरायणोऽपि—"शब्द इति चेन्नातः प्रभवात्" इत्यादि। वेदशब्देभ्यो जगतः सृष्टत्वात् शब्दस्य ब्रह्मत्वं सिद्धम्। ब्रह्मणः शब्दरूपत्वादेव शब्दकरणकनिर्वचनाविषयत्वाद्वागगोचरत्वम्। गुणगुणिभावस्य कल्पितत्वान्नाकाशगुणः शब्दः। गुणगुणिनोस्तादात्म्याच्छब्दातिरिक्ताकाशासिद्धिः। शब्दतन्तुजाल एवावकाशप्रदत्वादाकाशः। "अत्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः" इति हर्युक्तरीत्या उत्तरोत्तरप्रचयक्रमेण शब्दादेव तत्तन्मात्ररूपान्महाभूतसृष्टिः सांख्यसंमता। नित्येश्वरेच्छां शब्दशक्तिमभ्युपयद्भिर्नैयायिकैरपि प्रकारान्तरेण नित्या शब्दशक्तिः स्वीकृता। "तस्य वाचकः प्रणवः" इति योगसूत्रेण प्रणवनादात्मकशब्दस्य परमत्वं स्वीकृतम्। मन्त्रविग्रहदेवतावादिभिर्वेदापौरुषेयत्ववादिभिर्मीमांसकैर्जगतः शब्दब्रह्ममयत्वं स्वीकृतम्। ध्वनिविस्तारकयन्त्रेण रेडियोयन्त्रेण च सत्याप्यते शब्दब्रह्मणः कणकणव्यापकता। अणुबमादिविस्फोटशब्दस्य विनाशहेतुतां पश्यद्भिः प्रत्येयं भवति शब्दस्य जगदाकारेण प्रचीयमानत्वम्। शब्दसन्दोहेन विचारादानप्रदानं तदनुगतार्थानुधावनं संगीतशब्दानामलौकिकानन्दप्रदत्वं शब्दब्रह्मणः सृष्टिस्थितिलयकारित्वे श्रद्धां वर्धयति। तदेवं व्यक्ताव्यक्तस्थूलसूक्ष्मवाचकावाचकशब्दसामान्यस्वरूपं निरूपितम्।

अथ शाब्दिकाभिप्रेतं शब्दस्वरूपं निरूप्यते—"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥" इति वदता हरिणा शब्दस्य ब्रह्मरूपत्वं तद्विवर्तत्वं जगत उद्घुष्यते। महाभाष्यकारेण—येनोच्चरितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः, अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इति भाषमाणेन नादव्यङ्ग्यस्य वाचकस्य स्फोटस्य शब्दत्वं लोकप्रसिद्धवैखरीवाचश्च शब्दत्वं मतभेदेन प्रत्यपादि। तत्र प्रथमपक्षस्य तदभिमतत्वं तपरसूत्रे—"एवं तर्हि स्फोटः ध्वनिः शब्दगुणः" इति तद्भाष्यादवगम्यते। "अवङ्स्फोटायनस्य" इति सूत्रनिर्दिष्टस्य महर्षेः स्फोटवादस्थापकत्वं नामनिर्देशेनैव सिद्धम्। "द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः। एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते॥" इति हरिवचसा द्विविधशब्दसिद्धिः। स्फोटवादः प्राचीनः, अत एव "दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः। नादो वर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतिः॥" इति भागवते

तदुल्लेखः। स्फोटवादो वैयाकरणानां सर्वस्वम्। मम्मटादिभिरालङ्कारिकैरप्ययं समादृतः। "बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः" इति तेषामुक्तिः। अथ कोऽयं स्फोटः? उच्यते—स्फुटत्यर्थोऽस्मादिति व्युत्पत्तेरर्थविशिष्टत्वं स्फोटत्वम्, वैशिष्ट्यञ्च स्वतादात्म्य-स्वविषयकोपस्थितिप्रयोजक-शक्त्याश्रयत्वरूपोभयसम्बन्धेन। प्रत्येकं समुदितानां वा वर्णानां वाचकत्वायोगाद् वाचकत्वशक्त्याश्रयस्फोटसिद्धिः। अयम्—"परा वाग् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता। हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥" इति चतुर्धा प्रपञ्च्यते। पराऽसंप्रज्ञातेन योगेन, पश्यन्ती संप्रज्ञातेन, मध्यमा मानसबोधेन, वैखरी श्रोत्रेण गृह्यते। वाचः पराद्यवस्थाचतुष्टयं श्रुत्यादिप्रमाणैः सिध्यति। तत्र मध्यमायां यो नादांशस्तस्यैव स्फोटत्वं शक्त्याश्रयत्वं च। स स्फोटो वर्णाभिव्यङ्ग्योऽखण्डो वर्णपदादिविभागशून्यो व्यञ्जकध्वनिरूषिततया वर्णादित्वेन भासत इति नागेशादीनां मतम्। अनित्यवर्णसमुदायात्मकपदवाक्यवादे नैयायिकमते नित्यवर्णसमुदायात्मकपदवाक्यवादिमीमांसकमते च वर्णानां वाचकत्वे दोषसहस्रोन्मेषाद् वैयाकरणमतमेव साधीयः। स्फोट एव व्यञ्जकध्वनिरूषितः कत्वादिना व्यज्यत इत्यर्थः "अथवोभयतः स्फोटमात्रं निर्दिश्यते रश्रुतेर्लश्रुतिर्भवति" इति ऋलृक्सूत्रभाष्यात् सिध्यति। स्फोटब्रह्मवादे प्रकृतिप्रत्ययविभागः काल्पनिकः स्वीक्रियते॥

---

# जीवस्याभासप्रतिबिम्बावच्छिन्नरूपभेदविचारः

श्रीसृष्टिनारायणझा, दरभंगामण्डलस्थे आदर्शब्रह्मचर्याश्रमे प्रधानाध्यापकः ।

ननु जीवः किंस्वरूपकः ? आभासः प्रतिबिम्बोऽवच्छिन्नो वेति संशये प्रथमं तावदाभास एव विचार्यते। श्रुतौ —"जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इत्यादिवाक्याच्चैतन्याभासावीश्वरजीवाविति विज्ञायते। तत्राभासपदेन किं प्रतिपाद्यते ? प्रतिबिम्बोऽन्यद्वेति संशये, प्रतिबिम्ब एव नान्यदिति निश्चीयते। यथा दर्पणे मुखाभास इत्यादिशब्देन दर्पणादौ मुखप्रतिबिम्ब एव गृह्यते नान्यदत एव प्रतिबिम्बस्यैव जीवस्वरूपस्य विचारणा समायाति। तत्रादौ प्रतिबिम्बरूपो जीव इति विचार्यते—

प्रतिबिम्बगताः पश्यन् ऋजुवक्रादिविक्रियाः ।
पुमान् क्रीडेद् यथा ब्रह्म तथा जीवेशविक्रियाः ।।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।

इत्यादिप्रतिपादनेन "जीवःप्रतिबिम्बश्चेतनात्मनः परमात्मनः" इति निश्चीयते। किन्तु कुत्र चेतनप्रतिबिम्बो जीव इत्यत्र विप्रतिपत्तिः। केषाञ्चिन्मतम्—"जीवेशावाभासेन करोति" इत्यादिश्रुत्या विशुद्धसत्त्वरूपायां मायायां चित्प्रतिबिम्ब ईश्वरः, अविद्यायां मलिनसत्त्वरूपायां चित्प्रतिबिम्बो जीवः, शुद्धचिद्रूपं ब्रह्मेति "अविद्योपाधिको जीवः" इति, "जीव ईशो विशुद्धा चित्" इति चित्त्रैविध्यप्रक्रियानुमोदितो भवति। अत एवावरणप्राधान्याविद्याप्रतिबिम्बत्वाज्जीवस्याज्ञोऽहमिति प्रतिपत्तिः, नेश्वरस्येति।

किन्तु "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुत्या कार्यरूपान्तःकरणोपाधिक एव जीवो नाविद्योपाधिकः, अविद्यायाः कारणभूताया ईश्वरोपाधित्वादित्यपि केषाञ्चिन्मतम्। वस्तुतस्तूभयोः श्रुत्योः सामञ्जस्याय अविद्यापरिणामरूपान्तःकरणमिति मत्वा तत्प्रतिबिम्बो जीव इति कल्पनया अविद्योपाधिकाज्ञानलेशोऽपि नेश्वरे समागच्छति, तस्य मायाप्रतिबिम्बभूतत्वादिति प्रतिबिम्बभूतावीश्वरजीवाविति मन्वानस्य मतम्।

येषां मते मुक्तौ जीवस्येश्वररूपेण महाप्रलयपर्यन्तावस्थानम् "स तत्र पर्येति यक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा" इत्याद्यैश्वर्यश्रुत्या "सङ्कल्पादेवास्य" इत्यादिसत्यसङ्कल्पश्रुत्या चेतीश्वररूपतां प्रतिबिम्बेश्वरवादे न संभवति, जीवेश्वरयोरुपाधिभेदाद् ज्ञानादज्ञाननाशे सति जीवोपाधिविनाशेऽपीश्वरोपाधेः स्थितत्वेन प्रतिबिम्बस्योपाधिनाशे प्रतिबिम्बान्तरगमनासम्भवाद् बिम्बरूपेणावस्थानस्योचितत्वाद् बिम्बरूप एव ईश्वरः प्रतिबिम्बो जीवो बिम्बप्रतिबिम्बरहितो ब्रह्मेति तेषां मतम्। सत्रञ्चैतद् बिम्बप्रतिबिम्बवादिविवरणप्रस्थानाद्यनुगामिनां मतम्।

भामतीप्रस्थानानुगामिमते नैतत् शोभनम्, यतः "घटसंवृताकाशम्, नीयमाने यथा घटे, घटो नीयते नाकाशम्, तद्वज्जीवो नभोपमः" इत्यादिश्रुत्या अविद्यापरिणामान्तःकरणावच्छिन्नो जीवो न प्रतिबिम्ब इति। बिम्बप्रतिबिम्बभावप्रतिपादिकाः श्रुतयोऽपि नावच्छिन्नवादविरुद्धाः। तासामपि प्रतिबिम्बोपाधिदर्पणाधिगतमलिनकुटिलादिविक्रियाया बिम्बभूतचन्द्रमुखादावसम्बन्ध इवोपाधिगतदोषेण चिदात्मनि असम्बन्धमात्रबोधपरत्वान्नावच्छिन्नवादबाधनम्। अत एव भगवान् बादरायणः— "अत एव चोपमासूर्यादिवत्", "अम्बुवदग्रहणान्न तथात्वम्", "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्" इत्युत्तरमीमांसायां तृतीयाध्यायस्य द्वितीयपाद उक्तसूत्रत्रये प्रथमसूत्रेण सूर्यादिप्रतिबिम्बवज्जीवोपमां प्रदर्श्य, द्वितीयसूत्रेण एकदेशे बिम्बप्रतिबिम्बभावाभावमाशङ्क्य तृतीयसूत्रेण यथा जलाद्युपाधेर्वृद्धिह्रासचलनादिनोपहितस्य वृद्धिह्रासचलनादिकमाध्यासिकं भवति तद्वदेवान्तःकरणोपाध्यनुरोधि जीवगतदुःखित्वादिकमित्यर्थ एव दृष्टान्तदर्शनमिति प्रतिपादितवान्। तथा श्रीमच्छङ्कराचार्येणापि शारीरकभाष्ये दृष्टान्तरूपेणैव बिम्बप्रतिबिम्बभावं वर्णयता कण्ठत एवावच्छिन्नवादे स्वारस्यं दर्शितम्। अत एवान्तःकरणावच्छिन्नो जीव इत्येव समुचितम्, न प्रतिबिम्ब इति।

अत्रेदं विचार्यते—श्रुतौ द्वौ वादौ विद्येते, प्रतिबिम्बवादोऽवच्छिन्नवादश्च। तत्र प्रतिबिम्बवादिनी श्रुतिरवच्छिन्नवादानुयायिभिरवच्छिन्नवादपरतया व्याख्यायते, एवं प्रतिबिम्बवादानुयायिभिरप्यवच्छिन्नवादिनी श्रुतिस्तु प्रतिबिम्बपरतयैव व्याख्यायते। अत्र सम्भवे उभयोः प्रतिबिम्बवादावच्छिन्नवादयोरेकत्र सामञ्जस्ये महाँल्लाभो भवेत्, अतोऽवच्छिन्नवादे प्रतिबिम्बवादस्य सङ्गतिर्विचार्यते।

## जीवस्याभासप्रतिबिम्बावच्छिन्नरूपभेदविचारः

वादिनैतत्प्रतिपाद्यते यद् व्यापकबिम्बस्थितोपाधौ कथं प्रतिबिम्बः, तथा नीरूपस्य नीरूपे कथं प्रतिबिम्ब इत्यादि। तत्र तावदेकः स्वच्छः काचघटो रक्त-जलपूर्णो रक्तजले निमग्न उदाहरणरूपेण नीयताम्, तत्र रक्तजलमध्ये स्थितोऽपि स्वच्छः काचघटोऽन्तस्थरक्तजलरञ्जितो रक्तप्रतिबिम्बितश्च जपाकुसुमाश्रितस्फटिक इव दृश्यत एव। अनेन स्थानान्तर एव बिम्बप्रतिबिम्बभावो भवतीत्याक्षेपो निराकृतः। द्वितीये नीरूपे नीरूपस्य प्रतिबिम्बाभावो विचार्यते—सोऽपि प्रतिबिम्बो मठाकाशे नीरूपस्य शब्दस्य प्रतिध्वनिरूपेण ज्ञायत एव, यद्यप्युक्तदृष्टान्तयोरपि खण्डनमण्डने भवेतामेव, किन्त्वचिन्त्यशक्तिरूपाया मायायाः किमकार्यम्? यतोऽघटितघटना-पटीयसी माया, अतो ब्रह्मणः शक्तिरूपाया मायाया ब्रह्माभिन्नाया अनिर्वचनीयायाः सर्वमतर्क्यमपि कार्यं भूषणमेव, न तु दूषणम्। उक्तं च श्रीमद्गौडपादाचार्यैः—"मायया जायते विश्वं सा च माया न विद्यते" इति। तस्मादिदं निष्पन्नं यद-विद्याकार्यान्तःकरणावच्छिन्नचित्प्रतिबिम्बो जीव इति। सोऽपि मिथ्यैव, ब्रह्मभिन्नस्य सर्वस्य मिथ्यात्वात्। तदुक्तं श्रीमद्गौडपादाचार्यैः—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मोक्ष इत्येषा परमार्थता॥
मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा।
उपायः सोऽवताराय नास्ति भेदः कदाचन॥

इति शम्॥

# अवच्छेदवादः

श्रीनारायणमिश्रः, मिथिलानुसन्धानसंस्थानम्, दरभंगा।

अद्वैतवेदान्तदर्शनस्य "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इत्येव सिद्धान्त इत्यत्र नाऽस्ति केषामपि विमतिः। तत्रापि व्यवहारे जीवेश्वरयोर्भेदस्योपलभ्यमानत्वेन कस्तावज्जीवाकारः, कथं वा तस्याद्वितीयस्याऽपि भेद इति व्यवहारे प्रतीयमानस्य भेदस्य निरूपणाय तस्य भेदस्य मिथ्यात्वप्रतिपादनाय च प्रवृत्तेषु बहुष्वाचार्यपादेषु सुरेश्वराचार्या विवरणकृत आचार्यवाचस्पतिमिश्राः संक्षेपशारीरकाचार्यपादाश्च प्राथम्येन सङ्केतमर्हन्ति।

एते हि महानुभावाः शाङ्करीमेव वाणीं विशदं निपुणं च व्याचक्षाणा वेदान्तसिद्धान्तेषु परमप्रवीणाश्च ब्रह्माद्वैते परस्परं कमपि भेदमनाकलयन्तोऽपि जीवस्वरूपविचारेऽन्यत्रापि शाब्दाऽपरोक्षादिरूपब्रह्माद्वैतसाधनीभूतेषु भिन्नं भिन्नं मतं स्वीकुर्वते।

प्रकृते प्रतिबिम्बवादादिस्वरूपनिर्णयपूर्वकं किं वास्तवं स्वरूपमवच्छेदवादस्य, कथं वा तत्रोपपत्तिः, कथं चान्तःकरणावच्छिन्नं चैतन्यं जीव इति वाचस्पतिमतमिति प्राचीनोक्तस्य मतस्य शास्त्रानारूढत्वमिति प्रतिपादनं सप्रमाणमिह क्रियते।

तत्र जीवस्वरूपविषये सुरेश्वराचार्यपदानां मतमित्थम्—

अनाद्यविद्याजन्याध्यासद्वारेण निरञ्जनोऽप्यात्मा तदहङ्कारोपहितोऽहङ्कारतादात्म्यविशिष्टतया प्रतीयमानोऽहङ्कारगतस्वाभासाऽविवेकेन जीवपदवाच्यः, अहङ्कारनानात्वाच्च जीवनानात्वम्। न च सुषुप्तौ तदभावाज्जीवाभावप्रसङ्गः शङ्क्यः, सुषुप्तावप्यहङ्कारस्य संस्काररूपेण सद्भावात्। तदुक्तं रत्नावल्याम्—"सुषुप्तावपि संस्काररूपेणाहङ्कारसत्त्वाज्जीवसत्त्वम्" इति।

अत्र च मतेऽहङ्कारे चिदात्मनो यः प्रतिबिम्बो न तस्य सत्यत्वम्, बिम्बव्यतिरिक्तत्वात्। बिम्बतादात्म्यापन्नत्वाच्च चेतनत्वोपपत्तिरपि।

माया चात्र मते एकैव, तथापि श्रवणादिभिर्यदहङ्कारावच्छेदेन तत्त्वज्ञानोदयस्तदवच्छेदेनैव तन्नाशो महापटांशनाशवदिति। एतेन मोक्षसाङ्कर्यं निरस्तम्।

तथा च मायायां स्वरूपतो मिथ्याभूतं प्रतिबिम्बमेव जीवः। एष चाभासवाद इति गीयते।

विवरणकृतस्तु बिम्बस्यैव प्रतिबिम्बव्यवहारतत्कल्पककार्यसम्भवान्नातिरिक्ताभासकल्पनं गौरवमुक्तमिति कृत्वा स्थूलसूक्ष्मावस्थाविशिष्टबुद्ध्यन्यतरविशिष्टाज्ञानान्तर्गतत्वारोपितधर्मविशिष्टं चैतन्यमेव बिम्बात्मकं जीवः। तस्य च स्वरूपतः सत्यत्वं प्रतिबिम्बत्वेन च मिथ्यात्वम्। तदुक्तम्—"स्वरूपतः सत्यं प्रतिबिम्बत्वरूपेण मिथ्याभूतं बिम्बमेव प्रतिबिम्बम्" इति रत्नावल्याम्।

अन्तःकरणनानात्वेन जीवनानात्वम्। माया चैका। मोक्षसाङ्कर्यभङ्गस्त्वाभासवादिनां मत इवेति नानुपपत्तिः।

संक्षेपशारीरककृतस्तु—"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतिप्रामाण्यादन्तःकरणप्रतिबिम्बितमेव चैतन्यं जीवः। मायाथा विषयताऽऽश्रयते च ब्रह्मण्येव वर्त्तते। मायाप्येका। अन्तःकरणानां नानात्वाज्जीवनानात्वमित्यादि पूर्ववदेव सर्वमन्यदिति व्याचक्षते।

वाचस्पतिमिश्रास्तु—कार्यकारणयोरैकाधिकरण्यनियमादरेण जीवस्यैव पूर्णानन्दः, नास्ति न भातीत्याद्यज्ञानकार्यभ्रमाधिष्ठानत्वेन तत्कारणीभूताज्ञानाधिष्ठानत्वमपि जीवस्यैवेत्यज्ञानावच्छिन्नं चैतन्यं जीव इति व्याचक्षते। अज्ञानं ह्याश्रयतया जीवस्यावच्छेदकं विषयतया चेश्वरस्य।

अत्रावच्छेदवादे मानं तु—

घटसंवृतमाकाशं नीयमाने घटे यथा।
घटो नीयेत नाऽऽकाशं तद्वज्जीवो नभोपमः॥

इत्यादिश्रुतिरेव।

अत्र च मतेऽज्ञानानां प्रतिजीवं भेदः। तथा च तदधीनत्वादिति सूत्रभामत्याम्—"अयमभिसन्धिः—न वयं प्रधानवदविद्यां सर्वजीवेष्वेकामाचक्ष्महे येनैवमुपालभ्येमहि, किन्त्वियं प्रतिजीवं भिद्यते……"इत्यादि।

## अवच्छेदवादः

यत्तु बहुभिरन्तःकरणावच्छिन्नं चैतन्यं जीव इति वाचस्पतिमतं परिश्रमपुरःसरं प्राचीनैः परिष्कृतम्, तदसारम्। तथा सति नानात्वमविद्याया व्यर्थमेव स्यात्, विवरणादिमत इवात्राप्युपपत्तिसम्भवात्। अत एव कल्पतरावुक्तम्—"यत्तु जीवस्य मनोऽवच्छिन्नत्वं भूतसूक्ष्मावच्छिन्नत्वं च दूषितम्, तदस्माकमिष्टमेव चेष्टितम्, अस्माभिर्जीवस्यानाद्यविद्याऽवच्छेदाभ्युपगमात्" (१।४।३) इति।

अत एव चावस्थितेरिति काशकृत्स्न इति सूत्रे भामत्यामुक्तम्—"न जीव आत्मनोऽन्यो नाऽपि तद्विकारः, किन्त्वात्मैवाविद्योपधानकल्पितावच्छेदः" इत्यादि। यद्यपि भामतीयं काशकृत्स्नमतसम्पादनाय प्रवृत्तेति मिश्रमतमेतदिति तथा निर्णेतुमशक्यम्, तथापि पूर्वोक्तकल्पतरुप्रामाण्यात्; 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इति सूत्रस्थेन "तथाहि पौर्वापर्यालोचनया वेदान्तानामेकमद्वयमात्मतत्त्वम्, जीवास्त्वविद्योपधानकल्पिता इत्यत्र तात्पर्यमवगम्यते" इति भामतीग्रन्थेन च नूनमेवाविद्यावच्छिन्नं चैतन्यं जीवो वाचस्पतिमत इत्यत्र तात्पर्यमवसीयते।

अत एव सिद्धान्तबिन्दौ—"अज्ञानाश्रयीभूतं च चैतन्यं जीव इति वाचस्पतिमिश्राः" इत्युक्तम्। व्याख्यातं च नारायण्याम्—········अविद्यावच्छिन्नाऽनवच्छिन्नावेव जीवेशावित्यभिप्रायकं वाचस्पतिमतमवतारयतीत्यादिना।

तस्मादेव मधुसूदनेन वृत्तिरावरणभङ्गार्था चिदुपरागार्था वेति पक्षे, अन्तःकरणाऽवच्छिन्नं चैतन्यं जीव इति पक्षे च जीवस्याविभुत्वेनाविद्यकवस्तुसम्बन्धाऽभावात् प्रमातृचैतन्योपरागार्था विषयचैतन्यावरणभङ्गार्था च वृत्तिः, यत्र चाविद्याऽवच्छिन्नो जीवस्तदानीं जीवस्य विभुत्वेन सर्वसम्बद्धत्वाद् विषयसम्बद्धावरणभङ्गमात्रायैव वृत्तिरित्युक्तम्।

मिश्रमते चाज्ञाननानात्वेन जीवनानात्वाद् जीवोपादानप्रपञ्चस्यापि प्रतिजीवं भिन्नत्वेन एकस्य जीवस्य स्वोपादानकप्रपञ्चगतसकलवस्तुसम्बद्धत्वेन केवलमावरणभङ्गायैव वृत्तिरपेक्ष्यत इति स्फुटमविद्यावच्छिन्नत्वं जीवस्येति। इतरथा हि जीवस्याविभुत्वापत्तिः स्यात्, सा चाविद्यानानात्ववादिनां विरुद्धतमेति।

अत एवाद्वैतसिद्धावपि नानाऽज्ञानपक्षेऽप्येकस्य जीवस्यैकाज्ञानोपाधित्वं निर्दिष्टम्।

अत एव चाऽविद्यावच्छिन्नाऽनवच्छिन्नावेव जीवेशाविति पक्षोऽवच्छेदवाद इति बिन्दुव्याख्यायां बहुत्र यतयः।

अत एव चेश्वरस्याऽज्ञानानुपहितत्वे प्रपञ्चमध्ये तदवस्थानं दुर्लभम्, तथा च यः पृथिव्यां तिष्ठन्नित्यादिश्रुतिविरोध इत्यादिदूषणमवच्छेदवादे विवरणकारैरुक्तम्। यदि नामान्तःकरणावच्छिन्नमेव चैतन्यं जीवोऽवच्छेदवादे स्यात्तर्हि जीवस्याविभुत्वेन ईश्वरस्य चाज्ञानाऽनुपहितत्वेन कारणत्वाऽपायात् प्रपञ्चोदयो नैव स्यात्।

एतेन जीवस्योपादानत्वमपि व्याख्यातम्। जीवो न जगदुपादानम्, किन्त्वीश्वर एवेति शास्त्रवचनं तूपादानभूतजीवनिष्ठाऽविद्यापरमिति मन्तव्यम्। "यतो वा इमानि भूतानि" इत्यादिश्रुतिरपि जीवब्रह्माऽभेदपरैवेत्यपि युक्तम्।

यद्यपि जीवनिष्ठाज्ञानविषयब्रह्मोपादानकमेव जगत्, अविद्या तु दोषविधया निमित्तमित्येवं मिश्रमतमिति कल्पतरुप्रभृतिषु व्याख्यातम्, तथापि मायोपादानत्वश्रुतेर्जीवोपादानत्वपरतयाऽपि ग्रहीतुं शक्यत्वेन, "पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्रम्" इत्यादिश्रुतिप्रामाण्येन च जीवोपादानकत्वमेव जगतः।

सर्वं हि विकारजातं तदविद्याशक्तिपरिणाम इत्यन्तर्याम्यधिदैवादिष्विति सूत्रस्थभामतीग्रन्थेनाविद्याया एव परिणामिकारणत्वग्रहे तु तदाश्रयत्वेन जीवस्योपादानत्वमुक्तं बहुभिरिति अधिकं न्यायरत्नावल्यां व्यक्तम्।

यद्यपि भामत्यामेव "समाननामरूपत्वात्" इति सूत्रे—······अन्तःकरणाद्युपाधिकल्पिता हि ते···ब्रह्मणश्च सृष्टादावन्तःकरणानि तदवच्छिन्नाश्च जीवा इत्युक्तम्, तथाप्यस्य पूर्वपक्षानुवादकत्वेन स्वार्थे तात्पर्याभावाद् दोषलेशाऽभाव एव।

तस्मादविद्यावच्छिन्नं ज्ञानं जीव इति स्थितम्।
वाचस्पतिमतं सम्यग् विबुधैरनुचिन्त्यताम्॥

अत्र च पक्षे सृष्टिप्रत्ययवाक्यैः प्रतिपरिमितप्रलयोत्तरं पुनरपि सृष्टिः, एकस्य मुक्तौ सत्यामपि तदन्यस्य सत्त्वेनाज्ञानानां नानात्वात्तज्जन्यायाः सृष्टेः पुनरनुत्पादे मानाभावात्। प्रत्यभिज्ञाऽपि सादृश्यादिनोपपादनीयेति। विस्तरमन्यत्राऽनुसन्धेयम्॥

———

# ब्रह्माद्वैतविशिष्टाद्वैतवादयोः साधर्म्यवैधर्म्यविचारः

श्रीकेदारनाथत्रिपाठी, भागलपुरस्थराजकीयसंस्कृतमहाविद्यालये प्राध्यापकः ।

अथायं प्रस्तूयते शङ्कराचार्यरामानुजाचार्याभिमतयोर्ब्रह्माद्वैतविशिष्टाद्वैतवादयोः प्रतीयमानसाधर्म्यवैधर्म्यविचारः । पूर्वं तावत् सन्ति बहवो विषया यत्रानयोर्द्वयोरेवाचार्ययोरस्त्यैकमत्यम् । भौतिकपरमाणवः स्वत एव परस्परं संहन्यमाना जगदुत्पादयन्तीति चार्वाकमतं द्वावप्याचार्यौ साम्येन निराकुरुतः । अचेतनायास्त्रिगुणात्मिकाया नित्यप्रकृतेरेव संसारस्य स्वभावाद् विकास इति सांख्यमतखण्डनेऽपि द्वयोः समानः प्रयास आस्ते । चेतनाचेतने द्वे प्रधानभूते तत्त्वे स्तः, तत्राचेतनान्तर्गताः पृथिव्यादिपरमाणवो जगतः समवायिकारणं चेतनश्चेश्वरो निमित्तकारणमिति न्यायमतं द्वावपि साटोपं खण्डयतः । "सर्वं खल्विदं ब्रह्म" इति वचनमाधृत्य जडचेतनयोः पृथक् सत्ता नास्ति, किन्तु एकस्मिन्नेव मूलसत्तात्मके ब्रह्मणि ते उभे आश्रिते स्त इति द्वयोरभिमतम् । एवञ्चोभावप्यद्वैतवादिनौ स्तः । अत्र तु न केवलमनयोरेव किन्तु सर्वेषां वेदान्तिनामैकमत्यं भवति यदीश्वरास्तित्वज्ञानं प्रथमं श्रुत्यैव भवति भवितुमर्हति च, न युक्तिभिरिति । अतः श्रुतिविचारायैव तर्का आश्रीयन्ते । काण्ट–लाट्जाप्रभृतयः पाश्चात्त्या अपि विचारका ईश्वरविषये तर्कानपर्याप्तानाहुः ।

यद्यप्यद्वैतब्रह्मणि शङ्कराचार्यरामानुजाचार्ययोर्नास्ति मतभेदस्तथापि जीवब्रह्मणोः कीदृशः सम्बन्ध इत्यत्रास्ति कियान् भेदः । उपनिषत्स्वेकतः सृष्टिविचारः कृतोऽन्यतश्च संसारस्य मिथ्यात्वं प्रतिपादितमित्यनयोः कथन्तरां सामञ्जस्यं स्यादिति समस्यायामाचार्यशङ्करः संसारस्य स्वप्नभ्रमाभ्यां साम्यं विधाय समाधत्ते । पूर्वं सृष्टिः पश्चात्तत्त्वज्ञाने तत्तिरोभाव इति द्वयमप्युपपद्यते । ब्रह्मणः शक्तिरूपाया मायाया द्वे शक्ती स्तः—आवरणशक्तिर्विक्षेपशक्तिश्चेति । रामानुजाचार्यः—"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्वेताश्वतरवचनमनुसृत्य मायाया उल्लेखं करोति, किन्तु स मायाशब्देन ब्रह्मण्यवस्थितां सृष्टिप्रयोजिकां नित्याचेतनतत्त्वरूपां तदीयां शक्तिमभिप्रैति । शङ्कराचार्यस्तु मायां ब्रह्मशक्तिमाह, किन्तु सा ब्रह्मणो नित्य-

स्वरूपभूतेति न मन्यते। रामानुजमतानुसारं ब्रह्मण्यवस्थिते चिदचित्तत्त्वे, अत एव ब्रह्मण्यपि वास्तविकं परिवर्तनं भवतीति। शाङ्करमतानुसारं तु ब्रह्मणि न किमपि वास्तविकं परिवर्तनं भवतीति। अत एव शङ्कराचार्यो विवर्तवादी रामानुजाचार्यश्च परिणामवादी। श्रीरामानुजो मन्यते ब्रह्मणोऽचिदंश एव जगद्रूपेण परिणमत इति। उभावपि सत्कार्यवादिनौ। अत एवोक्तं संक्षेपशारीरके—

विवर्तवादस्य हि पूर्वभूमिर्वेदान्तवादे परिणामवादः।
व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः ॥२-६१॥

शाङ्करे विवर्तवादे सन्ति बहवो गुणाः। वादोऽयं सृष्टेरधिकयुक्तिसङ्गतं कारणं प्रतिपादयति। यदि हीश्वरः सृष्टिकर्त्ता प्रकृतिश्चाचेतना तत्साधनं तर्हि सा प्रकृतिरीश्वरस्यै क्रमङ्गमात्रमथवा सर्वथा ततोऽभिन्नेति भवति जिज्ञासा। यदि प्रथमः कल्पो यथा च रामानुजाचार्यो मन्यते तदेश्वरोऽपि भौतिकद्रव्यवत् सावयवो विनाशी च सिध्येत्। द्वितीये कल्पे तु आज्ञस्येनेश्वरस्यैव सृष्टिरूपेण परिणामे सृष्ट्यनन्तरमीश्वर एव कश्चिन्नावशिष्येत। वस्तुतस्त्वीश्वरे आंशिके पूर्णे वा विकारे स्वीक्रियमाणे नेश्वरो निर्विकारः सिध्येत्। विवर्तवादस्वीकारे सर्वा एता अनुपपत्तयो दूरीभवन्ति, विकारस्याभासमात्रत्वाद् वास्तविकपरिवर्तनाभावाच्च।

रामानुजाचार्योऽपीमामनुपपत्तिमनुभवति, परं तस्य विचारे सृष्टिरहस्यं मानवबुद्धेरगोचरम्, अत एव शास्त्रवर्णनाधारेणैव तन्मान्यं भवति। अनुपपत्तयस्त्वीश्वरस्य सर्वशक्तिमत्त्वात्, सर्वज्ञत्वादघटितघटनापटीयस्त्वाच्च समाहिता भवन्तीति वदति। यद्यपि शङ्कराचार्योऽपि वदति यच्छ्रुतिं विना सृष्टिरहस्यं सर्वथा अज्ञेयं केवलतर्कैः। स्वयं श्रुतावेवैकस्यानेकरूपेण प्रतिभासनं प्रतिपादितमस्ति। वेदान्तस्य मूलमस्ति श्रुतिरपरोक्षानुभूतिश्चेति। तथापि स स्वीकरोति यद् यावन्मनुष्याणां तर्कप्रधाना बुद्धिः सन्तुष्टा न जायते, सहजतर्केण च कमपि विषयं ते नावबुध्यन्ते, तावत् केवलां परकीयोचतमामनुभूतिमपि नाभ्युपगच्छन्तीति। तस्मात् परिणामवादे पूर्वोक्तानुपपत्तयो न सृष्टिरहस्यस्य मानवबुद्ध्यगोचरताकथनमात्रेण समाहिता भवितुमर्हन्तीति।

आचार्यशङ्करमते ब्रह्म सजातीयविजातीयस्वगतभेदै रहितमस्ति। रामानुजाचार्यस्तु ब्रह्मणि केवलौ सजातीयविजातीयभेदौ न मन्यते, किन्तु स्वगतभेदं तु मन्यत

एव। यतो हि तन्मते ब्रह्मणि 'चित्-अचित' इति तत्त्वद्वयं विद्यमानमस्ति। शङ्कराचार्यो विश्वगतमपि ब्रह्म तद्दोषराहित्येन विश्वातीतरूप्याह। रामानुजाचार्यस्तु तस्य विश्वातीतत्वे काठिन्यमनुभवन् तस्य सगुणत्वं प्रतिपादयति।

ईश्वरो हि यद्यपि ब्रह्मणः औपाधिकस्वरूपात्मकस्तथापि शाङ्करमतेऽपि तस्य महत्त्वं न न्यूनायते। सत्यसाक्षात्कारो हि क्रमेणैव भवतीति वेदान्तविश्वासः। अतो दर्शनभूमौ दृष्टिभेदेन कोटित्रयं वक्तुं शक्यते। तत्राविवेकिमनुष्यदृष्ट्या जगदेव सत्यमिति प्रथमा कोटिर्निरीश्वरवादिनां नास्तिकानाम्। जगदीश्वरौ द्वावपि सत्यौ इति द्वितीया कोटी रामानुजप्रभृतीनामाचार्याणामीश्वरवादिनाम्। केवल ईश्वर ( ब्रह्म ) एवेति तृतीया कोटिः शङ्कराचार्यस्य ब्रह्मवादिनः। आचार्यशङ्करो मन्यते – अन्तिमां कोटिं न सहसैव कश्चिदारोहति, किन्तु द्वितीयकोटिक्रमेणैवेति। अत एव स सगुणब्रह्मोपासनस्यापि महत्त्वं स्वीकरोति। सोपाधिकब्रह्मैव तन्मते सगुणब्रह्म, अन्यैर्निरूप्यमाणा ईश्वरो वाऽस्ति इदमपि चित्तशुद्धये आवश्यकम्। देवोपासनमपि नास्तिक्यापनोदायोपयोगि मन्यते। तस्मादुपासनं तत्त्वज्ञानपथे सोपानभूतमिति। शङ्कराचार्याभिमतं निरुपाधिकं ब्रह्म तूपास्यरूपादीश्वराद् भिन्नं निर्गुणं चास्तीति। अत एव केचिद् अतात्पर्यज्ञास्तदीयवेदान्तवाचोयुक्तीनां तं निरीश्वरवादिनं प्रच्छन्नबौद्धं वा ब्रुवाणा नाश्चर्यावहाः। वस्तुतस्तु श्रीशङ्कराचार्य ईश्वरं परां काष्ठां प्रापयन् नानीश्वरवादितया चिन्तयितुमपि शक्यः, किन्तर्हि ? तस्य कृते परमेश्वर(परब्रह्म)-वादित्वकथनमेव सर्वथा साधीयः। तच्च परब्रह्मावस्थात्रयातीतं तुरीयावस्थायां वर्तमानं निर्गुणमित्युच्यते।

किन्तु रामानुजाचार्यस्य ब्रह्म सगुणं सर्वशक्तिमत् सर्वव्यापकं सत् स्वेच्छया स्वस्माद् नानाविषयात्मकं संसारं सृजति। सर्वव्यापिनि तस्मिन् ब्रह्मणि चिदचिच्चेति तत्त्वद्वयं सदा सम्बद्धमस्ति। चित्तत्त्वं जीवाः, अचित्तत्त्वं प्रकृतिः, ताभ्यां विशिष्टं सजातीयविजातीयभेदरहितमद्वैतं ब्रह्म भवतीत्यतो विशिष्टाद्वैतं तदुच्यते। एतन्मते जगदपि तथैव सद् यथा ब्रह्म। उपनिषत्सु च यो नानात्वनिषेधो दृश्यते, यदपि चैकत्वप्रतिपादनम्, तावता न विषयाणां सत्ता अस्वीकार्या, किन्तु तेषां स्वतन्त्रस्थितिरेव निषिद्धेति मन्तव्यम्। अत एव शङ्कराचार्याभिमतं जगतो भ्रमात्मकत्वं खण्डयितुं जगत्सत्यत्वरूपं स्वपक्षं च समर्थयितुं सर्वमेव ज्ञानं सत्यमित्याह रामानुजाचार्यः।

किं बहुना, रज्जुसर्पज्ञानमपि तन्मते न भ्रमः। यानि तेजोजलावनिरूपाणि त्रीणि तत्त्वानि तान्येव रज्ज्वां सन्ति सर्परूपेण भासन्ते चेति। श्रुतिषु क्वचिन्निर्गुणत्व-वर्णनञ्च रागद्वेषादिहेयगुणासंबन्धाभिप्रायमेवेति बोध्यमिति।

किन्त्वेवंविधे ब्रह्मस्वरूपे सृष्टिप्रकारे च व्याख्यायमाने पूर्वोक्ता अनुपपत्तयो नाञ्जस्येन समाहिता भवन्तीति। शङ्कराचार्यस्य केवलाद्वैतवादे तु विवर्तवादाङ्गी-कारेण नानुपपत्तिगन्धोऽप्यस्तीति द्वयोर्मतयोरिदं मौलिकं वैधर्म्यम्। अयं भावः— यदि चिदचितौ द्वे अपि ब्रह्मणोंऽशौ तदा भौतिकविकारेण ब्रह्मविकार एवायाति। एवं सति ब्रह्मणि परिणामित्वमापतति। एवं जीवो यदा ब्रह्मणो वास्तविकोंऽशस्तदा जीवस्य सुखदुःखाभ्यां ब्रह्मापि सुखिदुःखि स्यात्। किं बहुना, जगतः सर्वेऽपि दोषा ब्रह्मणि समापतेयुः।

आसामापत्तीनां निराकरणाय रामानुजाचार्यो नानाप्रकारैर्यतते। कदाचिच्छ-रीरात्मनोरुपमां ददाति। जीवजगती देहो ब्रह्म चात्मेति। यथाऽऽत्माऽन्तःशरीरस्य नियन्त्रणं करोति तथैवेश्वरोऽपि जीवजगती नियन्त्रयति। अत एवान्तर्यामीत्युच्यते। यथा च शरीरविकारैर्नात्मा प्रभावितो भवति तथैव जगद्विकारैर्नेश्वरोऽपि। कदाचित् स राजप्रजयोरुपमां ददाति। यथा राजाज्ञापालनोल्लङ्घनाभ्यां सुखदुःखभागिनी प्रजा भवति न तु राजा तद्वदीश्वरोऽपीति। एवंविधविभिन्नव्याख्यादर्शनेन जीवब्रह्मसम्बन्ध-विषये रामानुजाचार्यस्य सिद्धान्तः किञ्चिद् गूढ इव प्रतिभाति। शरीरात्मनोः सम्बन्धो राजप्रजासम्बन्धात् सर्वथा भिन्नोऽस्ति। राजप्रजयोर्नांशांशिभावोऽस्ति यथा च जीवब्रह्मणोर्मन्यते। पुनश्च रामानुजाचार्यो ब्रह्म विशेष्यं जगच्च तद्विशेषणं मन्यते, परन्तु तथा सति जगद्दोषैर्ब्रह्मापि कथमस्पृष्टं स्यात्। एतानि काठिन्यानि स्वयं रामानुजाचार्योऽप्यनुभूतवान्, अत एवान्यत्र तेन स्वीकृतम्— ब्रह्मणो वास्तविकं स्वरूपमपरिणामि वर्तते तथा जगद्विकारैर्न तद् विक्रियां प्राप्नोतीति। किन्तु यदीयं स्वीकारोक्तिरनुरुध्येत तदा विकारशीलं भूततत्त्वं ब्रह्मणो यथार्थमान्तरिकं स्वरूपं न स्यात्, किन्तु तस्य तत् केवलं बाह्यरूपमेव भवेत्। तथा सति भूतजीवौ ब्रह्मणो वास्त-विकावंशाविति तदीयमुख्यसिद्धान्तो दुर्बलो जायते। विकारशीलौ भूतजीवौ ब्रह्मणो वास्तविकावंशौ, ब्रह्म चाविकारि इति विरोधिवचनाद् रामानुजाचार्यसिद्धान्तो विरोधग्रस्त इव भाति।

## ब्रह्माद्वैतविशिष्टाद्वैतवादयोः साधर्म्यवैधर्म्यविचारः

रामानुजाचार्यस्य विचारानुसारमुपनिषत्सु वर्णिता जीवेश्वरयोरेकता तयोर्नाभेदसूचिकाऽस्ति। स्वल्पो जीवोऽनन्त ईश्वरः, तौ द्वौ कथमेकः स्याताम्। अस्यां स्थितौ जीव ईश्वरेणाभिन्न इत्यस्यायमर्थो यत् प्रत्येकजीवेषु व्याप्ततया तन्नियन्त्रकतया चाभिन्नो जीव ईश्वरेणेति। यथा चांशस्यांशिनि, गुणस्य द्रव्ये, शरीरस्य चात्मन्यस्तित्वमायत्तं तथैव जीवास्तित्वमपीश्वरे आयत्तमिति। जीवेश्वरयोः कः सम्बन्ध इत्यपि महती समस्या वरीवर्त्ति, यत्र च भेदोऽभेदो भेदाभेदौ चेति सर्वे वादाश्चलन्ति। आचार्यशङ्कराभिमतं जीवेश्वराभेदं खण्डयन् रामानुजाचार्यो जीवेश्वरयोर्भेदे एतावद् बलं ददाति यत् स भेदवादीव भाति। यथा च व्याख्यातम् -"अधिकन्तु भेदनिर्देशात्" इति सूत्रभाष्ये। पुनश्चानन्यत्वाधिकरणस्थभाष्यावलोकनेन ब्रह्मणो जीवेऽनन्यत्वप्रतिपादनाद् विरोध इव ज्ञायते। किन्तु—"अंशो नानाव्यपदेशात्"...... ......"इति सूत्रभाष्येंऽशांशिभावकथनेन भेदोऽभेदश्चास्तीति प्रतीयते। विविधभाषया प्रोक्तेषु त्रिषु पक्षेषु रामानुजाचार्यस्यायमाशयो यद् एकमेव वस्तु द्विरूपं प्रतीयते इति योऽभेदपक्षः स नास्ति। तथा एकमेव वस्तु याथार्थ्येन द्विरूपं सम्पद्यते इति यो भेदपक्षः सोऽपि नास्तीति। किन्तु पूर्णांशयोर्यो भेदाभेदभावः स एव जीवेश्वरयोरस्तीति। निम्बार्काचार्याभिमतभेदाभेदवादाद् रामानुजाचार्याभिमतभेदाभेदवादेऽस्ति किञ्चिद् वैषम्यम्। निम्बार्काचार्यदृष्टौ भेदाभेदौ समानरूपेण स्तः, किन्तु रामानुजाचार्यदृष्टौ अभेदो मुख्यो भेदश्च गौण आस्ते। अत एव निम्बार्काचार्यस्य द्वैताद्वैतमतमुच्यते, रामानुजाचार्यस्य च विशिष्टाद्वैतमिति। शङ्कराचार्यस्तु सर्वथैव भेदं निरस्यन् जीवब्रह्मणोस्तादात्म्यमेव प्रतिपादयति भेदञ्चाज्ञानकृतमाह।

रामानुजाचार्यस्यात्माऽणुरस्ति। ज्ञानमात्मनो न स्वरूपं किन्तु धर्मः। अणुरपि जीवः प्रदीपो गृहमिव समस्तं देहं चेतनयति। कर्मज्ञानाभ्यां भक्तेरुदयस्ततो मुक्तिर्भवति। निष्कामकर्मणा बोधो बोधाद् भक्तिर्भक्तेश्च मुक्तिरिति क्रमः। भक्तिप्रपत्तिभ्यां प्रसन्न ईश्वरो मोक्षं ददाति। मुक्तावात्मा परमात्मना मिलित्वैकाकारतां प्रतिपद्यते। अर्थाद् दोषरहितः सन् ब्रह्मसदृशो जायत इति। शङ्कराचार्यमते तु विद्याद्वारा अनाद्यविद्याप्रतिपन्ने भेदभावे ध्वस्ते ब्रह्मीभाव एव मुक्तिरिति।

अविद्यासम्बन्धमादाय शङ्कराचार्यमतेऽपि बह्व्योऽनुपपत्तयः सङ्गृह्यन्ते। यथा—यस्या अविद्यायाः प्रभावात् संसारस्योत्पत्तिरस्ति, तस्या आधारः कः ? यदि

जीवस्तर्हि जीवत्वं तु स्वयमविद्यायाः कार्यम्, ततोऽविद्यारूपं कारणं कार्यभूते जीवे कथमाधृतं स्यात्। यद्युच्येत ब्रह्मण्यविद्या (अज्ञानम्) आश्रिता, तर्हि ब्रह्म शुद्धज्ञानस्वरूपं कथं स्यात्? किन्त्वनुपपत्तिरियमित्थं समाहिता भवति यद् अज्ञानस्य जीवाश्रितत्वस्वीकारे तदैवोक्तदोषः स्याद् यद्यज्ञानं कारणं जीवश्च तस्य कार्यं स्यात्। यदि तु तावज्ञानजीवौ वृत्तपरिधी इव त्रिभुजत्रिकोणौ इव वैकस्यैव वस्तुनः परस्परापेक्षे सहवर्तिनी द्वे अङ्गे स्वीक्रियेताम्, तदा न सापत्तिः। अज्ञानस्य ब्रह्माश्रितत्वस्वीकारेऽपि न दोषः। मायावीव ब्रह्म जीवेषु भ्रमोत्पादनशक्तिमत्। यथा च मायावी स्वमायया स्वयं नाभिभूयते तद्वद् ब्रह्मापि स्वयं मायया नाभिभूयत इति।

द्वितीयाऽनुपपत्तिरियं भवति यद् यद्यज्ञानं ब्रह्मावृणोति तर्हि माया (अविद्या)-वरणेन स्वप्रकाशज्ञानस्वरूपस्य ब्रह्मणो विनाश एव स्यादिति। इयमप्यनुपपत्तिरित्थं समाधीयते यदज्ञानेन ब्रह्मणो यदावरणं भवति तस्मात् कारणाद् अज्ञानिजीवस्य ब्रह्मणो यथार्थस्वरूपप्रतीतिमात्रं न भवति। यथा मेघाच्छन्नस्य सूर्यस्य दर्शनं लोकानां न भवति, नैतावता सूर्यस्य लोपो भवति। स्वप्रकाशताया नायमर्थो यद् बाधायां सत्यामपि प्रकाशस्यावरणं न स्यादिति। नह्यन्धः सूर्यं न पश्यतीति सूर्यस्य स्वप्रकाशतैव नश्यतीति।

तृतीया चेयमनुपपत्तिरुदेति यन्माया सती वा स्यादसती वा स्याद् न त्वनिर्वचनीया भवितुमर्हति, सदसद्भ्यां परस्परविरुद्धाभ्यां द्विकोटिभ्यामतिरिक्तायास्तृतीयकोटेरसम्भवात्। अस्या आपत्तेरिदं समाधानं यद् मायावस्तु न सत्, कालान्तरे बाध्यमानत्वात्। न असत्, प्रतीयमानत्वात्। अत एव माया सदसदितिकोटिद्वयाद् विलक्षणैव मन्यते। मायाया अनिर्वचनीयत्वञ्च तदेव यदुक्तकोटिद्वयबहिर्भूतत्वम्। नात्र विरोधोऽपि, यतः सत्पदार्थः पूर्णतः सत्योऽसत्पदार्थश्च पूर्णतोऽसत्यः। एतत्कोटिद्वयमध्ये तृतीयाऽपि सम्भवत्येव, यथा पूर्णप्रकाशपूर्णान्धकारयोर्मध्ये भवति।

चतुर्थी चेयमनुपपत्तिर्यद् विद्याया अभावरूपत्वाद् अविद्या कथं भावात्मिका स्यान्मायावादिनाम्। अत्रायं समाधिर्दीयते यद् अविद्यामूलके रज्जुसर्पभ्रमे न केवलं वस्तुज्ञानस्याभावमात्रं भवति, किं तर्हि? तत्र विषयान्तराभासोऽपि जायते। तस्माद् विक्षेपगुणप्राधान्याभिप्रायेणाविद्यात्मकमायाया भावरूपत्वमुक्तम्।

## ब्रह्माद्वैतविशिष्टाद्वैतवादयोः साधर्म्यवैधर्म्यविचारः

पञ्चमी चेयमनुपपत्तिरायाति यद् यद्यज्ञानं भावरूपं स्यात् तर्हि ब्रह्मज्ञानेन तस्य कथं नाशः स्यात्, भावात्मकत्वेन तस्य ज्ञानद्वारा नाशासंभवात्। किन्त्वयमपि दोषोऽनुभवप्रमाणेनैव निरस्तो भवति। तथा हि—दैनिकजीवने वयं पश्यामो यद् रज्जुसर्पभ्रमे मिथ्यासर्पो भावात्मकतया प्रकटीभवन्नपि यथार्थवस्तु( रज्जु )ज्ञाने सति नश्यतीति। अतो न काचिदसङ्गतिः।

इत्थञ्चानयोर्वादयोः साधर्म्यवैधर्म्यविचारप्रसङ्गे नैवेदमपि तिरोधातुं शक्यं यद् दार्शनिकमर्यादायाः सर्वोच्चशिखरायमाणां परमार्थभूतां कोटिं न कश्चिदाहत्यैवारोढुं क्षम इति सर्वाणि वादान्तराणि तदारोहयात्रायां सोपानभूमितयैवोपादेयतां श्रद्धेयतां चाश्रयन्ते। सा तु परमार्थकोटिर्ब्रह्माद्वैतवाद एवेति शम्॥

——

# भागवततात्पर्यनिर्णयः

श्रीश्रीकृष्णमणित्रिपाठी, सरस्वतीभवनम्, वा० सं० विश्वविद्यालयः।

वेदवेदान्तसारं यद् व्यासशोकनिवर्तकम्।
महापुराणमूर्धन्यं श्रीमद्भागवतं स्तुमः॥

यथा प्रथमस्कन्धीयप्रथमाध्यायप्रथमपद्ये "सत्यं परं धीमहि" इति वाक्यं वर्तते, तथैव द्वादशस्कन्धीयत्रयोदशाध्यायस्यैकोनविंशतितमे पद्येऽपि "सत्यं परं धीमहि" इत्यस्योल्लेखोऽस्ति। अत आभ्यामुपक्रमोपसंहाराभ्यां निर्णीयते यत् परसत्यब्रह्मतत्त्व-प्रकाशनायैव श्रीमद्भागवतस्याविर्भावो जातः।

किञ्च ब्रह्मादिदेवैरभ्यर्थितो भगवान् नारायणो द्वापरे पराशरात् सत्यवत्यां व्यासरूपेणावतीर्य वेदं चतुर्धा विभज्य कलियुगे ज्ञानशक्तिविहीनानां मन्दमती-नामल्पायुषां पुंसां ज्ञानवर्त्मप्रदर्शनद्वारा कैवल्यलाभाय महाभारतं सप्तदशपुराणानि च विरचय्यापि शान्तिमलभमानो नारदोपदेशतः श्रीकृष्णभक्तिप्रधानं वेदान्तसूत्र-व्याख्यानमयममलात्मनां मुनीनामपि मनोमुग्धकरं श्रीमद्भागवतं व्यरचयत्।

वैष्णवाचार्या जगद्गुरवः श्रीवल्लभाचार्याः श्रीमद्भागवतस्य गम्भीरविचारपूर्वकं सुबोधिनीनाम्नीं टीकां कृतवन्तः। तत्र तैर्भक्त्या श्रीकृष्णचरणारविन्दसेवनमेव श्री-मद्भागवतस्य तात्पर्यं निर्णीतमस्ति। अत एव सत्यं परं धीमहीत्यस्य व्याख्याने तैस्तत्र परं सत्यं पुरुषोत्तमतत्त्वं ध्यायेमः प्रीतिं कुर्म इत्यर्थः कृतः।

## दर्शनं भागवतधर्मश्च

श्रीमद्भागवतं हि परमविरक्तानाममलात्मनां परमहंसानां प्रियतमो विष्णुभक्ति-प्रतिपादकः सर्वश्रेष्ठो वैष्णवदर्शनग्रन्थोऽस्ति। तत्र मुख्यतया सख्यवात्सल्यमाधुर्य-रसलीलायाः सविस्तरं वर्णनं विद्यते। अखिलब्रह्माण्डाधिपतिः श्रीकृष्णो गोपगोपी-प्रेमपरवशो गोपालबालकैः सह क्रीडति नृत्यति गायति गाश्चारयति क्रीडायां पराजितो भूत्वा गोपालबालकान् पृष्ठे आरोप्य समुद्वहति। अत एवोक्तम्—

पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्त्तिभूतं भागधेयं यदूनाम् ।
एकीभूतं गुप्ततत्त्वं श्रुतीनां श्यामीभूतं ब्रह्म मे सन्निधत्ताम् ॥

वेदान्तसिद्धान्तानुसारमविद्यानाशात् कैवल्यमुक्तिर्भवति । अविद्यानाशश्च जायते पराविद्यया ज्ञानेन वा । ज्ञानस्योदयो भवति अन्तःकरणशुद्धया, अन्तःकरणशुद्धिश्च निष्कामकर्मणा, निष्कामकर्मप्रवृत्तिश्च श्रवणमननादिभिर्जायते । अतोऽविद्यानिवृत्तिपूर्वकं ब्रह्मोपलब्धये श्रवणमननादीनामनुष्ठानमत्यावश्यकम् । आनन्दघनं भगवन्तं लब्ध्वा न पुनर्जीवः पुनर्जन्मचक्रे परिवर्तते । तथा च श्रुतिः— "न स पुनरावर्तते न स पुनरावर्तते" । गीतायाञ्च—

यद् गत्वा न निवर्तन्ते तद्धाम परमं मम ।

श्रीमद्भागवतेऽज्ञानकल्पितासत्यरूपपरित्यागपूर्वकस्ववास्तविकस्वरूपेणावस्थितिर्मुक्तेर्लक्षणम् । तथा हि—

मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः । ( २।१०।६ )

तन्मते मुक्तिः पञ्चधा—सालोक्य-सार्ष्टि-सामीप्य-सारूप्य-सायुज्यभेदात् । तत्र भगवतो नित्यचिन्मयधाम्नि स्थितिः सालोक्यमुक्तिः प्रोच्यते । भगवत्तुल्यैश्वर्यप्राप्तिः सार्ष्टिमुक्तिः कथ्यते । भगवत्सान्निध्यावस्थितिः सामीप्यमुक्तिर्निगद्यते । भगवत्स्वरूपप्राप्तिः सारूप्यमुक्तिः । भगत्स्वरूपावस्थितिः सायुज्यमुक्तिः स्वीक्रियते । श्रीमद्भागवतानुसारं भगवतः परमभक्ताः पञ्चस्वपि मुक्तिषु नैकामपि मुक्तिं वाञ्छन्ति, किन्तु सर्वदा अनन्यभावेन भगवत्सेवासम्पादनमेवाभिलषन्ति । परमकृपालुना भगवता दीयमानामपि मुक्तिं न गृह्णन्ति ते । तथा हि श्रीमद्भागवते—

न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥

( ११।२०।३४ )

श्रीमद्भागवते प्रायः सर्वेषां दर्शनानां सिद्धान्ताः स्वीकृताः । श्रीमद्भागवते प्रधानतया दशानां तत्त्वानां वर्णनमस्ति । तत्र मुख्यतमं तत्त्वमाश्रयतत्त्वमेवास्ति । आश्रयतत्त्वञ्च शरणागतवत्सलो भगवानेवास्ति । तदुपलब्धये एवान्येषां नवानां तत्त्वानां वर्णनं जातम् । यद्यपि प्रतिस्कन्धं श्रीमद्भागवते आश्रयतत्त्वस्य निरूपणं

दृश्यते, तथापि सगुणं साकारमाश्रयतत्त्वं दशमस्कन्धे निर्गुणं निराकारमाश्रयतत्त्वं च द्वादशस्कन्धे विशेषतो निरूपितम्।

श्रीमद्भागवतस्य श्रुतिभिर्यावान् घनिष्ठः सम्बन्धो वर्तते न तावानन्येषां पुराणानाम्। कतिपयशब्दपरिवर्तनपूर्वकं बह्वीनां श्रुतीनां तदर्थानाञ्च तत्र स्पष्टतयोल्लेखोऽस्ति। बहूनि श्रीमद्भगवद्गीतापद्यानि ब्रह्मसूत्राणि च श्रीमद्भागवते मिलन्ति। प्रस्थानत्रये यत्किमपि तत्त्वं प्रतिपादितमस्ति तत्सर्वं श्रीमद्भागवते उपनिबद्धमुपलभ्यते। अत एव श्रीमद्भागवतं श्रुतीनां सारं महाभारततात्पर्यनिर्णायकं ब्रह्मसूत्रभाष्यं चोच्यते। श्रीमद्वल्लभाचार्यचरणास्तु श्रीमद्भागवतं चतुर्थप्रस्थानं स्वीकुर्वन्ति।

श्रीमद्भागवतानुसारं केवलं शारीरिकं सान्निध्यं सान्निध्यं नास्ति, किन्तु मनस एव मुख्यं सान्निध्यमपेक्षितम्। यत्र हार्दिकं प्रेम विद्यते तत्रैव सान्निध्यमस्ति। प्रेम विना शारीरिकं सान्निध्यं व्यर्थमेव प्रतीयते। गोपीनां हृदयेषु सत्यं प्रेम आसीत्। अतस्तत्र सत्यं सान्निध्यमासीत्। संयोगापेक्षया वियोगेऽधिकं मानसं सान्निध्यं जायते। यतो हि संयोगे प्रियतमसान्निध्यं सीमितं भवति, किन्तु वियोगे सर्वदैव प्रियतमस्य स्मरणं चिन्तनं दर्शनञ्च जायते। दूरे वर्तमानस्य कृष्णस्य हृदये गोपिका आसन्, तासां हृदये च स आसीत्। अत एव तासां हृदि प्रसृतं प्रेमपयोनिधिं पर्यवेक्ष्य प्रेमगद्गदेनोद्धवेनोक्तम्—

आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्॥

(१०।४७।६१)

कीर्तनभक्तिशिरोमणिः श्रीचैतन्यमहाप्रभुः स्वगौडीयसम्प्रदायप्रचारं श्रीमद्भागवतानुसारमेव समारब्धवान्। तस्य मुख्यमुद्देश्यमासीद् भगवन्नामगुणकीर्तनद्वारा भगवद्भक्तिप्रचारः। तेन द्वैताद्वैतयोः समन्वयाय महान् प्रयासो विहितः। तदनुसारं भगवन्नाम एवं संकीर्तनीयं येन नेत्राभ्यामश्रुधारा प्रवहेद् वाणी गद्गदा भवेत् सर्वाङ्गञ्च पुलकितं स्यात्। तेन

हरे राम हरे राम राम राम हरे हरे।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे॥

इति महामन्त्रो भगवन्नामसु सर्वश्रेष्ठः स्वीकृतः। तस्य निम्नाङ्कितास्चत्वारः सिद्धान्ता अतिप्रसिद्धाः सन्ति।

(१) ब्रह्म सर्वभेदशून्यमस्ति, किन्तु सच्चिदानन्दस्वरूपतया तस्य शक्तिस्त्रिधाऽभिव्यज्यते। प्रथमा सन्धिनी शक्तिः, द्वितीया संविच्छक्तिः, आह्लादिनी शक्तिश्च तृतीया। तत्र सन्धिनीशक्तिबलेन स्वयं तिष्ठति भगवान् अन्यांश्च स्थापयति, संविच्छक्त्या स्वयं जानाति भक्तांश्च बोधयति, आह्लादिनीशक्त्या च स्वयमानन्दमनुभवति भक्तांश्चानन्दयति।

(२) भगवन्तमनुकूलयितु दृढेन प्रेम्णा तद्भक्तिसम्पादनमेव सरल उपायः।

(३) निष्कामकर्मणा चित्तशुद्धिर्भवति, ततो ज्ञानं समुद्भवति, तेन च दृढा भक्तिः समुज्जृम्भते।

(४) मुक्तेरेकमात्रं साधनञ्च भगवच्चरणारविन्दे आत्मसमर्पणमेवास्ति। चैतन्यमहाप्रभुणा हि ब्रह्मसूत्रनिर्दिष्टनिम्नाङ्कितभागवतश्लोकसिद्धान्तानुसारमेवात्मनो मतं प्रचारितम्—

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे।
अहैतुक्यप्रतिहता ययाऽऽत्मा सम्प्रसीदति॥ (१।२।६)
नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्॥ (१।५।१२)
स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः।
तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः। (२।१।३९)
एवं स्वचित्ते स्वत एव सिद्ध आत्मप्रियोऽर्थो भगवाननन्तः।
तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र॥ (२।२।६)
येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः॥(१०।२।३२)
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह॥ (११।२०।३१)
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति॥ (११।२०।३३)

भागवततात्पर्यनिर्णयः

एषां पद्यानां पर्यालोचनया सिद्ध्यति यत् श्रीमद्भागवतमद्वैततत्त्वमेव स्पष्टैः शब्दैः प्रतिपादयति। तदेकमद्वितीयं परमार्थतत्त्वं ज्ञानिभिः ब्रह्म, योगिभिः परमात्मा, भक्तैश्च भगवानित्युच्यते। तदेव निर्गुणं सगुणं चोच्यते। तदेव ब्रह्म भक्ताभिलाषपूरणाय विभिन्नेषु रूपेष्ववतीर्य लोकानानन्दयति शिक्षयति च। भगवतोऽचिन्त्या शक्तिर्माया, मायासन्तरणाय भगवद्भक्तिरेव परमं साधनम्।

## भक्तिलक्षणम्

अथ भक्तेः किं स्वरूपमिति जिज्ञासायां प्राह महर्षिः शाण्डिल्यः—सा परानुरक्तिरीश्वरे। देवर्षिनारदः—सा त्वस्मिन् परमप्रेमरूपा अमृतस्वरूपा च। अङ्गिराश्च—सानुरागरूपा। नारदपञ्चरात्रे तु—

सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम्।
हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते॥

किञ्च—

अनन्यममता विष्णौ ममता प्रेमसङ्गता।
भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः॥

भक्तिरसायने च—

द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा।
सा भक्तिरित्यभिहिता..................॥

एभिर्वचनैरिदं ज्ञायते यद् भगवत्यनन्यं प्रेमैव भक्तिरस्ति। भज सेवायामिति धातोः क्तिन्प्रत्ययेन निष्पन्नो भक्तिशब्दार्थः प्रेम्णा भगवत्सेवैवास्ति।

यद्यपि भगवद्भक्तौ जीवमात्रस्यास्त्यधिकारो न्याययुक्तः, हनुमज्जाम्बवद्गरुडगजेन्द्रकाकभुशुण्डिजटायुप्रभृतीनां पशुपक्षिप्लवङ्गमादीनामपि भगवद्भक्त्या परमपदप्राप्तिदर्शनात्, तथापि सर्वसाधारणपशुपक्षिषु मनुष्यवद् ज्ञानसाधनयोरभावादीश्वरभक्तिं कर्तुमसमर्थतया शास्त्रकारा ईश्वरभक्तौ प्रधानतया मनुष्याणामेवाधिकारं वदन्ति। तथा च बादरायणसूत्रम्—"शास्त्राधिकारत्वान्मनुष्यस्य" इति।

भगवद्भक्तौ रूपस्यायुषश्च न मूल्यमस्ति, न च विद्याया धनस्य जातेश्चोत्कर्षोऽप्यपेक्ष्यते, न वा सदाचारस्य सद्गुणस्य च प्राधान्यमस्ति, नापि बलं मुख्यं

विद्यते, किन्तु प्रेमैवानन्यं प्रतीक्षते भगवान्। तथा चोक्तं जीवगोस्वामिना भक्तिरसामृतसिन्धौ—

व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का
का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम्।
कुब्जायाः कमनीयरूपमधिकं किं तत्सुदाम्नो धनं
भक्त्यां तुष्यति केवलं न च गुणैर्भक्तिप्रियो माधवः॥

भक्तिर्भगवतः प्राणतोऽप्यधिका प्रियाऽस्ति। तयाऽभ्यर्थितो भगवानपावनानां गृहाणि पुनाति। तथा चोक्तं नारदेन भक्तिं प्रति पद्मपुराणान्तर्गतश्रीमद्भागवत-माहात्म्ये—

त्वं तु भक्ते प्रिया तस्य सततं प्राणतोऽधिका।
त्वयाहूतस्तु भगवान् याति नीचगृहेष्वपि॥ (२ ३)

प्रगाढ्या भक्त्या प्रसन्नो भगवान् सर्वमपि कार्यं परित्यज्य भक्तस्य कृतेऽलौकिकं कर्म निर्वर्तयति, असंभवञ्च कार्यं सम्भावयति। सर्वशक्तिसम्पन्नः कर्तुमकर्तुमन्यथा-कर्तुं सर्वथा समर्थो भगवान् श्रीकृष्णः पाण्डवकुलनन्दनस्य धर्मराजस्य भक्तिगुणा-गणाकृष्टः कौरवकुलं दूरे परित्यज्य पाण्डवकुलस्य मङ्गलचिन्तायां नियतं व्यापृतो भूत्वा अर्जुनस्य सारथ्यमपि स्वीचकार। भक्तराजस्य प्रह्लादस्योत्कृष्टया भक्त्याऽऽ-कृष्टो यत्र तत्र तस्य विपदमभिलक्षितवान् तत्र तत्र तां वारयितुं प्रववृते। मदोन्मत्तस्य करिणः पादतलेन मर्दितः शैलशिखराद्भूमौ प्रक्षिप्तो जीवनापहारकं च विषलड्डुकं मधुरमोदकत्वेन परिणमय्य भगवता परिपालितः प्रह्लादः। हरिनामस्मरणमात्रेण भक्तिरसाभिप्लुतः प्रह्लादः—'क्व ते नारायणः' इति पित्रा सरोषं पृष्टः 'सर्वत्रैव वर्तते मे नारायणः' इत्युक्तवान्। पुनर्यदि सर्वत्रैव वर्तते ते नारायणस्तदत्र स्तम्भेऽपि वर्ततां नाम' इत्युक्तवति पितरि 'बाढम्' इति यदा प्राह प्रह्लादस्तदैव तेन सगर्वमभि-हतात् स्तम्भान्नारायणो नृसिंहरूपेणाविर्भूय भक्तस्य प्रतिकूलाचारिणं हिरण्यकशिपुं नखैर्विदार्य पञ्चत्वं प्रापयामास, प्रह्लादं च तद्राज्येऽभिषिच्य भक्तस्य भगवच्चिन्तन-परस्य साहाय्यं सम्पादयामास। तथा चाह श्रीमद्भागवते भगवान् व्यासदेवः—

सत्यं विधातुं निजभृत्यभाषितं व्याप्तिञ्च भूतेष्वखिलेषु चात्मनः।
अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम्॥

(७।८।१८)

अनन्यया भक्त्या सन्तुष्टो भगवान् भक्तस्य सर्वविधां विपदं वारयति, मनोरथं च सर्वं पूरयत्येव। गोपदमिव संसारसागरमुत्तीर्य भगवद्भक्तः परमं पदं लभते। तथाह श्रीमद्भागवते—

समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः।
भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद्विपदो न तेषाम्॥

(१०।१४।५८)

भगवति समासक्तो भक्तस्तद्भक्तिं लब्ध्वा न पुनः जन्ममरणचक्रचङ्क्रमितो भवति। तथा हि ब्रह्मादयो देवा देवकीगर्भगतं भगवन्तं स्तुवन्ति—

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते।
क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न पुनर्भवाय॥

(१०।२।३७)

## भक्तेर्भेदाः

भक्तिस्तावद् द्विविधा—गौणीपराभेदात्। गौणी पुनर्द्विधा—वैधी रागात्मिका च। वैधी अपि श्रवण-कीर्तन-स्मरण-पादसेवन-अर्चन-वन्दन-दास्य-सख्यात्मनिवेदनरूपेण पुनर्नवधा विभज्यते। गुरूपदेशाद् विधिनिषेधानुकूलं साधनं कुर्वतो भक्तस्य हृदये प्रथमं या भक्तिरुदेति सा वैधी भक्तिरुच्यते। ततो निरन्तरं भगवच्चरणारविन्दविषयिणी रागात्मिका भक्तिराविर्भवति, यथा भक्तहृदये आनन्दातिरेकः सञ्जायते। तस्य मनोमधुपः प्रभुपादपद्ममकरन्दपानमत्तः सर्वत्र प्रभुमेव पश्यन्नानन्दनिमग्नस्तिष्ठति। वंशीनिनादमाकर्ण्य स्वान्तिकमुपगता गोप्यो यदा कृष्णेनोक्ता यत्—

स्वागतं वो महाभागाः प्रियं किं करवाणि वः।
व्रजस्यानामयं कच्चिद् ब्रूतागमनकारणम्॥ (१०।२९।१८)
रजन्येषा घोररूपा घोरसत्त्वनिषेविता।
प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः॥ (१०।२९।१९)

तद् यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन् सतीः।
क्रन्दन्ति वत्सा बालाश्च तान् पाययत दुह्यत ॥ (१०।२८।२२)

तदा रागात्मिकाभक्तिरसाभिप्लुता एव ता भगवन्तं श्रीकृष्णमेवमुक्तवत्यः—

मैवं विभोऽर्हसि भवान् गदितुं नृशंसं
सन्त्यज्य सर्वविषयांस्तव पादमूलम्।
भक्ता भजस्व दुरवग्रह मा त्यजास्मान्
देवो यथादिपुरुषो भजते मुमुक्षून् ॥
(१०।२९।३१)

चित्तं सुखेन भवतापहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्य कृत्ये।
पादौ पदं न चलतस्तव पादमूलाद् यामः कथं व्रजमहो करवाव किं वा ॥
(१०।३८।३४)

रागात्मिकायां भक्तौ भगवत्प्रेमविह्वलो भूत्वा भक्त उन्मत्तवन्नृत्यति रोदिति गायति हसति च। तथा चोक्तम्—

क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः॥
(११।३।३२)

अस्यामवस्थायां स्थितस्य भक्तस्य दशामेव वर्णयति भगवान् कृष्ण उद्धवं प्रति—

वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च।
निर्लज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ (११।१४।२४)

एवञ्च गुरुवाक्यशास्त्रवचनाज्ञानुसारं वैधीभक्तिमभ्यस्यतो भक्तस्य हृदये सा रागात्मिका भक्तिरुदेति, यस्यां भक्तहृदयं सांसारिकविषयेभ्य उपरतं भूत्वा भगवति लीनं भवति। एतत्परिपक्वदशायाः परिणाम एव पराभक्तिः। यस्यामहङ्कार-देहात्मभावौ नश्यतः, सर्वात्मदृष्टिश्च जायते। तथा चोक्तं श्रीशङ्कराचार्यपादैः—

सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमा
गाङ्गं वारि समस्तवारिनिवहः पुण्याः समस्ताः क्रियाः।

वाच: प्राकृतसंस्कृता: श्रुतिगिरो वाराणसी मेदिनी
सर्वावस्थितिरस्य वस्तुविषया दृष्टे परे ब्रह्मणि ॥

के भक्तेर्गुणा इति जिज्ञासायां प्राह भगवान् व्यास:—

क्लेशघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा ।
सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षणी च सा ॥

स्कन्दपुराणे च—

अन्त:शुद्धिर्बहि:शुद्धि: तप: शान्त्यादयस्तथा ।
अमी गुणा: प्रपद्यन्ते हरिसेवाभिकामिनम् ॥

तस्मादात्मकल्याणकामभि: पुरुषैर्भगवत्स्वरूपसाक्षात्कारात्मकमुक्तिप्राप्तये तत्साधनत्वेनोपयोगिनी भगवद्भक्तिरवश्यमनुष्ठेया, समादरणीया च सा सर्वदा ।

## नवधा भक्ति:

श्रवणं कीर्तनं विष्णो: स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥

तत्र भगवद्गुणगाथाया: श्रवणं नाम श्रवणभक्ति: । सा च सर्वधर्मेभ्य: श्रेष्ठा स्वीकृताऽस्ति । यतो हि भगवतो गुणानुवादश्रवणेन तत्प्राप्तिरवश्यं भवति । तथा चोक्तं श्रीमद्भागवतमाहात्म्ये—

श्रवणं सर्वधर्मेभ्यो वरमन्ये तपोधना: ।
वैकुण्ठस्थो यत: कृष्ण: श्रवणादेव लभ्यते ॥ (६।७६)

महाराज: परीक्षित् श्रवणभक्तिप्रभावेणैव परमात्मानं प्राप्तवान् । तद्यथा श्रीमद्भागवतमाहात्म्ये—

असारे संसारे विषयविषसंगाकुलधिय:
क्षणार्धं क्षेमार्थं पिबत शुकगाथाऽतुलसुधाम् ।
किमर्थं व्यर्थं भो ? व्रजत कुपथे कुत्सितपथे
परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्तिकथने ॥ (६।१००)

महापापी धुन्धुकारी अपि भगवतो गुणानुवादश्रवणप्रभावेणैव संसारसागरा-

दुस्तीर्णः। महादुर्वृत्तोऽजामिलस्तु नारायणशब्दोच्चारणेनैव यमपाशाद्विमुक्तः। अत एवोक्तम्—

अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः।
कुतः पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा॥ (३.७।१४)

अतो मनुष्याणां कृते श्रवणादन्यः कोऽपि नास्ति भगवत्प्राप्तिसाधकः सुगमः पन्थाः।

भगवच्चरित्रकीर्तनं नाम कीर्तनभक्तिः। श्रीमद्भागवते यथा—

संकीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसः।
प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः॥
इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शंतमानि।
अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो भक्तिं परां परमहंसगतौ लभेत॥
(११।३१।२८)

श्रीमद्भगवद्गीतायां तु कीर्तनासक्तो भक्तः सर्वश्रेष्ठोऽभिहितो भगवता श्रीकृष्णेन—

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि॥

भगवच्चरितचरणारविन्दादिस्मरणात्मिका स्मरणभक्तिः श्रीमद्भागवते यथा—

अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च।
सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम्॥
(१२।१२।५४)

विष्णुसहस्रनामस्तोत्रेऽपि—

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात्।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे॥

श्रीमद्भगवद्गीतायां च भगवान् श्रीकृष्णः स्मरणभक्त्याऽऽत्मनः सुलभत्वं दर्शितवान्—

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याऽहं सुलभः पार्थ नित्यमुक्तस्य योगिनः॥

भगवत्पादाब्जसेवनं सेवनभक्तिः श्रीमद्भागवते यथा—

यत्पादसेवाभिरुचिर्मनस्विनामशेषजन्मोपचितं मलं धियः।
सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिःसृता सरित्॥

मर्यादापुरुषोत्तमस्य भगवतो रामस्य चरणारविन्दरजसाङ्कितां चित्रकूटभूमिं पश्यतो भरतस्य तन्मयतां वर्णयन् भगवान् शिवो भगवतीं पार्वतीं प्रति प्राह अध्यात्मरामायणे—

स तत्र वज्राङ्कुशवारिजाञ्चितध्वजादिचिह्नानि पदानि सर्वतः।
ददर्श रामस्य भुवोऽतिमङ्गलान्यचेष्टयत्पादरजस्सु सानुजः॥ (२।८।२)
अहो सुधन्योऽहममूनि रामपादारविन्दाङ्कितभूतलानि।
पश्यामि यत्पादरजो विमृग्यं ब्रह्मादिदेवैर्मुनिभिश्च नित्यम्॥ (२।८।३)

अहल्या भगवतो रामस्य चरणरजसा स्पृष्टा सती सचेतना भूत्वा पुलकितसर्वाङ्गा हर्षाश्रुजलनयना राजीवलोचनं भगवन्तं श्रीरामं स्तौति—

अतो कृतार्थास्मि जगन्निवास ते पादाब्जसंलग्नरजःकणादहम्।
स्पृशामि यत्पद्मजशङ्करादिभिर्विमृग्यते रन्धितमानसैः सदा॥ (१।५।४३)
यत्पादपङ्कजपरागपवित्रगात्रा भागीरथी भवविरञ्चिमुखान् पुनाति।
साक्षात् स एव मम दृग्विषयो यदास्ते किं वर्ण्यते मम पुराकृतभागधेयम्॥ (१।५।४५)

पाषाणादिनिर्मिताया भगवन्मूर्तेः पूजनमर्चनभक्तिः। सा च भगवतोऽतिप्रीतिकारिणी विद्यते। भगवतोऽर्चनेन भक्तानां हृदये प्रसन्नता भवति, तथा भगवद्भावप्रीतिश्च शनैः शनैः समुदेति। तथाहि श्रीमद्भागवते व्यासदेवः—

श्रीविष्णोरर्चनं ये तु प्रकुर्वन्ति नरा भुवि।
ते यान्ति शाश्वतं विष्णोरानन्दं परमं पदम्॥

अर्चनभक्त्या स्वर्गापवर्गसंप्राप्तिः समस्तसिद्धिलाभश्चानायासेन भवति; तद्यथा—

स्वर्गापवर्गयोः पुंसां रसानां भुवि मानसम्।
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्॥

श्रीमद्भगवद्गीतायामपि भगवान् श्रीकृष्णः—

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥

भगवच्चरणारविन्दयोर्वन्दनं वन्दनभक्तिरुच्यते। तया भक्तेष्वहङ्कारापनयनद्वारां भगवद्भावस्योदयो भवति। तथा चोक्तं श्रीमद्भागवते—

ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम्॥ (११।५।३३)

एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय॥

भीष्मस्तवराजे च—

एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः।
नम इत्येव कृष्णाय प्रणाममकरोत्तदा॥

दासवत् सर्वतोभावेन भगवद्भक्तिसम्पादनं दास्यभक्तिः। यत्र भगवत्सेवाभ्यासद्वारा भक्तहृदयतोऽभिमानापनयनं भवति, भक्तो भगवन्तमेव सर्वश्रेष्ठं मनुते। तथा चोक्तं श्रीमद्भागवते—

न वासुदेवात् परमस्ति मङ्गलं न वासुदेवात् परमस्ति पावनम्।
न वासुदेवात् परमस्ति दैवतं तं वासुदेवं प्रणमन्न सीदति॥

भगवन्तं सखायं मत्वा तदनुकूलाचरणं सख्यभक्तिः। अत्र भगवत्सखिरूपेण भक्तहृदये मधुरमयस्य प्रेम्णो विकाशो जायते। सख्यभक्तिप्राप्तौ भगवत्प्रेमिभिः सखिभिः सह सङ्गः, तेषां चरित्रस्याध्ययनमत्यावश्यकमस्ति। तथा हि श्रीमद्भागवते—

अहोभाग्यमहोभाग्यं नन्दगोपव्रजौकसाम्।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्॥ (१०।१४।३२)

अतिदीनस्य सख्युः सुदाम्नः सेवापरस्य भगवतः श्रीकृष्णस्यावस्थां वर्णयति व्यासदेवः—

सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः ।
प्रीतो व्यमुञ्चदब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः ।। (१०।८०।१९)
अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् ।
उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ।। (१०।८०।२०)
अग्रहीच्छिरसा राजन्! भगवांल्लोकपावनः ।
व्यलिम्पद् दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः ।। (१०।८०।२१)

भगवत्यात्मसर्वस्वसमर्पणम् आत्मनिवेदनभक्तिः । आत्मनिवेदनद्वारा भक्तानां शारीरिकी वाचनिकी मानसिकी च सकला चेष्टा भगवद्भावमयी भवति । तदा भक्तानां हृदये भगवद्विषयेऽपूर्वदिव्यरागस्य विकासो जायते । भक्त आत्मनः सर्वं वस्तु भगवदर्थमेव मनुते । तथा हि श्रीमद्भागवते—

स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ।। (९।४।१८)
घ्राणञ्च तत्पादसरोजसौरभे श्रीमत्तुलस्यां रसनां तदर्पिते ।
पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।। (९।४।१९)

एवञ्च नवविधास्वासु भक्तिष्वेकविधया अपि भक्त्या भगवन्तं साक्षात्कृत्य भक्तोऽनायासेन संसारसागरादुत्तर्तुं शक्नोति, किं पुनः प्रह्लाद इव यत्र नवधापि भक्तिर्भवेत् । अतः प्रेम्णा भगवतो भक्तिर्विधेया, यथाऽन्तेऽवश्यं कल्याणं भवेत् । अत एव पद्मपुराणे श्रीमद्भागवतमाहात्म्ये भगवद्भक्तानामेवं प्राशस्त्यमुक्तम्—

निखिलभुवनमध्ये निर्धनास्तेऽपि धन्या
निवसति हृदि येषां श्रीहरेर्भक्तिरेषा ।
हरिरपि निजलोकं सर्वथातो विहाय
प्रविशति हृदि तेषां भक्तिसूत्रोपनद्धः ।। (३।७३)

नवधा भक्तिवर्णनप्रसङ्गे श्रीरूपगोस्वामिना नवानामपि भक्तीनामेकैकमुदाहरणं प्रदाय तत्फलञ्च श्रीकृष्णपदारविन्दप्राप्तिरेव प्रतिपादितम् । तथा हि—

श्रीविष्णोः श्रवणे परिक्षिदभवद् वैयासकिः कीर्तने
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने ।
अक्रूरस्त्वभिवादने कपिपतिर्दास्येऽथ सख्येऽर्जुनः
सर्वस्वात्मनिवेदने बलिरभूत्कृष्णाप्तिरेषां परम् ॥

तस्माद् वल्लभमते चैतन्यमते च भक्तिज्ञानविरागसम्पादनद्वारा परमतत्त्वपुरुषोत्तमप्राप्तावेव श्रीमद्भागवतस्य तात्पर्यं प्रतीयते ॥

—

# वैष्णवदर्शनेषु भक्तिस्वरूपविमर्शः

श्रीराजेन्द्रचन्द्रशर्मा, नवद्वीपस्थसंस्कृतमहाविद्यालयेऽध्यापकः।

परमकारुणिकेन श्रीभगवता नृणां परमनिःश्रेयससाधनीभूतास्त्रयो योगा निरूपिताः। उक्तं हि श्रीभगवता श्रीमद्भागवते एकादशस्कन्धे—

योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कश्चन ॥ इति।

अनेन त्रयाणामेव निःश्रेयससाधनत्वं प्रतिपादितम्। अष्टाङ्गयोगस्तु एतत्त्रयान्तर्गत एव, अतो नोपायानां त्रिविधत्वहानिः। तन्मध्ये कर्मयोगो न साक्षान्निःश्रेयसहेतुः, "नास्त्यकृतः कृतेन", "प्लवा ह्येतेऽदृढा यज्ञरूपाः",

यथादृढैः कर्ममयैः क्रतुभिर्नाम नौनिभैः।
विद्यामान्वीक्षिकीं हित्वा तितीर्षन्ति भवार्णवम् ॥

इत्यादिश्रुतिस्मृतिभिः कर्मणो मोक्षं प्रत्यसाधनत्वप्रतिपादनात्। किन्तु "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिश्रुत्या चित्तशुद्धिद्वारा ज्ञानभक्त्योरुपकारकतया परम्परया एव मोक्षसाधनत्वं कर्मणः। निर्भेदब्रह्मानुसन्धानरूपं ज्ञानञ्च मोक्षसाधनमित्यत्र नास्ति कोऽपि विवादः। तथा भक्तियोगोऽपि मोक्षसाधनतया अङ्गीकृतः, "भक्तिरेवैनं नयति, भक्तिरेवैनं दर्शयति, भक्तिवशः पुरुषो भक्तिरेव भूयसीति", "विज्ञानघनानन्दघनसच्चिदानन्दैकरसे भक्तियोगे तिष्ठति",

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥
भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम्।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात् ॥

इत्यादिश्रुतिस्मृतिभिः।

अद्वयवादिमते "एकमेवाद्वितीयम्", "तत्त्वमसि" इत्यादिश्रुत्यन्यथानुपपत्त्या

सच्चिदानन्दरूपमद्वयमेव ब्रह्म परमार्थं सद् रज्ज्वज्ञानं यथा तत्र सर्पादिकमुद्भावयति, रज्जुरूपाधिष्ठानज्ञानेन च यथा अज्ञाननिवृत्त्या तत् कार्यः सर्पोऽपि निवर्तते, तथा तत्रैवाद्वये ब्रह्मण्यविद्यारोपितो द्वैतप्रपञ्चः पुनर्ब्रह्मज्ञानेन निवर्तते, अधिष्ठानतत्त्वसाक्षात्कारनिवर्तितत्वात् सकार्यभ्रान्तिज्ञानानाम्। एवञ्चाद्वयवादिमतेऽविद्यानिवृत्त्या जीवब्रह्मणोर्भेदापगमेन तयोरैक्यसिद्धौ भक्तिः स्वतो निरस्ता भवति। नहि कश्चित् स्वयमेव स्वं भजते। भेदवादिनां मते—

नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान्।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम्॥
अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः॥
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति॥

इत्यादिश्रुतिभिर्जीवेशयोर्भेदावगमात् तेषां मते भगवत्प्राप्तौ परमोपायीभूता भक्तिरपि सुस्थिरा एव भवेत्।

केवलाद्वयवादिमते च ब्रह्म निःशक्तिममेव, किन्तु द्वैतिभिः "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुत्या ब्रह्मणि स्वाभाविकी नित्या शक्तिरेवाङ्गीक्रियते, अतस्तन्मते शक्तिमदेव परतत्त्वं भवति। किन्तु वैष्णवाचार्याणां मते शक्तिस्वीकारेऽपि शक्तिमदाश्रिता एव शक्तिर्न स्वतन्त्रा, शक्तिशक्तिमतोश्चाभेदात् स्वरूपान्तर्भूता एव शक्तिः। एवं च न एकमेवाद्वितीयमित्यादिश्रुतिप्रतिपादिताद्वयत्वहानिः। एतदभिप्रेत्यैव उक्तं श्रीमता श्रीजीवगोस्वामिपादेन—"अद्वयत्वञ्चास्य स्वयंसिद्धं तादृशातादृशतत्त्वान्तराभावात्, स्वशक्त्येकसहायत्वात्, परमाश्रयं तं विना तासामसिद्धत्वाच्च" इति। जीवलक्षणं तत्त्वान्तरं तादृशं चिद्रूपमपि न स्वयं सिद्धमतस्तादृशातादृशतत्त्वान्तराभावादद्वयत्वं सिद्धम्। एवञ्च एतन्मते जीवेशयोश्चिल्लक्षणाया

जात्या एवाभेदः, स्वरूपतस्तु भेदो वर्तते। अत एवाभेदेन चिन्तयितुमशक्यत्वादभेदः, तौ चानित्यावित्यचिन्त्यभेदाभेदवाद एव श्रीजीवगोस्वामिपादेन स्वीकृतः, एवञ्च न भेदपराणामभेदपराणां वा श्रुतीनां व्याहतिः। किञ्च जीवेशयोर्भेदस्य नित्यत्वे सिद्धे तन्मते भक्तिरपि नित्या एव भवति, अतस्तन्मते मोक्षदशायामपि भक्तिरनुवर्तत एव, उद्धृतञ्च श्रीधरस्वामिपादेन श्रीनृसिंहतापनीभाष्ये उक्तं श्रीशङ्कराचार्यपादानां वचनम्—"मुक्ता अपि लीलया भगवन्तं भजन्ते"। सा च भक्तिर्नित्यापि सत्सङ्गद्वारेण साधकानां हृदये आविर्भवति, अतः सत्सङ्ग एव भक्तेः परमं निदानमिति।

भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः।
सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः॥
नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः।
महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत्॥

इत्यादिश्रीमद्भागवतवचनजातैरवगम्यते। अत्र च यदा सत्सङ्गो भवेत्तदा भवापवर्गो भवेदिति वक्तव्ये वैपरीत्येन निर्देशस्तत्र सत्सङ्गस्यात्यावश्यकहेतुत्वविवक्षयेति मन्तव्यम्। अत्रेदं विवेचनीयम्—यत्र च नोपलभ्यते सत्सङ्गस्तत्राप्याधुनिकः प्राक्तनो वा पारम्परिको वा अनुमेय एव सः, यदि अपराधो वर्तते तदा तद्दोषेण सत्सु निरादराणां तादृशपुरुषाणां तद्दोषशान्त्यर्थं सत्सङ्गस्य भक्तिकरणतायां सतां कृपासाहाय्यमपेक्षते। निरपराधत्वे सति तु तत्सङ्गेनैव जातपरमोत्तमदृष्टीनां तेषां सत्सु मनसोऽवधानाभावेऽपि सत्सङ्गमात्रमेव कारणम्। एवञ्च सत्सङ्गमन्तरेणानादिसिद्धभगवदज्ञानमयतद्वैमुख्यवतां जीवानां भगवदुन्मुखता नैव सम्भवेत्। न च भगवत्कृपैव भक्त्याविर्भावे प्राथमिकं कारणमिति वाच्यम्, कृपारूपश्चेतोविकारो हि परदुःखस्य चेतसि स्पर्शे सत्येव जायते। भगवतस्तु परमानन्दरूपत्वेनापहतकल्मषत्वेन च श्रुतौ जीवविलक्षणत्वसाधनात् तेजोमालिनि सूर्ये तिमिरायोगवत् तस्मिन्नपि तमोमयदुःखस्पर्शासम्भवेन तत्र कृपाया जन्मासम्भवः। भगवत्कृपा तु स एवात्र मम शरणमिति दैन्यात्मिका भक्तिसम्बन्धेनैव जायते, न तु सांसारिकदुःखदर्शनेन। अतः सत्कृपैवावशिष्यते। सन्तोऽपि तदानीं यद्यपि संसारदुःखैर्न स्पृशन्त एव, तथापि लब्धजागराः स्वप्नसुखवत्ते कदाचिदपि स्मरेयुः, अतस्तेषां सांसारिकेऽपि कृपा भवति। यथा श्रीनारदस्य नलकूबरमणिग्रीवयोः।

एवञ्च सत्सङ्गवाहना सत्कृपावाहना वा भक्तिः साधकानां हृदये विकाशं प्राप्नोति। तद्विकाशे च क्रमभेदो वर्तते। तत्र श्रीमद्भागवते प्रथमस्कन्धे श्रीनारदोपवर्णितं स्वचरितमवलम्ब्य श्रीधरस्वामिपादप्रदर्शितोऽयं क्रमो यथा निरूप्यते—प्रथमं महतां सेवा, ततस्तत्कृपा, ततस्तद्धर्मश्रद्धा, ततो भगवत्कथाश्रवणम्, ततो भगवति रतिः, तया च देहद्वयविवेकात्मज्ञानम्, ततो दृढा भक्तिः, ततो भगवत्तत्त्वज्ञानम्, ततस्तत्कृपया सर्वज्ञत्वादिभगवद्गुणाविर्भाव इति। तत्र श्रीमधुसूदनसरस्वतीपादेन श्रीधरस्वामिपादानां क्रम एव प्रायो गृहीतः। तथा ह्युक्तं तेन तदीये भक्तिरसायनग्रन्थे—

प्रथमं महतां सेवा तद्दयापात्रता ततः।
श्रद्धाथ तेषां धर्मेषु ततो हरिगुणश्रुतिः॥
ततो रत्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः।
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः॥
भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता।
प्रेम्णोऽतः परमा काष्ठेत्युदिता भक्तिभूमिका॥

एष एव क्रमः श्रीमद्रूपगोस्वामिचरणानुसारिणा श्रीमद्विश्वनाथचक्रवर्त्तिपादेन किञ्चिद्विलक्षणतयोपवर्णितः। तथा हि—

सतां कृपा महत्सेवा श्रद्धा गुरुपदाश्रयः।
भजनेषु स्पृहा भक्तिरनर्थापगमस्ततः॥
निष्ठा रुचिरथासक्ती रतिः प्रेमाथ दर्शनम्।
हरेर्माधुर्यानुभव इत्यर्थास्युश्चतुर्दश॥ इति।

भजधातोर्भावे क्तिन्प्रत्ययेन भक्तिरिति पदं सिद्धम्, तस्यास्तटस्थलक्षणं स्वरूपलक्षणञ्च गरुडपुराणे—

विष्णुभक्तिं प्रवक्ष्यामि यया सर्वमवाप्यते।
यथा भक्त्या हरिस्तुष्येत्तथा नान्येन केनचित्॥
भज इत्येष वै धातुः सेवायां परिकीर्तितः।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी॥ इति।

अत्र "यया सर्वमवाप्यते" इति तटस्थलक्षणम्। द्वितीयश्लोके च सेवाशब्देन स्वरूपलक्षणम्। पितृभक्तिर्मातृभक्तिः पतिभक्तिरित्यादिकापि भक्तिरेव, किन्तु न पारमार्थिकी। तासां चापारमार्थिकं नश्वरं न्यूनमेव फलम्।

देवान् देवयजो यान्ति पितॄन् यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्‌याजिनोऽपि माम्॥

इतिश्रीभगवदुक्तेर्न तत्फलं परमं चरमं वा, अतस्ताः पित्रादिभक्तयो न मुख्यतो भक्तिपदेनाभिहिताः। तर्हि किं नाम भक्तिरित्याकाङ्क्षायामाह श्रीगोपालतापनीश्रुतिः—"भक्तिरस्य भजनम्, तदिहामुत्रोपाधिनैरास्येनामुस्मिन् मनः कल्पनम्, एतदेव नैष्कर्म्यम्" इति। अस्य भगवतो भजनं भक्तिरिति। यथाकथञ्चित् सम्पदादिलाभेच्छया भगवद्‌भजनमपि भक्तिरेव, किन्तु सा सकामा एव न निष्कामा। सकामा भक्तिश्च सगुणैव। सा च एकाशीतिप्रकारा श्रीमद्भागवते तृतीयस्कन्धे श्रीकपिलदेवहूतिसंवादादवगम्यते। तत्र च मोक्षकामनयापि या भक्तिः, सा हि सात्त्विकी श्रेष्ठा सगुणैव स्यान्न निर्गुणा। उक्तञ्च श्रीधरस्वामिभिः "धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्" इत्यादिश्रीमद्भागवतीयद्वितीयपद्यव्याख्याने—"प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः" इति। एवञ्च भक्तिरस्य भजनमित्यत्र लक्षणे उक्तम्—इहामुत्रोपाधिनैरास्येनामुस्मिन् मनः कल्पनमिति। अर्थश्च—अस्य श्रीकृष्णस्यानुकूल्येन श्रवणादिका भक्तिर्भजनम्, तथामुस्मिन् भगवति चित्तानुरञ्जनञ्च, मनः कल्प्यतेऽनुरज्यतेऽर्प्यतेऽनेनेति निरुक्तेः। तादृशश्रवणादिहेतुकभाव इत्यर्थः। निर्गुणत्वसिद्धये आह—तदिहामुत्रोपाधिनैरास्येनेति, कृष्णान्यफलाभिलाषराहित्येन तन्मात्रस्पृहया जायमानमित्यर्थः। एतदेव च नैष्कर्म्यमानुषङ्गेन मोक्षकरमित्यर्थः। एषा एव भक्तिरनन्याख्ययाभिहिता भवति। सकामेषु भक्तियोगेषु फले एवानुरागो न तु विष्णौ, फलालाभेन भक्तित्यागात्। शतपथश्रुतावपि—

"स होवाच याज्ञवल्क्यस्तत्पुमानात्महिताय प्रेम्णा हरिं भजेत्" इति।

प्रेम्णा प्रीतिमात्रकामनया यदात्महितं तस्मै इत्यर्थः। शाण्डिल्यभक्तिसूत्रे च—"सा परानुरक्तिरीश्वरे" इति लक्षणम्। अत्रापि निष्कामैव भक्तिरभिधीयते। देवहूतिमातृकेण भगवता श्रीकपिलदेवेन चोक्तं भक्तिलक्षणम्—

मद्‌गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥
सालोक्यसार्ष्टिसारूप्यसामीप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ इति ।

अन्यत्र च तेनैवोक्तम्—

देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ इति ।

सर्वत्रैवानन्यभक्तेरेव लक्षणमभिहितम् । श्रीकपिलदेवप्रोक्तलक्षणमनुसृत्य श्रीमधुसूदनसरस्वतीपादेनोक्तं भक्तिलक्षणम्—

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥ इति ।

तन्मते तु प्रातिकूल्यस्यापि भक्तित्वमङ्गीकृतम् । तदुक्तिश्च—"भगवद्धर्मश्च भगवद्‌गुणश्रवणं न तु धर्मबुद्ध्या तदनुष्ठानपर्यन्तमपेक्षितम् । "तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्" इत्यत्रापि "केनाप्युपायेनेति" धर्मबुद्ध्यानुष्ठितेनायत्नसिद्धेन वा भगवद्‌गुणश्रवणेनेत्यर्थः, तेन शिशुपालादौ नाव्याप्तिः" इति । अत्र च न सम्मतिः श्रीमद्‌रूपगोस्वामिचरणानाम्, निरुक्तश्रीगोपालतापन्याद्युक्तलक्षणानुसारि च तदुक्तलक्षणम्—

अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥ इति ।

अत्र च आनुकूल्येन कृष्णानुशीलनमित्यनेन प्रातिकूल्ये भक्तित्वाप्रसिद्धेर्भंजनप्रतिकूलमयभावे भक्तित्वमत्यन्तमसङ्गतमेवेति मन्तव्यम् । भक्तिश्चैषा—

क्लेशघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा ।
सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षिणी च सा ॥

इति गुणषट्कयुता परमानन्दमपि भगवन्तमत्यर्थं प्रीणयति। ननु निरतिशयनित्यानन्दस्य भगवतः कथं तया सुखमुत्पद्यते, निरतिशयत्वनित्यत्वयोर्विरोधादिति चेन्न, शास्त्रे खलु निरतिशयानन्दत्वं नित्यत्वञ्च भगवतः श्रूयते। भक्तेरपि तत्प्रीतिहेतुत्वं श्रूयते, तत एवं गम्यते तस्य परमानन्दैकरूपस्य स्वरूपानन्दिनी स्वरूपशक्तिर्या ह्लादिनी नाम्नी वर्त्तते, प्रकाशवस्तुनः स्वपरप्रकाशनशक्तिवत् तत्परमवृत्तिरूपैषा भक्तिः। ताञ्च भगवान् स्ववृन्दे निक्षिपन्नेव नित्यं वर्तते, तत्सम्बन्धेन च स्वयमतितरां प्रीणातीति भगवत्प्रीणनहेतुत्वादेव न सा भक्तिः प्राकृतसत्त्वमयज्ञानानन्दरूपा भगवतो मायावश्यत्वाश्रवणात् स्वतःपूर्णत्वाच्च। अपूर्णो हि जीवः प्राकृतं ज्ञानानन्दमिच्छति, तदर्थमुद्यतते च। नापि भगवज्ज्ञानानन्दरूपा, तथा आनन्दरूपस्य भगवतोऽतिशयासिद्धेः। नापि जैवज्ञानानन्दरूपा, जैवयोर्ज्ञानानन्दयोः क्षोदिष्ठत्वात्। अतः स्वरूपशक्तिवृत्तिरूपैवैषा भक्तिरिति मन्तव्यम्। अत एव तस्य प्रीतिरूपस्यापि भगवतो भक्त्या प्रीणनीयत्वमाह श्रीमद्भागवतम्—

यत्प्रीणनाद् बर्हिषि देवतिर्यङ्मनुष्यवीरुत्तृणमाविरिञ्च्यात्।
प्रीयेत सद्यः स हि विश्वबीजः प्रीतिः स्वयं प्रीतिमगाद् गयस्य॥ इति।

परमतत्त्वसाक्षात्कारात्मकस्य मोक्षस्य परमपुरुषार्थत्वं श्रीशङ्कराचार्यपादादीनामभिमतम्। अतस्तन्मते कैवल्यादिलक्षणमोक्ष एव परमप्रयोजनम्। वैष्णवाचार्याणां मतेऽपि भगवत्साक्षात्कारमात्रस्यापि यद्यपि पुरुषप्रयोजनत्वम्, तथापि तस्मिन्नपि साक्षात्कारे निरुपाधिप्रीत्यास्पदत्वस्वभावस्य प्रियत्वधर्मानुभवविना साक्षात्कारोऽप्यसाक्षात्कार एव, माधुर्यं विना दुष्टजिह्वया श्रीखण्डस्येव। अतस्तन्मते प्रीतिमयी सेवा एव परमपुरुषार्थत्वेनाभिमता, सेवासुखानुभविनां बहुशो मोक्षानादरश्रवणात्। तथा हि श्रीमद्भागवते तृतीयस्कन्धे श्रीमदुद्धववचनम्—

कोऽन्वीशते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह।
तथापि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणोत्सुकः॥ इति।

हयशीर्षपञ्चरात्रे च—

न धर्मं काममर्थं वा मोक्षं वा वरदेश्वर।
प्रार्थये तव पादाब्जे दास्यमेवाभिकामये॥

किञ्च, दुःखहानिः सुखावाप्तिश्च पुरुषार्थ इत्येके, सुखावाप्तिमात्रमित्यपरे, तदुभयं तु सेवासाधनेऽपि दृश्यते। तत्राद्यं यथा श्रीमद्भागवते—

"अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः" इति।

द्वितीयञ्च यथा तत्रैव—

एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः।
अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः॥ इति।

अत एवोक्तं पञ्चमस्कन्धे—"मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः" इति। "धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्" इत्यादिपद्यव्याख्याने प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः" इत्युक्तवता श्रीधरस्वामिपादेन तदेव च वक्तव्यम्। अत्र भगवद्धर्मे मोक्षाभिसन्धिरपि कैतवम्, तात्पर्यान्तरादित्यर्थः। भगवत्स्वरूपशक्तिवृत्तिरूपा चेयं प्रीतिर्नित्यापि भगवदेकशरणस्य परमार्त्तस्य हृदये स्वत एवाविर्भूय ममत्वातिशयेन नितरां पुष्टा भवति। साधकस्य हृदये तस्याविर्भाव एव जन्म। तल्लक्षणञ्चोक्तं श्रीमता रूपगोस्वामिचरणेन—

सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते॥ इति।

तथा ह्युक्तम्—

अनन्यममता विष्णौ ममता प्रेमसङ्गता।
भक्तिरित्युच्यते भीष्म प्रह्लादोद्धवनारदैः॥ इति।

निरुक्तो भाव एव सान्द्रात्मा निबिडस्वरूपः प्रथमदशापेक्षया परमानन्दोत्कर्षं प्राप्तः सन्निति यावत्, प्रेमा भवतीत्यर्थः। भावश्चैवम्—

शुद्धसत्त्वविशेषात्मा प्रेमसूर्यांशुसाम्यभाक्।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते॥ इति।

अत्र शुद्धसत्त्वं नाम भगवतः स्वप्रकाशिकायाः स्वरूपशक्तेः संविदाख्या वृत्तिः। एवञ्चार्थः—कृष्णस्य स्वरूपशक्तिरूपशुद्धसत्त्वविशेषो यः स एवात्मा तन्नित्यप्रियजनाधिष्ठानकतया नित्यसिद्धं स्वरूपं यस्य सः, किञ्च रुचिभिः प्राप्त्यभिलाषस्वकर्तृकानुकूल्याभिलाष-सौहार्दाभिलाषैश्चित्तस्य मासृण्यकृदार्द्रताकृदित्यर्थः। "प्रेमसूर्यांशुसाम्यभाक्" प्रेम्णः प्रथमच्छविरूप इत्यर्थः। दृष्टान्तोऽयं न सर्वांशेन, तथा

चोत्तरकाले किरणस्य न सूर्यरूपत्वम्, भावस्य तूत्तरकाले प्रेमरूपत्वेऽपि न क्षतिः। यतः प्रेमलक्षणे उक्तम्—

"भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते" इति।

प्रेमामरतरोर्भावरूपेऽङ्कुरे जाते एव—

"क्षान्तिरव्यर्थकालत्वं विरक्तिर्मानशून्यता।
आशाबन्धः समुत्कण्ठा नामगाने सदा रुचिः॥
आसक्तिः सद्गुणाख्याने प्रीतिस्तद्वसतिस्थले।
इत्यादयोऽनुभावाः स्युः"

इत्यनेनैव भावस्य परिचयो लभ्यते। अयमेव भावः प्रेमा स्यात्। स एव गौडीयवैष्णवानां परमपुरुषार्थ इत्यलं विस्तरेण॥

———

# वैष्णवदर्शनेषु भक्तिस्वरूपविमर्शः

श्रीश्यामसुन्दरझा, दरभंगास्थरमेश्वरलता सं०म०दर्शनाध्यापकः।

(संक्षेपः)

कलौ भक्तिरेव साधनम्। सा श्रवणादिरूपेण नवधा। सा सर्वाधिकारा, "अपि चेत् सुदुराचारः", "मां हि पार्थ व्यपाश्रित्य" इति भगवद्वचनात्। माहात्म्यज्ञानपूर्वक-सुदृढस्नेहो भक्तिः। "सा परमप्रेमरूपा", "सा परानुरक्तिरीश्वरे" इति नारद-शाण्डिल्यसूत्रे। स्नेहो ज्ञानादिच्छातश्चातिरिक्तः पदार्थः। इयं भक्तिर्गौण-मुख्यभेदेन परापरभेदेन साध्यसाधनभेदेन सात्त्विकादिभेदेन च बहुधा भिन्ना। अस्या एकादशभूमिका भगवद्भक्तिरसायने प्रतिपादिताः।

अथात्र वैष्णवमतानि संगृह्यन्ते। अङ्कननामकरणभजनरूपा सेवैव स्नेहरूपा भक्तिर्मुक्तिप्रदेति माध्वाः। "मनोगतिरविच्छिन्ना हरिप्रेमपरिप्लुता। अभिसन्धि-विनिर्मुक्ता भक्तिर्विष्णुवशंकरी॥" इति श्रीनिम्बार्कमतानुयायिनः। भगवदनुग्रहजन्या सद्गुरुप्रत्तमन्त्रानुसारेण आत्मामीयस्य भगवत्समर्पणोत्तरं भगवद्गुणानुसन्धानजो रसरूपभगवद्विषयकप्रेमरूपो भक्तिरस एव परमा भक्तिः। "रसरूपः परात्मास्ति रसो वै स इति श्रुतेः। तादृशी च परा भक्तिस्तया मुक्तिर्न दुर्लभा॥" इति श्रीवल्लभसम्प्रदायानुया-यिनः। रामानुजीयास्त्वभिगमनोपादानेज्यास्वाध्याययोगरूपकालपञ्चकविभक्तधर्मा-नुष्ठानेन शास्त्रजन्यपरावरात्मज्ञानसंस्कृतेन शुद्धे चेतसि जायमानमहरहरभ्यासाधेया-तिशयं स्वयमत्यर्थप्रीतिरूपं दर्शनसमानाकारं तैलधारावदविच्छिन्ननिरन्तरस्मरणमेव भक्तिः, तया मुक्तिरित्याचक्षते॥

# विशिष्टाद्वैतेऽपि विशिष्टब्रह्माद्वैतत्वम्

श्रीकृष्णवल्लभाचार्यस्वामिनारायणः पश्चिमकाशीजामनगरस्थः ।

"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति किन्त्वात्मनः कामाय सर्वं प्रियं भवति" इत्येवं प्रतिपादितेन स्वात्मकात्माऽपारोक्ष्येण येन केनाभिमतेन रूपेण व्यवस्थितो विदितोऽपि परिच्छिन्नो नैवं सर्वत्वाविनाभावतां भजन्नवशेषाऽशिष्टप्रियताभवनतां पारयितुं प्रभवेदिति व्यापकमेकं तत्त्वं सर्वात्मकं सर्वप्रियाऽनुभावकं सर्वाऽपृथक्सिद्धाऽनुस्यूतमपरिच्छिन्नं व्यतिरेकि सदप्यन्वयि चोभयथा वा यथासंभवतत्त्वात्मकमासञ्जनीयमिति तदर्थं यावन्तश्चार्थवादा प्रवर्तन्ते, अत्रार्थे श्रुतिर्मुख्यं प्रमाणमिति "सन्मूलाः सौम्येमाः प्रजाः", "यतो वेमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति", "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" इत्यादिभिः सदेवाग्रे परतो मध्येऽपि च यदास्थेयं तत् किमपि किमिति नामरूपावच्छिन्नमित्यत्र यथाधीप्रसरं बहुभिर्बहुधा प्रतिपादितम् । एकमेवाऽद्वितीयं ब्रह्मेत्येवं नित्यविज्ञानात्मकब्रह्ममात्रवादिनां नामरूपविभागापादकेऽविद्यातत्त्वे समुपाधिरूपे पूर्वप्रसक्तेऽद्वैतहानिर्मायाया आत्मनां च नित्यत्व-बहुत्व-प्रतिपादकश्रुतिविरोधो दृश्यमानानां मिथ्यात्वे प्रत्यक्षविरोधश्चात्यन्तविजातीयसदसतोस्तादात्म्यानुपपत्तिश्चेत्याद्यस्वारस्यमभिमन्वानानामन्येषां क्षणिकविज्ञानात्मकं क्षणिकं सदिति मूलं सहोपलम्भनियमाभिस्पृष्टं व्यापकं सर्वात्मकं तत्त्वमेकमेवेति समभिमतम् । किन्तु तेषामपि प्रवाहिणां क्षणिकत्वेऽपि प्रवाहाणां चिरायित्वेऽनादित्वे नित्यत्वे वा त एवाऽऽत्मदशापन्ना व्यापकाः प्रवाहात्मकाः सर्वेषु समसंख्याका आपतिता इति तद्वद् यावत्प्रवाहगतप्रवाहोऽप्येक एव समापतित इति ब्रह्मदशापन्नः सः पूर्ववादिमतान्नात्राधिकः कश्चिद्विजयो दोषान्तरग्रामश्च तदवस्थ एवेति तत्रास्वारस्यमनुभवतामन्येषां नित्याया मायाया एव प्रजामूलत्वं बद्धत्वं मुक्तत्वं व्यापकत्वं प्रकाशादिमत्त्वं चेति सत्कार्यात्मकत्वं धर्मलक्षणावस्थाभेदभिन्नायास्तस्या एव बहुधात्वमित्येवं सामञ्जस्येऽपि तदीयांशांशे दुःखमोहमात्रात्मके सर्वत्र प्रियतानुभवितृव्याहतेस्तादृशात्मतत्त्वमभिमन्तव्यं भवतीति तदैक्ये पूर्ववद्दोषवृष्टिस्तद्बहुत्वे मायालिप्तालिप्तत्वव्यवस्थाकृतमर्थाद् ब्रह्मतत्त्वमीश्वरतत्त्वं बद्धीश्वरमतं चाऽऽ-

पतितं भवतीति तेन नियामकबहुत्वेन जगदव्यवस्था प्रसक्ता भवेदिति त्वत्तुष्टिमनुभवतामाचार्याणां शारीरकं कार्यमवस्थान्तरयोगेन सन्मूलकं सदायतनं सत्प्रतिष्ठमिति विशिष्टतत्त्ववादिनां नाऽऽविद्यको विरोधो न वा सान्तानिको रोधो न वेशानैक्यमूलका व्यवस्थेति विशिष्टाद्वैतं श्रुतिस्मृतितर्कप्रमाणादिसर्वसहं सुसमञ्जसं तत्त्वमपृथक्सिद्धसूक्ष्मस्थूलचिदचित्तनुकमेकमेवाऽद्वितीयं ब्रह्मेति निरवद्यं सम्मतम् ।

## जीवात्मानः

अथात्र जीवात्मानः, माया, ईश्वराः, ब्रह्म, परब्रह्मेति पञ्चतत्त्वानि स्वरूपतो भिन्नानि श्रुतिस्मृत्यादिभिः प्रतिपादितानि। तत्र जीवात्मानः—"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", "सर्वे आत्मानः समर्पिताः", "अपरिमिता ध्रुवाः" इत्यादिश्रुतिस्मृतिसिद्धा जीवात्मानो बद्धात्मानोऽनन्ता आशिखादानखाग्रं ज्ञानशक्त्या देहेषु प्रविष्टा अजा नित्याः शाश्वता निरंशकाः स्वप्रकाशा अपरिमिता ध्रुवाः सनातना अचलाः स्वतोऽनवयवा अनादिनो देहेन्द्रियाऽन्तःकरणादिभिन्नाश्चिद्रूपा ज्ञानघना इति सर्वैः प्रमाणीकृता भवन्तीति जीवतत्त्वं ज्ञानघनात्मकं सार्वदिकं व्यवस्थितम्। ज्ञानघनत्वमेषां तत्त्वान्तरताप्रयोजकम् ।

## माया

अथ माया—"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः", "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्", "इन्द्रो मायाभिः पुरुरूप ईयते", "गौरनाद्यन्तवती सा जनयित्री भूतभाविनी सिताऽसिता च रक्ता च", "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्" इत्यादिश्रुतिप्रतिपाद्या गुणमयी जडापि संसरिष्यमाणचिद्गर्भतया चिदात्मिका स्वाभिमानिदेवताधिष्ठिता विविधाश्चर्यकारिणी व्यक्ताव्यक्तस्वरूपानाद्यविद्याऽऽवृतजीवात्मनां देहधारणादिप्रादुर्भावार्थं केदाररूपा ध्रुवा परमात्मशक्तिरूपा ब्रह्मकिरणच्छायानिभा कार्यकारणात्मकस्थूलसूक्ष्मलक्षणसदसद्रूपा विविधाश्चर्यकारिणी नित्यतत्त्वरूपा भवतीत्यस्यास्तमोघनत्वमेव तत्त्वान्तरताप्रयोजकम् ।

## ईश्वराः

अथेश्वरा अपि—"तमीश्वराणां परमं महेश्वरम्", "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्", "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति", 'क्लेशकर्मविपाकाशयैरपरामृष्टः

पुरुषविशेष ईश्वरः", "प्रधानपुरुषेश्वराः", "यज्ञेन यज्ञमयजन्त देवाः ( नित्यमुक्ताख्येश्वगाः ) तानि धर्माणि प्रथमानि ( उत्कृष्टभागवतनिर्गुणधर्माणि ) आसन् । ते ह नाकं (ब्रह्मपदात्मकं) महिमानः (मुक्तेश्वराः) सचन्त ( श्रितवन्तः ) यत्र ( ब्रह्मधामनि ) पूर्वे (अनादिनो ब्रह्मपरब्रह्मसमानकालिनः) साध्याः सन्ति देवाः (नित्यदिव्यमुक्ता वसन्ति)॥" इत्यादिश्रुतिस्मृतिसूत्रैः प्रतिपाद्यन्ते । एते दिव्यैश्वर्यघना ब्रह्मपदस्थपुरुषा नित्यपार्षदा अनन्ता विद्यन्ते । तथाव्याकृतसूत्रात्मविराडाख्येष्वव्यक्तमहदहङ्कारतन्मात्रेन्द्रियभूतादिसमुदायविशेषात्मकाण्डलक्षणदेहेषु ते व्यापका जगतामुत्पत्तिस्थितिलयाद्यभिज्ञताद्यैश्वर्यघनाः सृष्ट्यधिष्ठातारो ब्रह्मविष्णुमहेशहिरण्यगर्भभूमपुरुषमहाविष्णुरुद्रसंकर्षणानिरुद्धप्रद्युम्नप्रधानपुरुषप्रकृतिपुरुषमहत्तत्त्वाद्यधिदेवताद्या अपि सर्वे ईश्वरा एव भवन्ति, तथैवेश्वरवत्कार्यकारिणश्चैतन्यधर्मिणो नित्यचमत्कारा नित्यगुणा नित्यविभूतयो नित्यभूमयो नित्यायुधानि नित्यशृङ्गाराणि चेतनात्मकानि समग्रैश्वर्यभूमिकाश्चेश्वराकृतय ईश्वरा इत्युच्यन्ते । एतेषामवस्थान्तरयोगादावपि नेश्वरत्वविमर्द इति भवत्येषामैश्वर्यघनत्वमेवेश्वरत्वप्रयोजकम् । ततस्तत्त्वान्तरमीश्वरतत्त्वम् । ननु मुक्तानां ब्रह्मत्वमस्तु कथमीश्वरत्वमिति चेन्न, निजात्मानं ब्रह्मरूपं विभाव्येति विधेर्ब्रह्मणो ब्रह्मरूपत्वविधापननिरर्थकत्वाद् ब्रह्मेतरेषां तद्विधेयोग्यत्वाद् जीवभिन्नानां तेषामीश्वरत्वं युक्तमेव । तेषां निर्गुणैश्वर्यशालित्वं युज्यत एव । ननु तथाप्यैश्वर्यज्ञानविभूत्यायुधादीनां जडानां कथमीश्वरत्वमिति चेन्न, तेषां चेतनरूपाणां तत्तदाकृतिभिर्व्यवस्थितानां नित्यज्ञानवच्चेतनानां चैतन्यस्वभावानामीश्वरत्वं सगुणेश्वरत्वं निर्गुणेश्वरत्वं वाप्यविरुद्धमेव । अत एव—"सुदर्शनांशाच्छत्रुघ्नः संजज्ञेऽमितविक्रमः", "कैकेय्यां भरतो जज्ञे पाञ्चजन्यसमुद्भवः", "अनन्तांशेन संभूतो लक्ष्मणः परवीरहा" इत्यादिभिः शत्रुघ्नस्य सहस्राजुनस्य च विष्णुसुदर्शनचक्रावतारत्वादिपरकः पद्मपुराणे वेदव्यासलेखोऽपि संगच्छते । एवं भारत्यवतारः सरस्वती भगवत्प्रसन्नतात्मको धर्मो भगवत्संकल्पात्मको महाकाल इत्यादिप्रकरणान्यपि संगच्छन्ते ।

## ब्रह्म

अथ ब्रह्म—"यदक्षरं वेदविदो वदन्ति", "तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्", "विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः", "अपहतपाप्मा ह्येष ब्रह्मलोकः", "यस्मिन्

लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म", "लङ्घ्यन्तेऽन्तर्गताश्चान्ये कोटिशो ह्यण्ड-राशयः। तदाहुरक्षरं ब्रह्म", "ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि॥" "ब्रह्मज्योतिः सनातनम्", "यस्य भासा सर्वमिदं विभाति", "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम", "विरजो ह्येष ब्रह्म-लोकः", "यद्विपश्यन्ति मुनयो गुणापाये समाहिताः" इत्यादिश्रुतिस्मृतिबोधितं स्वरूपतः स्वभावतश्चैकरूपत्वेन सत्यमक्षरणत्वेनाऽक्षरमजडत्वेनासंकुचितज्ञानत्वेन ज्ञानं जीव-मायेश्वराणां व्यापकं प्रेरकं चान्तर्निहितं साक्षितया स्थितं परमाधारं सृष्टिप्रावि-र्भावाऽवनतिरोभावभूमिरूपं देशादिपरिच्छेदरहितं निरवयवं प्रकाशघनं ब्रह्मलोका-त्मकधामरूपेण वर्तमानं भूमरूपममूर्तं ब्रह्मापि लीलाधृतदिव्याकृतिरूपेण परब्रह्मसेवार्थं मूर्तं नित्यमविकारि मायाया व्यक्तावस्थापादकं परब्रह्माधिष्ठितत्वाद् बृहत्वाच्च ब्रह्मेति तत्त्वान्तरं सर्वदा व्यवस्थितम्।

केनोपनिषदि वाङ्मनश्चक्षुरादीनामभिद्योतकं व्यापकं चाक्षरं ब्रह्मैव, अग्नि-वाय्विन्द्रादौ बलाधायकमपि चोक्तम्।

कठोपनिषदि— "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्" इत्यनेनाक्षरं ब्रह्मैव प्रतिपादितम्। अग्रेऽपि—"यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि" इत्यत्राऽक्षरब्रह्मलोकस्य पदशब्देन कथितत्वात्। ततश्च —"एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्। एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥", "एतदा-लम्बनं ज्ञात्वा ब्रह्मलोके महीयते", "यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्" इत्यादिभि-रक्षरं ब्रह्मैव प्रतिपादितम्। अग्रेऽपि—"अस्पर्शमशब्दम्" इत्यादिना ब्रह्मज्ञानोत्तरं "मेधावी ब्रह्मलोके महीयते", "तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते", "तस्मिन् लोका निहिताः सर्वे" इत्यादिभिरक्षरामृतपदप्राप्तिरुक्ता। "एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च" इत्यनेनाक्षरं ब्रह्म व्यापकमुक्तम्। "न तत्र सूर्यो भाति", "तस्य भासा सर्वमिदं विभाति" इत्यादिभिरक्षरं ब्रह्मैव सुप्रकाशमानं प्रदर्शितम्। एवं तत्र "अत्र ब्रह्म समश्नुते" इत्यनेनाक्षरब्रह्मानुभवोऽभिहित इति।

प्रश्नोपनिषदि च—"सुकेशा भारद्वाजादयो हैते ब्रह्मपरा ब्रह्मनिष्ठाः परब्रह्मान्वेष-माणाः पिप्पलादमुपसन्नाः" इत्यनेनाक्षरब्रह्मपराणां तेषां परब्रह्मान्वेषणपरत्वप्रति-पादनेन ब्रह्मणः परब्रह्मतोऽतिरिक्तता प्रतिपादिता। "तेषामयं ब्रह्मलोको येषु सत्यं

प्रतिष्ठितम्" इति ब्रह्मलोकपदेनाक्षरं पदं प्रतिपादितम्। "यजमानमहरहर्ब्रह्म गमयति" इत्यनेनाप्यक्षरं ब्रह्म प्रतिपादितम्। "एष हि द्रष्टा स्प्रष्टा विज्ञानात्मा पुरुषः स परेऽक्षरे आत्मनि सम्प्रतिष्ठते" इत्यनेन जीवात्मनोऽक्षरे ब्रह्मणि प्रतिष्ठानं प्रतिपादितम्। "परमेवाक्षरं प्रतिपद्यते यो ह शुभ्रमक्षरं वेदयते" इत्यनेनाक्षरब्रह्मणो वेदनेनाक्षरपदप्राप्तिरभिहिता। "एतद्वै सत्यकाम परं चाऽपरं च ब्रह्म यदोङ्कारः" इत्यनेनापरं ब्रह्माऽक्षरं ब्रह्म, परं ब्रह्म पुरुषोत्तम इति प्रतिपादितम्। "स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इत्यनेन जीवात्परमक्षरं ततः परं पुरुषं पुरुषोत्तममीक्षते इत्यभिहितम्।

मुण्डकोपनिषदि—"परा यथा तदक्षरमधिगम्यते", "तथाऽक्षरात् संभवतीह विश्वम्", "यः सर्वज्ञः स सर्वविद् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपं च जायते॥" इत्यादिभिः सर्वज्ञात्परमात्मनोऽक्षरं ब्रह्म नाम रूपं च स्थौल्यमापद्यत इत्यभिहितम्। "येनाक्षरं पुरुषं वेद", "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः॥" इत्यनेन मायादिभ्यः परं यद् ब्रह्माऽक्षरं तत्परो दिव्यः पुरुषः परमात्मा वर्णितः। "यदर्चिमदणुभ्योऽणु यस्मिँल्लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म" इत्यनेनाऽक्षरं सृष्टयाधारं वर्णितम्। "यः सर्वज्ञः सः सर्वविद् यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः॥" इत्यनेन परमात्मनोऽक्षरब्रह्मणि प्रावस्थितिरुक्ता। "तस्य भासा सर्वमिदं विभाति", "ब्रह्मैवेदं विश्वं वरिष्ठम्" इत्यादिभिरक्षरं प्रकाशकं प्रकाशघनं विश्वशरीरकं चाभिहितम्। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते", "समाने वृक्षे पुरुषो निमग्नः", "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इत्यादिभिरात्मनः साक्षिणमाश्रितस्य मोहत्यागोत्तरं दिव्यनेत्रस्य पुरुषोत्तमदर्शनजन्याऽपहतपात्मत्वादिरूपाऽक्षरब्रह्मसाम्यता परब्रह्माऽवाप्तिश्चाऽभिहिता। "स वेदैतत परमं ब्रह्म धाम", "उपासते पुरुषं ये" इत्यादिभिर्ब्रह्मधामज्ञानवान् यस्तस्य पुरुषोत्तमोपासनायां विवर्धमानायां तत्र पुरुषोत्तमफलप्राप्तिः प्रतिपाद्यते। "यमेव एष वृणुते तेन लभ्यः" इत्यनेन श्रीपुरुषोत्तमकृपया पुरुषोत्तमः प्राप्यते, तदानीं "एतैरुपायैर्यतते यः स विशते ब्रह्मधाम" इति ब्रह्मलोकप्राप्तिर्दर्शिता। "ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे", "परात्परं पुरुषमुपैति दिव्यम्", "ब्रह्मवेद ब्रह्मैव भवति" इत्यादिभिः पुरुषोत्तमोपासनया ब्रह्मभावावाप्तिः प्रदर्शिता।

ऐतरेयोपनिषदि—"आत्मा वा इदमेक एवाऽग्र आसीत्", "स ईक्षत लोकान्नु सृजा इति", "स इमान् लोकानसृजत", "स एतमेव पुरुषं ब्रह्म ततमपश्यत्" इत्यादिभिः श्रीपुरुषोत्तमेनैकेन प्रेरितं ब्रह्माऽक्षरं व्यापकं प्रतिपाद्यते।

भृगुवल्ल्युपनिषदि—"यतो वेमानि भूतानि जायन्ते तद् ब्रह्म", "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिभिरक्षरब्रह्मणि कारणताऽऽनन्दात्मकता च दर्शिता।

बृहदारण्यके—'स अकामयत द्वितीयो मे आत्मा जायेतेति", "आत्मैवेदमग्र आसीत् पुरुषविधः", "एकाकी न रमते स द्वितीयमैच्छत्" इत्यादिभिः श्रीपुरुषोत्तमं निरूप्य, ततः—"ब्रह्म वा इदमग्र आसीत्", "ब्रह्म एतद्धि सर्वाणि रूपाणि बिभर्ति" इत्यादिभिरक्षरब्रह्मणः सर्वरूपाणि शरीराणि प्रतिपादितानि। ततश्च "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवाऽमूर्तं च" इति श्रुत्याक्षरब्रह्मणो धामरूपता मूर्तिरूपता च प्रतिपादिता। तत्र ब्रह्मण्यक्षरे "सर्व एते आत्मानः समर्पिताः" इत्यनेन सर्वेषां जीवेश्वरमायादीनां निलयनात्मकसमर्पणं दर्शितम्, तथैव—"कस्मिन्नु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति, कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि माऽतिप्राक्षीः" इत्यादिभिः सर्वलोकानामक्षरे ब्रह्मण्योतप्रोततां प्रदर्श्य ब्रह्मलोकानामोतप्रोततां च परब्रह्मणि विद्यमानामपि प्रश्नविषयिणीं कर्तुममना अत्यन्तिमं प्रश्नं मुनिर्निषेधितवानित्यनेन ब्रह्मैव वाग्विषयम्, परब्रह्म तु वाचामगोचरमिति व्यतिरेकिता परब्रह्मणो दर्शिता। "यः पृथिव्यां तिष्ठन्" इत्यारभ्याधिभूताधिदैवाध्यात्मान्तर्यामिस्वरूपम् "एष त आत्माऽन्तर्याम्यमृतः" इत्यन्तेन परमेशमभिधाय परमेशस्याक्षरेऽप्यन्तर्यामितां शरीरितां प्रोच्य "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च", "तद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इत्यादिभिरक्षरं ब्रह्मैवोतप्रोताश्रयमिति व्यापकतापि परमेशस्यैवाक्षरब्रह्मणोऽपि तदाश्रिततत्त्वेषु प्रदर्श्यते। ततः "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभिरक्षरब्रह्मण एव सूर्यादौ प्रशासनं विधारणं व्यापकत्वं च प्रवर्ण्यते, "वेद वाऽहं तं पुरुषं सर्वस्याऽऽत्मनः परायणम्" इत्यनेन च सर्वस्य आत्मत्वेनाक्षरब्रह्माभिधाय तस्याक्षरब्रह्मणोऽपि परायणं परब्रह्मेति, "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यनेन च पुरुषोत्तम एव प्रश्नविषयो दर्शितः, "विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्", "वाग्वै परमं ब्रह्म", "प्राणो वै परमं ब्रह्म", "आत्मा वै अस्य ज्योतिर्भवति", "पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन

वेद" इत्यादिभिर्जीवात्मपरिष्वक्ताऽक्षरब्रह्मात्मकज्योतिर्घनप्राज्ञविदः परायणं परब्रह्म प्राप्यतया प्रतिपादितम्। "अद्वैतो भवत्येष ब्रह्मलोकः", "अस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति", "स एको ब्रह्मलोक आनन्दः", "एष परम आनन्द एष ब्रह्मलोकः" इत्यादिभिः श्रीपुरुषोत्तमस्याऽऽनन्दघनता तद्धाम्नोऽक्षरब्रह्मणस्तदानन्दाऽऽनन्दिता च दर्शिता। "ब्रह्मैव सन् ब्रह्माऽप्येति", "अत्र ब्रह्म समश्नुते", "वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु परावतो वसन्ति तेषां न पुनरावृत्तिः" इत्यादिभिर्ब्रह्मलोकप्राप्तिर्ब्रह्मविदः प्रोक्ता, यत्र परावतः परमैश्वर्यवन्त ईश्वरा मुक्ता वसन्तीति।

छान्दोग्ये—"माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत्" इत्यनेनाऽक्षरं ब्रह्म प्रस्तुतम्, अग्रे 'अक्षरमुद्गीथः' इत्यक्षरेण सहैकीकरणात्। तथाग्रे—"यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया भवन्ति" इत्यनेनाक्षरब्रह्मलोके प्रवेशेन देवानां मुक्तानाममृतत्वं प्रतिपादितम्। अग्रे—"य एषोऽन्तरक्षिणि पुरुषो दृश्यते तद् ब्रह्म" इत्यनेनाक्षरब्रह्मप्रकाशो वर्णितः। "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इत्यनेनाऽक्षरब्रह्मलोकात्मकाकाशो भूतानामुद्भवादिस्थानं परस्य ब्रह्मणोऽयनं चेति वर्णितः। "ब्रह्मसंस्थोऽमृतत्वमेति", "तावानस्य महिमा ततो ज्यायाश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥" "यद्वैतद्ब्रह्म", 'तदेतत्पूर्णमप्रवर्ति" इत्यादिभिः प्रतिपादितेऽक्षरे ब्रह्मणि ज्यायान् पुरुषः पुरुषोत्तमोऽक्षरब्रह्मतो भिन्नतया वर्णितः। "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यनेन सर्वकारणं व्यापकमक्षरं ब्रह्म वर्णितम्। "मनोमयः प्राणशरीरः","अन्तर्हृदये एतद् ब्रह्मैतमितःप्रेत्याऽभिसंभविताऽस्मि","तदेतद्ब्रह्म चतुष्पात्","ब्रह्मणस्ते पादं ब्रवाणि","प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म", "आदित्ये चन्द्रमसि विद्युति पुरुषो दृश्यते","तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्यादिभिरीश्वरा अमानवा आतिवाहिका मुक्तिप्रस्थितानामक्षरब्रह्मलोकप्रापकास्तत्त्वान्तरतया दर्शिताः। "सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयम्", "तदैक्षत बहु स्यां प्रजायेय", "सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", "सता सौम्य तदा सम्पन्नो भवति स्वयमपीतो भवति", "सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः","तेजः परस्यां देवतायाम्","स एषोऽ-

णिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यादिभिः सत्यं सद् यद् ब्रह्म तस्मिन् गत्वा रसवल्लवणवन्नदीवच्चाऽपृथग्भावमात्मनो मुक्तसंज्ञस्य प्रतिपादितः। एवं नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानबलान्नजलतेजोवाय्वाकाशस्मरणाऽऽशाप्राणादीनामक्षरब्रह्मरूपतां कथयित्वा "यो वै भूमा तत्सुखं नाऽल्पे सुखमस्ति", "यो वै भूमा तदमृतम्" इत्यादिभिरप्यक्षरब्रह्मणो व्यापकत्वं दर्शितम्। "स एवाऽधस्तात् स उपरिष्टात् स पुरस्तात् स दक्षिणतः स उत्तरतः" इत्यादिनाऽक्षरब्रह्मैव व्यापकं प्रतिपादितम्। "आत्मन इदं सर्वम्" इत्यनेन सर्वस्याऽक्षरतः प्रादुर्भावमुपपाद्य "स एकधा भवति त्रेधा भवति पञ्चधा" इत्यादिनाऽक्षरब्रह्मणो बहुधात्वं प्रतिपादितम्। "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इत्यनेन दहरो जीवात्मा तत्राकाशोऽक्षरं ब्रह्म तस्मिन् यदन्तस्तत्परं ब्रह्मेति प्रतिपाद्यते। "ब्रह्मपुरे सर्वं समाहितम्", "सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिताः" इत्यनेनाऽक्षरं सर्वाधारं सर्वकामाश्रयं प्रतिपाद्य, ततः "एष आत्मा अपहतपाप्मा" इत्यादिना ब्रह्म च परब्रह्म चेत्युभयमष्टगुणवत् प्रतिपादितम्। "एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकम्", "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते। एष आत्मा तद् ब्रह्म तत् सत्यम्" इत्यादिभिर्मुक्तात्मा परंज्योतिरक्षरं ब्रह्म प्राप्य स्वेन परमात्मरूपेणाऽभिनिष्पन्नो भवतीति प्रतिपादितम्। "अपहतपाप्मा ह्येष ब्रह्मलोकः", "सकृद्विभातो ह्येष ब्रह्मलोकः", "एतं ब्रह्मलोकं ब्रह्मचर्येण विन्दन्ति", "तयोर्ध्वमायन्नमृतत्वमेति", "कृतात्मा ब्रह्मलोकमभिसंभवामि", "स खल्वेवं वर्तयन् ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते" इत्यादिभिरक्षरब्रह्मलोकाऽवाप्तिरक्षरं ब्रह्म परब्रह्मतो भिन्नमप्यपृथक्सिद्धतनुरूपं व्यापकं प्रतिपादितम्।

## परब्रह्म

अथ परब्रह्म—"अथाऽतो ब्रह्मजिज्ञासा" इत्यत्र ब्रह्मशरीरकं परब्रह्म प्रस्तुतम्। "आनन्दमयोऽभ्यासात्" इत्यनेनाऽऽनन्दघनत्वं परब्रह्मणः प्रोक्तम्। "आनन्दमात्रकरपादमुखोदरादिः" इत्यनेन साकाराऽऽनन्दघनता प्रतिपादिता। "यः सर्वज्ञः स सर्ववित्", "यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः", "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः", "स त आत्माऽन्तर्याम्यमृतः", "यः

स्वभक्तेभ्यो रमते स मे सर्वस्वम्", "ज्ञः कालकालो गुणी", "प्रधानक्षेत्रज्ञपतिर्गुणेशः", "सर्वस्य वशी सर्वस्येशानः", "शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥", "परमात्मा स सर्वेषामाधारः पुरुषोत्तमः" ( वि० पु० ), "आत्माऽऽत्मा चाऽक्षरात्मा च" इति (स्कन्दपु०), "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" (गीता), "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः", "सर्वतो व्याप्त्या विष्णुः स", "अनश्नन्नन्यो अभिचाकशीति", "तावानस्य महिमाऽतो ज्यायाँश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्याऽमृतं दिवि ॥", "ये ब्रह्मलोके तमात्मानमुपासते", छान्दोग्ये—"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्यादिश्रुतिस्मृतिसूत्राद्यैः श्रीपुरुषोत्तमोऽक्षरब्रह्मलोके निवसमानो दिव्यमूर्तिरुपास्यतया वर्णित । "भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि । रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च ॥" इति भागवते भूतपदेनेश्वरा उक्ताः, "अंशवो ये प्रकाशन्ते ममैते केशसंज्ञिताः" इति महाभारतेंऽशपदेनेश्वरा उक्ताः, "यत्र पूर्वे साध्याः सन्ति देवाः" इत्यत्र पूर्वसाध्यदेवशब्दैरीश्वरा अनादिनो मुक्ता उक्ताः, "सिसृक्षाऽथाऽभवत्तस्य ब्रह्माण्डानां यदा तदा । सकलाऽऽविर्बभूवादौ महामाया ततो हि सा ॥", "तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना । सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि ॥" इति स्कान्दे परमेश्वरेण कालात्मिका माया प्रकटीकृता, सा परब्रह्मणा कालशक्त्याऽक्षरब्रह्मयुक्तया क्षोभार्थमीक्षितेति सर्वत्राऽक्षरब्रह्मजीवेश्वरचेतनमिश्रितेति ब्रह्मविशिष्टा प्रतिपाद्यते ।

सामान्यतः सिद्धमपि विशेषतः सिद्धिविषयं कर्तव्यं भवतीति प्रोक्त-श्रुतिस्मृत्यादिभिर्बद्धं यज्जीवतत्त्वं बन्धनात्मकमायातत्त्वं तदनयोरधिष्ठातृदेवतासाक्षि मुक्तैश्वर्याऽऽयुधांऽशाद्यात्मकेश्वरतत्त्वं चेति त्रयं सर्वदाऽक्षरब्रह्मणा ओतं च प्रोतं च भवतीति स्थूलसूक्ष्मचिदचिद्विशिष्टमक्षरब्रह्मैव परब्रह्मणः शरीररूपं जगज्जन्मादिकारणरूपं सर्वथा प्रतिपादितम् । श्रीहरिः श्रीपुरुषोत्तमो व्यतिरेकतया स्वतः स्वराट् परब्रह्म स्वेऽक्षरे धाम्नि विराजते । स च पुरुषाकारदिव्याऽक्षरात्मना शरीरेण ब्रह्मणा मुक्तैरैश्वर्यैरायुधैः सिद्धिभिर्भूषणैर्गुणैः शक्त्यादिभिरीशैश्च सेव्यते, तानि सर्वाणि परब्रह्मशरीराणि ब्रह्मपदवाच्यानि, एवमेतच्छ्रुतिस्मृतिदर्शनादिषु निरूपितं भवतीति । तादृशब्रह्मात्मकपुरुषविशिष्टा च महामाया सृष्ट्यापूरभूतिरीशजीवादिभोगभूमिरिति भवति, माया

ब्रह्मशरीरं ब्रह्मभोग्या जीवेश्वराधिष्ठिता जीवेश्वरभोग्या चेति स्थूलसूक्ष्मावस्थजीवेश-मायाविशिष्टं ब्रह्मैवेति भवतीति विशिष्टब्रह्म परब्रह्मशरीरमेवेति विशिष्टब्रह्माद्वैतमिति परिष्कृतं यथावस्थिततत्त्वानुसारि मतं सर्वाऽविरुद्धं विशिष्टाद्वैतस्थानं कथं नाऽधिरोहेत् ? अत्र च परब्रह्मशरीरे व्यापके ब्रह्मण्येव सर्वथा सर्वमतानुगतकारणतावैविध्य-संघटनं परब्रह्मणस्तदस्पर्शनं चेत्यादिवादानां सुसंगतिः सम्पद्यत इति विशिष्टं यदक्षरं ब्रह्म तत्राऽद्वैतं परं ब्रह्मेति विशिष्टब्रह्माऽद्वैतमेव मतं सुनिष्पन्नं स्थितिपदं लभते। यथाऽऽत्मनां स्थूलसूक्ष्मकारणानीश्वराणां विराट्सूत्रात्माऽव्याकृतानि शरीराणि तद्वत् परब्रह्मणः पृथिव्यादितत्त्वगर्भमाया स्थूलसूक्ष्मभावात्मिका जडशरीरम्। तस्यां चेतना जीवेश्वराः स्थूलसूक्ष्मदशापन्नाश्चेतनशरीरम्, मायायामनुस्यूतं चैतन्यापादकं द्वितीय-मिदमान्तरं परब्रह्मणः शरीरम्। तदेवं जीवेश्वरादिचेतनवृन्देऽन्तः प्रविश्य व्यापकं तेजोमयं व्यष्टिसमष्टिप्रकारं प्रकाशघनम् अक्षरब्रह्मात्मकमान्तराऽङ्गैकरसं तृतीयं शरीरम्। इत्येवं जडशरीरान्तःप्रविष्टचेतनशरीराऽन्तःप्रविष्टब्रह्मशरीराऽन्तःप्रविष्टः परब्रह्मपरमात्मा शरीरीति जडविशिष्टचेतनविशिष्टब्रह्मविशिष्टं परं ब्रह्मेति विशिष्ट-ब्रह्माद्वैतं कार्यकारणात्मकं "सर्वं खल्विदं ब्रह्म नेह नानाऽस्ति किञ्चन" इत्यादि-वेदान्तैर्वर्णितं सुवचं भवतीति शम्॥

———

# वैष्णवदर्शनेषु निम्बार्कदर्शनस्य विकाशः

श्रीव्रजवल्लभशरणवेदान्ताचार्यः, वृन्दावनस्थसर्वेश्वरसंस्कृतविद्यालयेऽध्यापकः।

अनन्तश्रीविभूषितानां जगद्गुरूणां भगवन्निम्बार्काचार्यचरणानां दार्शनिकसिद्धान्तस्य नाम द्वैताद्वैतमिति प्रसिद्धम्। नहि तद्विदुषामगोचरम्। तदेव स्वाभाविकेतिविशेषणेन विभूषितं भेदाभेदभिन्नाभिन्नेतिपर्य्यायैः परिलक्ष्यते। वेदादिषु यत्र तत्र "द्वा सुपर्णा सयुजा सखाया" (कठोपनिषत्) इत्यादिश्रुतयो जीवब्रह्मणोर्वृक्षरूपप्रकृतेश्च भेदं प्रतिपादयन्ति। "सर्वं खल्विदं ब्रह्म", "तत्त्वमसि" इत्यादयश्चाभेदं दर्शयन्ति। उभयविधानामपि वाक्यानां समानबलवत्त्वान्नैकस्याऽपि बाध्यताऽप्रामाणिकता च वक्तुमुचिता। अत एवैतस्य भेदाभेद( द्वैताद्वैत )दर्शनस्य स्वाभाविकत्वं वक्तव्यम्। तस्यैव प्रचारप्रसारकर्ताऽऽचार्यश्रीनिम्बार्कः। तेषामयमभिसन्धिः—सर्वस्य वेदस्य जडाजडयोः सम्बन्धसिद्धान्तबोधकेषु वाक्येषु त्रैविध्यं परिलक्ष्यते—अभेदपरत्वम्, भेदनिषेधपरत्वम्, भेदप्रतिपादकत्वञ्च। तानि च श्रीनिम्बार्काचार्यैरेवं व्यवस्थापितानि - द्विविधा हि सत्ता—स्वतन्त्रा परतन्त्रा च। तत्र स्वतन्त्रसत्ताश्रय एक एव परं ब्रह्म परमात्मा। प्रकृतिजीवाश्च परतन्त्रसत्ताश्रयाः। तथा च स्वतन्त्रसत्त्वविषयिकाऽभेदबोधकवाक्यानां प्रवृत्तिः, तस्यैकत्वात्। तथैव तेषां नैराकाङ्क्ष्यञ्च। भेदनिषेधपराणाञ्च प्रकृतिजीवयोः स्वतन्त्रसत्त्वनिषेधपरत्वेऽभिप्रायः। भेदप्रतिपादकानां वाक्यानाञ्च परतन्त्रसत्त्वबोधकत्वे तात्पर्य्यम्। एवञ्च सर्वेषां स्वार्थपरत्वं प्रामाणिकत्वञ्च व्यवस्थापितम्।

सायं समागतान् दिवाभोजिक्षुधार्तान् यतीन् स्वाश्रमस्थनिम्बवृक्षेऽर्कं प्रदर्श्य सूर्यास्तानन्तरमपि भोजयामासेति निम्बार्कनामनिरुक्तिरूपं चरित्रं यत् प्रसिद्धं तेनेदं ज्ञायते—यदाचार्यवर्य्येण लोककल्याणार्थं काऽपि दिव्याऽर्चिः प्रकाशिता। चेतनाचेतनब्रह्मेतितत्त्वत्रये स्वाभाविकभेदाभेदात्मकं सिद्धान्तं प्रतिपाद्य कर्मज्ञानभक्तिसमुच्चयात्मिका सरला समीचीना सरणिः संस्थापिता। तमेव केचित्केवलाभेदेन, केचिच्चौपाधिकभेदाभेदेन, अन्ये च विशिष्टाद्वैतेन, केवलद्वैतेन, शुद्धाद्वैतेनेति विविधभावैः प्रतिपादयन्ति।

ते कदाऽऽविर्भूताः ? इत्यत्र विवदन्ति समीक्षकाः। तथा च तत्परम्परानुवर्तिनां श्रीनिम्बार्कीयविदुषां मतमिदम्—यद्भूभारहर्तुमवतीर्य श्रीकृष्णचन्द्रस्तत्कृत्यं सम्पाद्य यदा स्वधाम गन्तुमियेष तदा सत्प्रवृत्तिप्रवाहवर्धनार्थं स्वान्तर्धानानन्तरमज्ञानान्धकार-निवारणाय च—"सुदर्शन महाबाहो कोटिसूर्यसमप्रभ ! । अज्ञानतिमिरान्धानां विष्णोर्मार्गं प्रदर्शय ॥" इति स्वकीयदिव्यायुधरूपश्चक्रराजश्रीसुदर्शन आज्ञापितः। तथा च श्रीसुदर्शनो युधिष्ठिरस्य षष्ठवत्सरे निम्बार्करूपेणावतीर्णः। चतुर्वर्गचिन्तामणिकृता हेमाद्रिणाऽपि—

उदयव्यापिनी ग्राह्या कुले तिथिरुपोषणे।
निम्बार्को भगवान् येषां वाञ्छितार्थप्रदायकः॥

इत्येतद्धर्मशास्त्रीयपरम्परागतत्वेन समुद्धृतं श्रीमद्वेदव्यासवचनमुपरिनिर्दिष्टां धारणां प्रपुष्णाति।

ग्रियर्सनादयो बहवः पाश्चात्त्यलेखका अपि तदेव मतं समर्थयन्ति। परञ्च ये केवलतर्कावलम्बिनः पाश्चात्त्यपद्धतिनिमग्ना आधुनिकास्तेषां सरणिस्तु भिन्ना। तैरनुमीयते यद्रामानुजमध्वयोर्मध्यवर्तिनि विक्रमस्य द्वादशशतकान्तिमे भागे निम्बार्का-चार्य आविरभूत्। तेषु प्रमुखः पुण्यपत्तनस्थो भाण्डारकरमहोदयः, येन १८८२–१८८३ तमे ख्रीष्टाब्दे स्वलिखिते "शैविज्म-वैष्णविज्म" ग्रन्थे यदनुमितं तदेव तत्पर-वर्तिलेखकैर्नयने पिधाय लिखितम्।

द्वापरकलियुगसन्धिकालस्य विक्रमस्य द्वादशशतकस्य च महदन्तरं वीक्ष्य तयोः कतरत् प्रामाणिकमित्यन्वेषणपरायणैः श्रीविरजाकान्तघोषादिभिः समुपलब्ध-श्रीनिम्बार्कभाष्यं तच्छिष्यश्रीनिवासाचार्यकृतं कौस्तुभभाष्यं च समवलम्ब्य विक्रमस्य षष्ठशतके तद्रचनाऽभूदिति निर्धारितम्। तच्च 'श्रीनिम्बार्कभाष्यरचनाकालनिरूपण'-नामके वंगभाषायाः पुस्तके विशदं विवेचितम्। श्रीनिवासभाष्ये समुपलब्ध 'विप्रभिक्षु' आदिबौद्धधर्मानुवर्तिव्यक्तीनां कालानुसारेणैव तत्सर्वं समीक्षितम्।

अत्रेदमप्यवधेयम्—भट्टभास्करस्य समयो निश्चितः, श्रीशङ्कराचार्यतः स्वल्प-कालानन्तरं हि तैर्ब्रह्मसूत्राणि व्याख्यातानि। तथा च शङ्करभास्करयोः समसामयि-कत्वं सन्निकटत्वं वा सुसंगतम्। भास्कराचार्येण शङ्करमतमालोचितम्, तत्पूर्ववर्ति-व्याख्यातृमतमपि समीक्षितम्।

## वैष्णवदर्शनेषु श्रीनिम्बार्कदर्शनस्य विकाशः

श्रीनिम्बार्कभाष्ये "अत एव च तद्ब्रह्म" (ब्र० सू० १।२।१५) इति सूत्रं स्वीकृतम्, तच्च शङ्करभाष्ये नोपलभ्यते। रामानुजभाष्ये तु "अत एव च स ब्रह्म" इत्येवं पुँल्लिङ्गात्मकं तच्छब्दस्य रूपं प्रयुक्तम्। तच्च बौधायनवृत्त्यनुसारिपाठं स्वीकृत्यैव समुद्धृतम्। भास्कराचार्येण ब्र० सू० १।२।१५ व्याख्यानान्ते—"अत्रावसरेऽत एव च तद्ब्रह्मेति सूत्रमन्ये पठन्ति, तत्पुनर्गतार्थमित्यन्यैर्नाभिधीयते" इयं पङ्क्तिर्लिखिता। तत्र चरमोऽन्यशब्दस्तु शङ्कराचार्यं द्योतयति, परञ्चादिमोऽन्यशब्दः कमभिप्रैति? श्रीरामानुजादयस्तु भास्करतः परवर्तिन एव। बौधायनोऽपि तेन न संकेत्यते, तैः स ब्रह्मेति पाठस्य स्वीकृतत्वात्। अत इह प्रथमोऽन्यशब्दः श्रीनिवासमेव द्योतयति, तद्भाष्य एव तथाविधपाठस्योपलब्धत्वात्।

अथ च भास्कराचार्येण श्रीनिवासभाष्यतोऽक्षरशः पङ्क्तिरपि समुद्धृता "नित्योपलब्ध्य०" ब्र०सू०२।३।३१ इत्यत्र—"चेतनाभूतात्मविभुत्ववादिमते दोषकथनार्थं सूत्रम्" इति श्रीनिवासाचार्याणामुक्तिः। एतत्सूत्रव्याख्याने भास्करोक्ता पङ्क्तिरपि निभालनीया, सा चेयम्—"यत्पुनरात्मविभुत्ववादिनां दोषकथनार्थं सूत्रमिति व्याख्यातं तदयुक्तम्" इति। श्रीनिवासभाष्यातिरिक्ते कस्मिँश्चिदपि भाष्ये तथाविधा पङ्क्तिर्नोपलभ्यते, न चैतादृशभावोऽभिव्यञ्जितः। अतः श्रीनिवासाचार्यो भास्कराचार्यतः प्राचीन इति सुनिश्चितम्। भाण्डारकरमहोदयस्यानुमानं तु भ्रान्तम्, तन्मतसमर्थका अपि भ्रान्ता एव। यतो हि श्रीमध्वाचार्यसमसामयिकास्तु श्रीकेशवकाश्मीरिभट्टादयो ये च श्रीनिम्बार्काचार्यत एकोनत्रिंशत्पीठिकानन्तरं समभवन्। प्रतिपीठिकां स्वल्पादपि स्वल्पं पञ्चविंशतिवर्षात्मकं समयं स्वीक्रियेत तदापि श्रीमध्वाचार्यतः सप्तशतवर्षपूर्वं श्रीनिम्बार्कस्य समयः स्यात्। तथा च विरजाकान्तघोषाभिमतं ( निम्बार्कभाष्यरचना विक्रमस्य षष्ठशताब्द्यामभूदिति ) कथञ्चिद्युक्तियुक्तं प्रतीयते।

श्रीनिम्बार्काचार्यैश्च गीतोपनिषद्ब्रह्मसूत्रेति प्रस्थानत्रयी भाषिता, परञ्चेदानीं तेष्वेका ब्रह्मसूत्रवृत्तिरेवोपलभ्यते। वेदान्तकामधेनुः ( दशश्लोकी ), रहस्यषोडशी, प्रपन्नकल्पवल्ली, श्रीकृष्णप्रातःस्तवः—एते ग्रन्थास्तु सम्प्राप्ता मुद्रापिता च। सेतुकातो ज्ञाता प्रपत्तिचिन्तामणिः, वेदान्तरत्नमञ्जूषातो ज्ञातः सदाचारप्रकाशश्चेति ग्रन्थद्वयमपि नोपलब्धमद्यावधि।

श्रीनिम्बार्काचार्यस्य प्रमुखशिष्यः श्रीनिवासाचार्यः। तेषां ग्रन्थेषु वेदान्तकौस्तुभाख्यं भाष्यं लघुस्तवराजस्तोत्रञ्चेत्युभावेव ग्रन्थौ समुपलब्धौ, तौ मुद्रापितौ च। परञ्च सेतुकाग्रन्थतो ज्ञातं पारिजातसौरभभाष्यं ख्यातिनिर्णयश्च, अध्यात्मसुधातरङ्गिण्या पञ्चकालानुष्ठानतश्च ज्ञातो रहस्यप्रबन्धः, श्रीमानदासकृतकठोपनिषट्टीकातो ज्ञातं कठोपनिषद्भाष्यं चेति तेषां ग्रन्थचतुष्टयं नोपलब्धम्।

श्रीनिम्बार्कस्यापरशिष्य औदुम्बराचार्यः, तद्ग्रन्थेषु व्रतपञ्चकौदुम्बरसंहिताऽमुद्रिताऽस्ति। श्रीनिम्बार्कविक्रान्तिः, बहूनि स्तोत्राणि च मुद्रापितानि। श्रीनिम्बार्कस्य तृतीयः शिष्यो गौरमुखाचार्यः, तेन निम्बार्कसहस्रनाम-स्तव-कवचादयो निर्मिताः, तेषु सहस्रनाममात्रं मुद्रितम्।

श्रीनिम्बार्कप्रशिष्यविश्वाचार्यकृतमेकं पञ्चधारीस्तोत्रमेव समुपलब्धं मुद्रापितञ्च तत्। परञ्च सेतुकातो ज्ञाता प्रपत्तिचिन्तामणिटीकाऽद्यावधि नोपलब्धा।

एतत्सम्प्रदायपरम्परायां सप्तमः श्रीपुरुषोत्तमाचार्यस्तत्कृता वेदान्तरत्नमञ्जूषा (दशश्लोक्या बृहद्भाष्यरूपा) उपलभ्यते, सा विविधाभिष्टीकाभिः सह मुद्रापिता च। परञ्च सेतुकातो ज्ञातः सिद्धान्तक्षीरार्णवः, पञ्चकालानुष्ठानतो ज्ञातं रहस्यविवरणञ्च नोपलब्धमद्यापि।

अष्टमाचार्यश्रीविलासाचार्यस्य सविशेषनिर्विशेषश्रीकृष्णस्तवराजः कृतिरिति वृद्धा वदन्ति। ततश्च षोडशीपीठिकां श्रीदेवाचार्या अलञ्चक्रुः, तैर्ब्रह्मसूत्राणां जाह्नवी वृत्तिर्विरचिता। परञ्च दैवात् प्रथमाध्यायस्य प्रथमपादपर्य्यन्तैव लब्धा, सा तु मुद्रापिता। अवशिष्टा जाह्नवी भक्तिरत्नाञ्जलिश्चाधुना नोपलभ्येते।

सप्तदशपीठिकां श्रीसुन्दरभट्टाचार्या अधिष्ठिताः, तेषां वैदुष्यं तत्कृतित एवानुभूयते। स्वगुरुदेवप्रवाहिता जाह्नवी प्रतीकमवलम्ब्यैभिर्व्याख्याता,सा सेतुकानाम्नी टीका गभीराशयाऽतिमनोज्ञा। साऽपि प्रथमाध्यायस्य प्रथमपादान्तैवोपलब्धा, मुद्रिता च। प्रपन्नसुरतरुमञ्जरीनामतः प्रपन्नकल्पवल्लीव्याख्या, मन्त्रार्थरहस्यनाम्नी रहस्यषोडशीव्याख्या, पञ्चकालानुष्ठानमीमांसा चैतत्त्रयो ग्रन्थाः प्रकाशिताः। प्रपन्नवृत्तिनिर्णयोऽपि पञ्चकालानुष्ठानस्यैव नामान्तरमिति केषाञ्चिन्मतम्। यदि च स भिन्नस्तर्हि सोऽप्यनुपलब्ध एव। गोपालतापिनीभाष्यं कालनिर्णयसन्दर्भश्चेति ग्रन्थद्वयं त्वेतेषा-

मद्यावधि नोपलब्धम्। एतेषामेवापरो गुरुभ्राता श्रीव्रजभूषणदेव आसीत्। तत्परम्परायामेव गीतगोविन्दकारश्रीजयदेव-अनन्यरसिकशेखर-श्रीस्वामिहरिदासादयोऽभवन्।

त्रयस्त्रिंशत्पीठिकारूढः प्रस्थानत्रयीभाष्यकारो जगद्विजयी श्रीकेशवकाश्मीरिभट्टाचार्यः। तेन बर्बरयवनशासकाल्लाउद्दीनखिलजीसमये मथुरापुर्य्यां यवनतान्त्रिकाः पराजिताः, हिन्दुधर्मश्च संरक्षितः। सहस्रशो विरक्तशिष्या एभिः सह भजनसाधनपरायणाः शास्त्रानुशीलने संलग्ना आसन्। तैर्गीतायास्तत्त्वप्रकाशिका, ब्रह्मसूत्राणां कौस्तुभप्रभा, उपनिषदां प्रकाशिका टीकाः कृताः। श्रीमद्भागवतस्याऽपि विशदा टीका निर्मिता। परञ्च दैवादुपनिषदां केवलं मुण्डकव्याख्यानं भागवते च केवलं वेदस्तुतिव्याख्यानमधुना समुपलभ्यते। एषां क्रमदीपिकाख्यस्तन्त्रग्रन्थोऽपि महत्त्वपूर्णः, यत्र गोपालमन्त्रादीनां विविधप्रयोगास्तद्विधानञ्च प्रदर्शितम्। मथुरायां यमुनाघट्टोपरि निहितयवनयन्त्रं परिवर्तयित्वा यवनसेना तत्तान्त्रिकाश्च प्रज्वालिता इति गाथामिमां क्रमदीपिका प्रमाणयति। सा च गोविन्द-विद्याविनोद-भैरवत्रिपाठि-रुद्रधरादिबहुभिर्विद्वद्भिस्टीकाटिप्पण्यादितो विभूषिता। श्रीगोविन्दशरणापत्ति-यमुनास्तवादीनि बहूनि स्तोत्राणि तैर्विरचितानि, तानि मुद्रापितानि सन्ति।

एतेषामन्तेवासिना सङ्कर्षणदेवेन 'वैष्णवधर्मसुरद्रुममञ्जरी' एतन्नामकधर्मशास्त्रीयग्रन्थः सङ्कलितः। स च हिन्दीटीकोपेतो मुद्रापितः।

केचिज्जनाश्चैतन्यदेवस्य दीक्षागुरुः केशवभारती केशवकाश्मीरिभट्टाचार्यश्चाभिन्नाविति स्वीकृत्य एतेषामेव चैतन्यदेवः शिष्य इति प्रतिपादयन्ति, चैतन्यानुवर्तिनश्च तदीयां दिग्विजयीपराभवलीलां कल्पयित्वा तैः पराजितो दिग्विजयी केशव इति प्रचारयन्ति। परञ्च तयोः समसामयिकाभावात् तत्प्रवाद एव निष्प्रमाणमिति तटस्थविदुषां मतम्। इह गभीरानुसन्धानमपेक्ष्यते।

श्रीकेशवकाश्मीरिभट्टानामुत्तराधिकारी श्रीभट्टदेवाचार्योऽभूत्। तत्कृतिषु संस्कृतभाषायां तु युग्मस्तोत्रादीन्येवोपलभ्यन्ते, परञ्च तैर्व्रजभाषायां बहूनि सरसपद्यानि विनिर्मितानि। सम्प्रदायेऽस्मिन् हिन्दीरचनाकारेष्वेत एव प्रमुखाः, अत एषां सा कृतिरादिवाणीति प्रसिद्धिं गता।

अत्रेयं वृद्धपरम्परानुगता जनश्रुतिरपि च प्रसिद्धा यत् शृङ्गाररसप्राधान्यमवलोक्य एतद्गुरुदेवैः केशवकाश्मीरिचरणैः श्रीभट्टलिखितानि सर्वाणि व्रजभाषापद्यानि

श्रीयमुनायै समर्पितानि, ततश्च तेषु श्रीयमुनातरङ्गैः शतकमेकं तटे सम्प्राप्तम्। तच्च युगल-शतकनाम्ना प्रसिद्धं भावुकैर्मन्त्रवदतिश्रद्धया समादृतम्। तेषां समयो विक्रमस्य चतुर्दश-शताब्दीपूर्वार्धतः पञ्चदशशताब्दीपूर्वार्धपर्यन्त इति विवेचकैर्विविच्यते।

श्रीभट्टाचार्यस्य पट्टशिष्यः श्रीहरिव्यासदेवाचार्योऽपि गुरुकृपासंलब्धरसोपासनो रसिकराजराजेश्वरतां प्राप्तवान्। संस्कृते सिद्धान्तरत्नाञ्जलिनामतो निम्बादित्यदशश्लोक्या-स्टीका विरचिता, व्रजभाषायाञ्च थान्युपासनासम्बन्धिपद्यानि निर्मितानि तान्येव महावाणीति संज्ञया प्रसिद्धानि। तैराज्ञापितं तत्रैव यद्वाणीयमनधिकारिणे न प्रदेया। उत्तरप्रदेशे देववन्दचटथावलयोर्मध्ये देवीं वैष्णवीदीक्षातः संस्कृत्य तत्र जीवहिंसा निवारितेत्येतेषां वैशिष्ट्यम्।

सप्तदशशताब्द्यां च श्रीपुरुषोत्तमप्रसाद-अनन्तरामादिविद्वद्भिः श्रुत्यन्तसुरद्रुम-श्रुत्यन्तकल्पवल्ली-अर्चिरादिपद्धति-वेदान्तरत्नमालाः, व्रजभाषायां श्रुतिसिद्धान्तरत्नाकर-गीताटीकादयो दार्शनिका औपासनिकाश्च ग्रन्था विरचिताः। अष्टादशशताब्द्यां च श्रीमाधवमुकुन्दादिविद्वद्भिर् अध्यासगिरिवज्रादयोऽतिगभीराशया दार्शनिकनिबन्धा निबद्धाः।

एकोनविंशतिशताब्द्यां च श्रीशुकसुधिना श्रीमद्भागवतस्य सिद्धान्तप्रदीप-नाम्नी टीका कृता, स्वधर्मामृतसिन्धुः, विष्णुसहस्रनाम्नां व्याख्या च कृता। एते त्रयो ग्रन्था मुद्रिता अपि। अन्ये च मानदास-रघुवरदास-रणछोड़दास-नृसिंहदासादयो विद्वांसोऽभूवन्, यैः क्रमशो निम्बार्कसहस्रनामटीका, आचार्यचरित्रम्, कठोपनिषट्टीका इत्यादयो ग्रन्था विरचिताः।

विंशतिशताब्द्याञ्च साधनसम्पन्नसर्वशास्त्रनिष्णाततपस्विविद्वांसः श्रीअमोलक-रामशास्त्रिणोऽभूवन्, यैर्वेदान्तकौस्तुभ-वेदान्तरत्नमञ्जूषा-वेदान्तकौस्तुभप्रभा-अध्यास-गिरिवज्र-वेदान्तरत्नमाला उपनिषदश्च संस्कृतटीकाभिर्विभूषिताः, आत्मपरमात्मतत्त्वा-दर्शश्च निर्मितः, वादिभूषणग्रन्थश्च व्याख्यातः, सेतुकाजाह्नवी चापि प्रपूरिता। तेष्वन्तिमावुभावेव ग्रन्थावमुद्रितौ स्तः।

श्रीगणपतिशास्त्रि-श्रीसर्वेश्वराचार्य-श्रीतपस्वीदास-श्रीहरिप्रियाशरण-श्रीदुलारे-प्रसाद-श्रीजयदेवादयो विद्वांसः सततं विद्यादानपरायणाः, श्रीकेशवदेवादयश्च कुशला भागवतकथाकाराः कवयश्च। व्रजविदेही-श्रीसन्तदास-काठियाबाबा विविध-

## वैष्णवदर्शनेषु श्रीनिम्बार्कदर्शनस्य विकाशः

भाषानिपुणा ग्रन्थलेखकाः प्रकाशकाश्चासन्, तथैव श्रीकल्याणदासमहानुभावा यैर्भाष्यादिग्रन्थाः प्रकाशिताः। ब्यावरपत्तनस्थाः श्रीरामप्रतापशास्त्रिणोऽपि धुरन्धरा विद्वांसो लेखकाश्चासन्, यैर्भागवतदशमस्कन्धस्य चमत्कृतिपूर्णा पद्यमयी टीका कृता। वेदान्तनिधिप०श्रीकिशोरदासमहानुभावास्त्वतिवृद्धवयस्का विद्यमाना एव, ये विंशतिशताब्द्यां निम्बार्कदर्शनप्रचारकेषु प्रशंसनीयतमाः।

भगवद्भजनपरायणाः श्रीवैष्णवदासशास्त्रिणोऽपि निपुणदार्शनिका आसन्। तैश्च भेदाभेदप्रक्रियाप्रदर्शकाः प्रमाणप्रमेयक्रमेण सिद्धान्तमन्दाकिन्यादिग्रन्था विनिर्मिताः। तेषां कृपापात्रशिष्येण न्यायवेदान्ताचार्येण श्रीभगीरथझाशर्मणा युग्मतत्त्वसमीक्षा-भगवत्तत्त्वसुधाम्बुधि-गोपालतापिनीभाष्य-द्वैताद्वैतविवेकादयो विद्वद्धितकारिणो ग्रन्था विरचिताः।

इत्थञ्च युगारम्भतोऽद्यपर्य्यन्तमुत्तरोत्तरं प्रवाहरूपेण श्रीनिम्बार्कदर्शनस्य विकाशो नवनवोन्मेषायितः। विलीनेष्वपि बहुषु ग्रन्थेषु प्रवहति धारावाहिनीयममला भेदाभेदसिद्धान्तसरस्वती॥

---

# निम्बार्कसम्प्रदायोपास्ययुगलम्

श्रीवैद्यनाथझा, वृन्दावनस्थनिम्बार्कमहाविद्यालयेऽध्यापकः।

विश्वस्मिन् सत्स्वप्यनेकेष्वभिलषितविषयेषु सुखमेव समस्तात्मनां स्वाभाविकेच्छाविषय इत्यत्र न केषाञ्चिदपि वैमत्यम्। कीटपतङ्गमारभ्यावृन्दारकं समेषां प्राणिनामशेषव्यापाराः सुखप्राप्त्यर्थमेव। निरतिशयानन्दस्य पराकाष्ठापन्ना निरवच्छिन्ना च स्थितिः परमात्मन्येव, "यत्र नान्यत्पश्यति नान्यच्छृणोति" इत्यादिश्रुतेः। तत्प्राप्तिश्च परमात्मनोऽहैतुकोपासनयैव सम्भवतीत्यपि नापरोक्षमुपनिषन्मर्मज्ञानाम्, 'नायमात्मा प्रवचनेन लभ्यः···यमैवेष वृणुते", "भक्तिरेवैनं प्रापयति" इत्यादिश्रुतेः। "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इत्यादिश्रुतिशतसिद्धाया उपासनायाश्चास्या विशदं विवेचनं बाहुल्येन वैष्णवसम्प्रदायेष्वेवेत्यपि नासत्यभाषणम्, तेषामेव तत्प्राणत्वात्। अनादिवैदिकाश्च वैष्णवसम्प्रदायाश्चत्वार एव, यथा-श्रीनिम्बार्करामानुजमाध्ववल्लभाख्याः। तेष्वपि सर्वप्राचीनतमः श्रीनिम्बार्कसम्प्रदाय एवेत्यपि नाविदितं तटस्थैतिहासिकानां विदुषाम्। द्वेषहीनभावनया भाष्यादीनामध्ययनेन तथैव प्रतीयमानत्वात्।

श्रीनिम्बार्कसम्प्रदायस्योपास्यविषयौ प्राणप्रियौ च श्रीराधामाधवाविति तत्स्वरूपं तेषामेव निर्दिष्टसरण्या दार्शनिकरीत्या विविच्यतेऽत्र निबन्धे। तत्र प्रथमं सर्वथाऽभिन्नयोरपि श्रीराधामोहनयोः प्रथमं तावच्छ्रीकृष्णतत्त्वं विविच्यते।

अयमस्ति तेषामाशयः—'आत्मैवेदमग्र आसीत् पुरुषविधः सोऽन्वीक्ष्य नान्यदात्मनोऽपश्यत्', 'सदेव सौम्येदमग्र आसीत् स ईक्षत लोकान्नु सृजा', 'तस्माद् विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः', 'सोऽकामयत', 'यः सर्वज्ञः स सर्ववित्', 'स कारणं कारणाधिपाधिपः' इत्याद्युपनिषद्भिस्तथा तदर्थनिर्णायकभगवद्वेदव्यासकृतेक्षतेर्नाशब्दमित्यादीक्षत्यधिकरणैस्तथा स्मृत्यनवकाशदोषेत्यादितर्कपादैरद्वैतवादिसम्मतनिर्विशेषब्रह्मवादस्य, सांख्याभिमताचेतनकारणवादस्य, उपर्युक्तोपनिषत्सु सर्वत्र 'स ईक्षत', 'सोऽकामयत' इत्यादौ सर्वत्र पुंस्त्वनिर्देशेन शाक्तवादस्य च निराकरणात्, सर्वज्ञसर्वशक्तिमत ईक्षणकामनादिमतः साकारस्यैव कस्यचित् पुंसोऽनन्तकोटिब्रह्मा-

यदात्मकजगदुत्पत्तिस्थितिलयकर्तृरूपमूलपदार्थत्वं सर्वासामुपनिषदां हार्दाभिमतमिति न केषाञ्चिदपि पक्षपातविहीनानां साम्प्रदायिकानर्थकारिदुराग्रहरहितानां किञ्चिदपि संशयः।

तथा 'तस्माद् विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः', 'रसो वै सः', 'आनन्दं ब्रह्म', 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन', 'सैषाऽनन्दस्य मीमांसा', 'तदेदत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्माच्च सर्वस्मात्', 'यत्र नान्यत्पश्यति', 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः', 'नारायणाद्रुद्रो जायते', 'आनन्दमयोऽभ्यासात्' इत्याद्युपनिषद्ब्रह्मसूत्रादिभिर्नारायणेतरेषां शिवब्रह्मादीनां प्रतिषेधात्। नारायणरूपेष्वपीतरेषु श्रीरामचतुर्भुजविष्णुनृसिंहवामनादिषु वस्तुतस्तदभिन्नेषु रसाद्यपोषकधनुःशङ्खचक्रादिधारिषु 'तस्माद् विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः' इत्यादिश्रुतिभिर्वर्णितानां रसमयत्वानन्दमयत्वादिधर्माणां पूर्णतयाऽप्रकटनात् परिशेषात् 'कृष्णो वै हरिः परमं दैवतम्' इत्यादिश्रुतिसद्भावाच्च श्रीगोपीजनवल्लभद्विभुजवंशीविभूषितपाणिबर्हापीडधारिपीताम्बरनटवरश्यामसुन्दरवृन्दावनचन्द्रश्रीवृषभानुनन्दिनीप्राणवल्लभनन्दनन्दनसर्वाकर्षकस्य द्विभुजश्रीकृष्णस्यैव निखिलोपनिषत्प्रतिपाद्यत्वरूपमूलपरात्परपदार्थत्वमिति सुस्पष्टमकृताङ्गभङ्गानां प्रमाणमूर्धन्यानां परमात्मनिःश्वासभूतानां सर्वासां श्रुतीनां हार्दाभिमतमिति नापरोक्षं भगवद्भक्तिपूतहृदयानां तत्त्वजिज्ञासूनां विपश्चित्प्रवराणाम्। प्रतिभाबलेन तासां स्वेच्छया स्वकल्पितमतसमर्थनाय लक्षणाव्यञ्जनाद्यगतिकगत्याश्रयणेन श्रुतीनां करपादत्रोटनं न केवलं महदनुचितमपि तु निरयप्रयोजकमेव।

निखिलोपनिषत्सारभूते ब्रह्मसूत्राणां वेदव्यासकृते श्रीमद्भागवते उपक्रम एव—'वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥' इत्यादिना ब्रह्मपरमात्मभगवच्छब्दानां समानार्थकत्वमभिधाय प्रदर्श्य च सर्वानवतारान् 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इत्यादिनाऽष्टादशपुराणकर्तृहरिज्ञानावतारेण भगवता व्यासेन द्विभुजश्रीकृष्णस्यैव साक्षाद् भगवत्त्वं प्रतिपादितम्। तथा च 'अथातो ब्रह्मजिज्ञासा' इत्यत्र भगवत्पर्यायवाचकेन ब्रह्मशब्देन मूलतत्त्वस्य तस्यैव जिज्ञासा कृता, तत्रैव 'तत्तु समन्वयात्' इत्यादिना जैमिनिमतं निरस्य समेषां वेदान्तानां समन्वयः प्रदर्शितः। तथा तदेव चेक्षतेर्नाशब्दमित्यादीक्ष-

त्यधिकरणेन, स्मृतिपादेन, तर्कपादेन च पुनः पुनः समर्थितम्। ब्रह्मसूत्रस्य—'अथातो ब्रह्मजिज्ञासा' इतिसूत्रघटकब्रह्मपदस्य, 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इत्येतद्घटकभगवच्छब्दवाच्यश्रीकृष्णपरत्वाभावे 'अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः। गायत्रीभाष्यभूतोऽसौ श्रीमद्भागवताभिधः॥'' इत्यस्य सर्वथैवासंगत्यापत्तेः, सूत्रभाष्ययोरेकविषयत्वनियमात्। एवञ्च श्रीमद्भागवते सर्वावतारकथनानन्तरं द्विभुजवंशीविभूषितपाणेः श्रीकृष्णस्यैव साक्षाद्भगवत्वप्रदर्शनेन तस्य च ब्रह्मसूत्रव्याख्यानतया व्याख्येयस्य तत्परत्वमावश्यकम्। एवञ्च ब्रह्मसूत्रस्योपनिषदर्थनिर्णायकतया सुतरां तासामपि सर्वासामविकलेन द्विभुजश्रीकृष्णपरत्वं सुस्पष्टमेव, उपनिषद्ब्रह्मसूत्रश्रीमद्भागवतानामुत्तरोत्तरव्याख्यानरूपाणां समानविषयत्वस्यैवोचितत्वात्। श्रीमद्भागवतदृष्टिकोणस्तु 'एते चांशकलाः' इत्यादिना स्पष्टमेव। तथा च निस्सन्दिग्धं निखिलोपनिषत्प्रतिपाद्यत्वं श्रीकृष्णस्येति नात्र प्रज्ञावतां विवादावसरः। एवञ्च विनैव कष्टकल्पनया द्विभुजश्रीकृष्णस्यैव सकलोपनिषद्वाच्यत्वे सिद्धे वेदमातुर्गायत्र्या भर्गपदार्थत्वं वेदशिरसः पुरुषसूक्तस्य जगद्बीजपुरुषत्वञ्च, तस्यैव सुतरां सिद्धेः। 'तं साधु कर्म कारयति यमूर्ध्वमुन्निनीषति', 'भयादस्य अग्निस्तपति', 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्यादिभिः समेषां बुद्धिप्रेरकत्वस्य रूढसवितृपदवाच्यसूर्यादीनामन्यप्रेर्यत्वस्य श्रवणेन समेषां बुद्धिप्रेरकत्वस्य तत्राभावात्, मूलतत्त्व एव श्रवणात्, सूर्यादीनामसंभवात्, पूर्वोक्तश्रुत्यादौ पुंस्त्वनिर्देशात्, स्त्रीदेवताया अपि सम्भावनाऽसंभवात्, वेदान्ते आकाशपदस्य 'आकाशस्तल्लिङ्गात्' इत्यादिरीत्या ब्रह्मणि तात्पर्यमिव गायत्रीघटकसवितृपदस्य भर्गपदस्य 'धियो यो नः प्रचोदयात्' इत्यादिलिङ्गात् 'यतो वा' इत्यादिना प्रतिपादितस्य निखिलजगत्प्रसवितुरानन्दकन्दस्य द्विभुजश्रीकृष्णस्यैव श्रीविष्णुपदवाच्यस्य वाच्यत्वम्, तदैव मातृपुत्रयोर्गायत्रीवेदयोः सामञ्जस्यात्। एवमेव च 'भर्गाख्यं विष्णुसंज्ञं तत्' इत्यादियोगियाज्ञवल्क्यवचनमपि संगच्छते। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति नियमेन पुराणे ब्रह्मवैवर्तादौ श्रीराधाकृष्णयोरेव प्रकृतिखण्डे उत्पत्तिदर्शनात्, 'ततो विराडजायत' इत्यत्रापि तत्पदार्थस्य 'सहस्रशीर्षा' इति प्रतिपाद्यत्वमपि पुरुषोत्तमस्य क्षराक्षरातीतस्य द्विभुजश्रीकृष्णस्यैवेत्यप्युपक्रमोपसंहारादिभिः शास्त्रतात्पर्यमाकलयतामुपनिषन्मर्मज्ञानां तटस्थानां विपश्चितां नाऽपरोक्षम्।

एवञ्च सर्वज्ञसर्वशक्तिमदनन्तस्वाभाविकमाङ्गलिकगुणगणराशिः सौन्दर्यमाधुर्य-लावण्यसौकुमार्यसौगन्धसौवर्यसौस्वर्यादिविशिष्टगोपीजनवल्लभद्विभुजवंशीविभूषितपाणि-बर्हमुकुटधारिपीताम्बरनटवरश्यामसुन्दरश्रीवृन्दावनचन्द्रश्रीवृषभानुनन्दिनीप्राणवल्लभनन्द-नन्दननित्यकिशोरनवघनश्यामपरमचपलपरमसुन्दरः सर्वेश्वरः सर्वात्मा सर्वजगद-भिन्ननिमित्तोपादानकारणरूपो भगवान् श्रीकृष्ण एव निखिलोपनिषत्प्रतिपाद्यः, गायत्रीघटकभर्गपदवाच्यः, प्रणवपदवाच्यः, पुरुषसूक्तवाच्यजगद्बीजपुरुषः, ईशे ईशपदवाच्यः, केने केनपदवाच्यः, कठे प्रेयपदवाच्यः, प्रश्ने प्रश्नविषयः, मुण्डके आत्मशब्दवाच्यः, माण्डूक्ये प्रणववाच्यः, तैत्तिरीये रसपदवाच्यः, छान्दोग्ये भूमपद-वाच्यः, बृहदारण्यके सर्वाधिकप्रियपदवाच्यः, तापिन्यां परमशब्दवाच्यः श्रीगोपीजन-वल्लभ एव। तथैव 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादि संगच्छते। तथा चोक्तं स्वर-चितवेदान्तकामधेनुदशश्लोक्यां स्वयमेवाद्याचार्यचरणैः श्रीनिम्बार्कमहामुनीन्द्रैः—

स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम्।
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम्॥ इति।

विशदं विवेचितञ्चेदं पद्यं स्वरचितवेदान्तरत्नमञ्जूषायां दशश्लोकीभाष्यभूतायां श्रीपुरुषोत्तमाचार्यचरणैः, तथाचार्यपरम्परायामासीनैर्महावाणीकारवर्यैः श्रीहरिव्यास-देवाचार्यचरणैरपि स्वरचितसिद्धान्तरत्नाञ्जलौ।

एवमेव रसिकजीवनाधारभूतं परमगोप्यमुपनिषद्भिरपि गोप्यत्वेन वर्णितं श्रीशुकेनापि श्रीमद्भागवते गोप्यत्वेनैव सुरक्षितं श्रीराधातत्त्वमाह्लादिनीशक्त्याभि-धीयमानपि परमविष्णुश्रीकृष्णात् सर्वथाऽभिन्नमेवाङ्गीकृतमाद्याचार्यवर्यैरन्यैश्चाप्ये-तत्सम्प्रदायानुयायिभिः साहित्यकारैराचार्यवर्यैरितरैश्चापि विद्वद्भिरित्येतत्सम्प्रदाय-सकलसंस्कृतभाषासाहित्याध्ययनेनैव सम्यगवगन्तुं पारयिष्यन्ति विद्वांसः। तथा चोक्तं स्वयमेवाद्याचार्यवर्यैर्दशश्लोक्यामेव—

अङ्गे तु वामे वृषभानुजां मुदा विराजमानामनुरूपसौभगाम्।
सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम्॥

अत्रानुरूपसौभगामिति विशेषणेन श्रीकृष्णस्य अनन्ताचिन्त्यस्वाभाविक-कल्याणगुणगणराशित्व-स्वभावतोऽपास्तसमस्तदोषत्व-निखिलजगदभिन्ननिमित्तोपादा-नचिदचिद्भिन्नाभिन्नत्वादयोऽशेषधर्माः श्रीराधायामप्यङ्गीकृता आद्याचार्यवर्यैः।

श्रुतिस्मृत्यादिसकलशास्त्रानुमोदितमनादिपरम्परासिद्धं चैतद्दिव्ययुगलोपासनमेव श्रीनिम्बार्काचार्याणां परमेष्टतमम्। इयं चैतत्सम्प्रदायाऽसाधारणभूता रसमयी श्रीयुगलोपासना 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यादियजुर्वेदीयमन्त्रसम्बद्धा। मन्त्रेऽस्मिन् आह्लादिनीशक्तिरूपायाः श्रीश्रिया( श्रीराधाया )स्तथैश्वर्यशक्तिरूपायाः श्रीलक्ष्म्याः क्षराक्षरविलक्षणेन भगवता पुरुषोत्तमेन सहोपासनायाः स्पष्टतयाऽऽदेशो विहितः। एतावतैव श्रीराधायाः परकीयात्वभावनाया अपि कतिपयसम्प्रदायप्रचलिताया निराकरणं भवति, उक्तमन्त्रे नित्यदाम्पत्यस्य स्वीकाराच्च।

आह्लादिनीशक्तिरेव श्रीराधापदवाच्या, यया श्रीवृन्दावनाख्ययोगपीठे परात्परपरमात्मश्रीकृष्णचिन्तनस्य पुराणतन्त्रादौ सविस्तरं वर्णनात्। आद्याचार्यैः श्रीनिम्बार्कमहामुनीन्द्रैः स्वरचितवेदान्तकामधेनुदशश्लोक्याः ४-६ श्लोकैः तथाऽऽद्याचार्यवर्याणां साक्षाच्छिष्यैः श्रीमदौदुम्बराचार्यवर्यैरपि स्वरचितायामौदुम्बरसंहितायां 'लक्ष्मीर्वाणी च तत्रैव जनिष्येते महामते। वृषभानोस्तु तनया राधा श्रीर्भविता किल॥' इत्यादिब्रह्मवैवर्तवाक्योद्धरणात् सुस्पष्टीकृतम्। इदमेव तत्त्वं वेदान्तरत्नमञ्जूषायां श्रीपुरुषोत्तमाचार्यचरणैः, सिद्धान्तरत्नाञ्जलौ श्रीहरिव्यासदेवाचार्यचरणैश्चापि विशदं विवेचितम्।

यद्यपीदं श्रीराधामाधवात्मकं युगलतत्त्वं समस्तवेदैकवेद्यम्, तथापि तैत्तिरीयरसविद्यायाः, छान्दोग्यभूमविद्यायाः, बृहदारण्यकस्य पुरुषविधविद्यायाः, तथा श्रीगोपालतापिन्या उपासनायाः श्रीराधामाधवाख्ययुगलतत्त्वेन विशेषः सम्बन्धः।

निखिलाज्ञानतमोऽनुवृत्तिविनाशिका सेयमुपासना श्रीसनकादिभ्यः श्रीमन्नारदेन, तेभ्यश्च श्रीमन्निम्बार्काचार्यैः समधिगतेत्येतत्सम्प्रदायाचार्यपरम्परयाऽवगम्यते। उक्तञ्च स्वयमप्याद्याचार्यवर्यैर्वेदान्तकामधेनौ—

उपासनीयं नितरां जनैः सदा प्रहाणयेऽज्ञानतमोऽनुवृत्तेः।
सनन्दनाद्यैर्मुनिभिस्तथोक्तं श्रीनारदायाखिलतत्त्वसाक्षिणे॥

एवमेव स्वरचितवेदान्तपारिजातसौरभेऽपि परमाचार्यैः श्रीकुमारैरस्मद्गुरवे श्रीमन्नारदाय तथैवोपदिष्टः 'भूमा त्वेव विजिज्ञासितव्यः' (ब्र० सू० १।३।८) इत्यत्र 'भूमा प्राणो न भवति' इत्यादिना समुद्घोषितम्।

अस्य च युगलोपासनस्य श्रीवल्लभादिसम्प्रदाये सत्यपि वर्णने यत्र कुत्रापि

परिदृश्यमाने चापि श्रीराधाया माहात्म्यवर्णने यथानिवार्यरूपेणात्र श्रीयुगलोपासनं विहितं न तथाऽन्यत्र। अत्र सम्प्रदाये परमश्रिया राधया सहितस्यैव परमविष्णोः श्रीकृष्णस्याराधनं विहितमस्ति। न केवलः श्रीकृष्णः, न च केवला श्रीराधाऽऽराध्येति विभिन्नग्रन्थेषु बहुशः प्रतिपादनात्, व्यतिरेकेऽपराधवर्णनाच्च। एतत्सम्प्रदाय-प्रसिद्धौदुम्बरसंहितावेदान्तरत्नमञ्जूषादिग्रन्थोद्धृतऋक्परिशिष्टश्रुतेस्तथैव प्रतीयमानत्वात्, 'राधया माधवो देवो माधवेनैव राधिका। योऽनयोः पश्यते भेदं न मुक्तः स्यात् स संसृतेः ॥' इति। 'स्वभावतोऽपास्त''अङ्गे तु वामे' इत्यादिदशश्लोक्यां श्रीयुग्मरूपत्वस्यैव पूर्णब्रह्मत्वाभिधानात्, श्रीयुग्मरूपस्यैव सर्वत्र स्मरणादौ नियम-विध्याश्रयणात्। औदुम्बरसंहिताया व्रतपञ्चकेषु श्रीयुग्माङ्घ्रिसेवाव्रतनिरूपणे श्रीमदौदुम्बराचार्यं प्रति तथैवाद्याचार्यचरणैः—

श्रीयुग्मकाराधनमन्तरेण यत् साहित्यतोऽर्थवहत्वतो(?) ध्रुवम्।
सत्कर्मणां चाप्यविवेकगामिनां युग्मव्यवच्छेदकृतां दुरात्मनाम् ॥
सत्कर्ममात्रं क्वचिदाचरेत्तदा नो वै युगाराधनमदृव्रताग्रहः।
अत्रैकरूपं भजतां सुदुष्कृतां दोषावहत्वाद्धि सतोऽपि कर्मणः ॥
श्रीराधिकाकृष्णयुगं सनातनं नित्यैकरूपं विगमादिवर्जितम्।
यद्वज्जलोल्लोलयुगं मिथो रतं सदृगोचरं यावदवाप्नुयान्न तु ॥
संसेवितुं तत्र न भेदमाचरेच्छ्रीराधिकाकृष्णयुगार्चनव्रती।
दोषाकरत्वाद्धि भिदानुवर्तिनां सत्कर्मणामेवमभेदवादिनाम् ॥

इत्यादिभिः श्रीकुमारनारदादिवाक्यैरतिविस्तरेण तथैव नियमाभिधानात्, युग्म-व्यवच्छेदे प्रत्यवायप्रतिपादनाच्च, एतत्सम्प्रदायधर्मशास्त्रभूतायां स्वधर्मामृतसिन्धा-वपि—'राधया सहितो देवो माधवो वैष्णवोत्तमैः। अर्च्यो वन्द्यश्च ध्येयश्च श्री-निम्बार्कपदानुगैः ॥' इत्यादिना तथैव निर्णयात्। अत एवास्मिन् सम्प्रदाये जप-ध्यानकीर्तनादिसकलसाधनसाध्येषूभयोरेव साहित्यदर्शनात् 'राधेश्याम राधेश्याम श्याम श्याम राधे राधे। राधेकृष्ण राधेकृष्ण कृष्ण कृष्ण राधे राधे ॥' एष खल्वे-तत्सत्सम्प्रदायजपमहामन्त्रः। 'जय राधे जय राधे राधे जय राधे जय श्रीराधे। जय कृष्ण जय कृष्ण कृष्ण जय कृष्ण जय श्रीकृष्ण ॥' एतत्खलु कीर्तनमहामन्त्रः, उभयत्रैवोभयसाहित्यसत्त्वात्। सम्प्रदायेऽस्मिन् श्रीराधामाधवौ नेत्रोभयगोलका-

विव समानप्रियौ। श्रीराधायामात्मत्वबुद्धिः, राधेशे चात्मेशत्वबुद्धिः, भानुनन्दिन्यां प्राणात्वबुद्धिः, श्रीनन्दनन्दने च प्राणेशत्वबुद्धिः क्रियते।

एतद्युगलोपासनविषये श्रीयुग्मतत्त्वविषये चाधिकं जिज्ञासुभिरस्मद्गुरुचरणै-र्बाल्यादेव श्रीकृष्णरसरसिकैस्तथा तदर्थमेव नव्यन्यायवेदान्तादिशास्त्रमधीतवद्भिर्गौपाख्य-प०श्रीभगीरथशर्मभिर्विरचितानि मुद्रितानि च श्रीयुग्मतत्त्वसमीक्षा-वेदान्ततत्त्व-समीक्षा-भगवत्तत्त्वसुधानिधिद्वैताद्वैतविवेकादीनि पुस्तकान्यवलोकनीयानि। तेषु ग्रन्थेषु युगलतत्त्वविषये प्राचीनानामाधुनिकानां च सर्वासां कुशङ्कानां दार्शनिकपद्धत्या समाधानं विहितमस्तीति संक्षेपः॥

———

# पुष्टिमार्गविमर्शः

श्रीमंशारामो द्विवेदः, मुम्बापुरीस्थजी०टी०सं०महाविद्यालयाध्यापकः ।

वर्वर्ति विभिन्नसम्प्रदायप्रवर्तकाचार्यचक्रचूडामणिविद्वत्पर्षन्मुकुटमणिभगवद्वद-नानलावतारनिर्गुणभक्तिमार्गप्रवर्तकश्रीवल्लभाचार्यस्य विशिष्टं स्थानं दर्शनभक्त्योः । एतैर्महाभागैर्व्यासपादीयसूत्राण्यवलम्ब्य भाष्यमुपज्ञातम् । प्राधान्येनात्र जीवस्य विचा-रणेति कृत्वा ग्रन्थस्यास्याणुभाष्यत्वेन प्रसिद्धिः । सन्ति पुष्टिसम्प्रदायेऽपि दर्शन-मार्गे भूयांसो ग्रन्थास्तथाऽपि सर्वतो मुख्यत्वमेतस्यैव । इमे महानुभावा भक्तिमार्गे निर्गुणभक्तिं वेदान्ते च ब्रह्मवादं स्वीचक्रुः ।

## पुष्टिपदार्थविचारणा

पुष्धातोः क्तिन्प्रत्यये ष्टुत्वे च पुष्टिपदं बोभवीति सिद्धम् । "पुष्टिः पोषणं तदनुग्रहः" इति सिद्धान्तानुसारेण पुष्टिपदस्य तात्त्विकोऽर्थोऽनुग्रहमार्गः । इममेव भगवन्मार्गं कृपामार्गं निर्गुणभक्तिमार्गं वा कथयन्ति मनीषिणः । दशमस्कन्धे भ्रमरगीतसन्देशे "या मया क्रीडता" इत्यारभ्य "अचिरान्मामवाप्स्यथ" इत्यन्तेन "युवां मां ब्रह्मभावेन" इत्यादेः, "दिष्ट्या गृहेश्वर्यसकृन्मयि त्वया कृतानुवृत्तिः" इत्यादेश्च, एकादशस्कन्धे च—"अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन । सुगोप्यमपि वक्ष्यामि" इत्यारभ्य "तस्मात्त्वमुद्धवोत्सृज" इति श्लोकद्वयान्तेन "भक्तियोगः पुरैवोक्तः प्रीयमाणस्य तेऽनघ । पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥", "सालोक्य-सार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।", "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्ये-नामुष्मिन्मनः कल्पनम्" इत्याथर्वणिकोपनिषदादिभिश्च प्रतिपादिताया भक्तेः कारणं पुष्टिरेव ।

### वैष्णवीयबृहत्स्तोत्रीयपुष्टिस्वरूपम्—

शृङ्गाररससंस्थानः स्थायिभावः प्रभुर्मतः ।
रसो निरूपितः शास्त्रे यादृशस्तादृगेव हि ॥

नृत्यबन्धादिभिर्बोध्यः क्रिया तत्रापि कारणम् ।
क्रियया नृत्यबन्धाद्यैः शास्त्रादुद्रेकतोऽपि च ॥
उद्बोध्यः स्वामिनीभावः सोऽस्माकं मन्मथः प्रभुः ।
गूढभावो हृदि स्थायी स्त्रीभावात्मा कृपाकरः ॥
सुखरूपस्तु तत्पश्चात् भावी तदनुभावकः ।
भक्तसम्बन्धजनितस्तद्भोक्ता प्रभुरुच्यते ॥
कामाख्यं सुखमुत्कृष्टमित्यत्र विनिरूपितम् ।
तस्य भावैकभोग्यत्वाद्भोक्तृत्वमुपपद्यते ॥
अतिगूढः स भगवानेवं ज्ञेयः कृपाबलात् ।
तदाश्रितैः सदासिद्धैः सेव्यश्च प्रीतिसेवया ॥

अनुग्रहमन्तरा राजमार्गं नैव दर्शयति भगवान्। अनुग्रहाभाव उदाहरणं नृगराज्ञः। अवनिपालो नृगो नाम कोटिशो गाः ब्राह्मणेभ्यो दत्त्वाऽप्येकदा कस्यचिद् ब्राह्मणस्य गामनवधानेन दानेऽर्पयामास। गोः स्वामी ब्राह्मणोऽपरः स्वकीयां गां दृष्ट्वा ब्राह्मणेन विवदमानो नृगनृपं प्रययौ। राज्ञा नृगेन संख्यातीता गाः प्रतिदातुं ब्राह्मणं ययाचे, किन्तु कृपाहीनो भूसुरस्तस्यानुनयं नाङ्गीचकार, प्रत्युत तस्मिन्ननुग्रहाभावाद्राजानं नरके पातयामास। श्रीमद्भागवते नृपनृगोपाख्याने स्पष्टमेतत्।

भगवान् भक्त्याख्यराजमार्गेण यथा वशीभवति तथा ज्ञानयोगादिदुःसाध्यमार्गेण नैव। तदुक्तं गीतोपनिषदि—

'भक्त्या त्वनन्यया शक्योऽहमेवंविधोऽर्जुन' इति ।
वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ।

ये तु भगवतो वाञ्छामेवानुग्रहं मन्यन्ते, ते तु मान्या एव, भगवद्वाञ्छातोऽनुग्रहस्य भिन्नत्वात्, "यस्यानुग्रहमिच्छामि" इत्यत्रेच्छाया कर्मत्वेनानुग्रहस्य दर्शितत्वाच्च।

## आचार्यमतेन जीवस्वरूपम्

"तत्त्वमसि श्वेतकेतो", "एषोऽणुरात्मा चेतसा वेदितव्यः", "ममैवांशो जीवलोके" "न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि" इत्यादिसिद्धान्तवाक्यै-

ब्रह्माभिन्नोऽणुर्ब्रह्मांशो जीव इति सिद्धान्तः। स च शुद्धसंसारिमुक्तभेदेनावस्थात्रय-विशिष्टः। जीवोऽयं सच्चिदानन्दात्मकपरब्रह्मणः सकाशान्निःसरति। निःसरणे सति आनन्दांशस्य तिरोभावाज्जीवपदव्यवहर्तव्यो भवति। अत्र च मानं "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति तत्त्वसूत्रमेव।

ननु व्यापकाद् ब्रह्मणो निस्सरणं न सम्भवतीति चेन्न, यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति तथैव ब्रह्मणः सकाशात् सर्वेषां जीवानां व्युच्चरणस्य श्रुतिसिद्धत्वात्। जीवस्य व्युच्चरणानन्तरमानन्दांशस्य तिरोभावे शुद्धत्वम्। अत एवोक्तम्— "जीवे शुद्धत्वं विद्यासम्बन्धरहितत्वम्" इति। पञ्चपर्वाविद्यासम्बन्धानन्तरं दुःखाद्याक्रान्तो जीवः संसारी भवति।

वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे।
पञ्चपर्वेति विधेयं यया विद्वान् हरिं विशेत्॥

इति वाक्योक्तप्रतिपादितपञ्चपर्वात्मकविद्यासम्बन्धे सति साधुसङ्गान्मुक्तिं लभमानो मुक्तो भवति।

ननु जीवस्याणुत्वे सर्वदेहव्यापिचैतन्यानुपपत्तिरिति चेन्न, जीवे विसर्पिगुणचैतन्यस्य स्वीकारेणादोषात्। यथा सूर्यमणिप्रभायां बहुदेशव्यापित्वं तथैव विसर्पिगुणचैतन्यस्याऽपि सर्वशरीरव्यापित्वस्वीकारेण न काचिदनुपपत्तिः। लोकेऽपि मृगमदगन्धादीनां दीर्घदेशव्यापित्वं सर्वानुभूतमेव।

## प्रवाहमर्यादापुष्टिभेदेन जीवानां त्रैविध्यम्

जन्ममरणप्रवाहमार्गे पतितो विषयासक्तिपरायणः संस्कारहीन आसुरापरपर्यायः सदाभवभावितो जीवः प्रवाहपदवाच्यः। प्रमाणञ्चात्र—

प्रवाहस्थान् प्रवक्ष्यामि स्वरूपाङ्गक्रियान्वितान्।
जीवास्ते ह्यासुराः सर्वे प्रवृत्तिञ्चेति (?) वर्णिताः॥

## मर्यादाजीवः

वेदोक्तभक्तिपरायणो वेदोक्तनियमानुल्लङ्घ्य किमपि कर्तुमसमर्थः परमेश्वरपूजनपरायणः। पूर्वोत्तरमीमांसाभ्यां कर्मज्ञानमर्यादाया एव निरूपणान्मर्यादात्वं समीचीनमेव। "वेदस्य विद्यमानत्वान्मर्यादाऽपि व्यवस्थिता" इति ग्रन्थेन स्पष्टमेवोक्तम्।

# पुष्टिजीवः

प्रवाहमर्यादाभिन्नो वेदलोकातीतपुरुषोत्तमपरायणो गोपाङ्गनासन्निभः श्रीकृष्णः शरणं ममेति रात्रिंदिवं चिन्त्यमानः। ननु गीतायां सर्गद्वयस्यैव कथनाज्जीवानां त्रैविध्य-कथनमसङ्गतमिति चेन्न, दैवसर्गत्वेनैक्येऽपि साध्यसाधनभेदेन पुष्टिसर्गस्यातिरिक्तत्व-स्यैवोचितत्वात्। स्वसेवार्थं पुष्टिजीवानामालोचनं परेषां तु परकार्यार्थम्। "स वै नैव रेमे" इति श्रुतिवचनमपि स्वरसत एव सङ्गच्छते, मर्यादामार्गे सेवायाः सत्त्वेऽपि मनस्येवाङ्गुष्ठमात्रादिरूपस्य कल्पनं न त्वानन्दमात्रकरपादमुखोदरादिरूपप्रकटस्य।

तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशयः।
भगवद्रूपसेवार्थं तत्सृष्टिर्नान्यथा भवेत्॥ इति।
(षोडशग्रन्थाः)

आचार्यश्रीकल्याणरायमतेन जीवानां दशधात्वम्—

(१) केवलप्रवाहः—देवासुरजीवसम्पत्तिमध्ये जन्ममरणप्रवाहपतितो भगवदिच्छया जायमानो जीवः।

(२) केवलमर्यादाजीवः—वेदोक्तपूजापरायणः फलासक्तिमानसो वेदोक्तमार्गादेव मोक्षफलाभिलाषुकः।

(३) पुष्टिप्रवाहजीवः—भगवत्स्वरूपज्ञानाभावेऽपि भक्त्युपासनैकधनः (श्रुतदेवसमः)।

(४) पुष्टिमर्यादाभक्तः—भगवद्गुणज्ञत्वे सति तत्स्वरूपानभिज्ञः शास्त्रोक्तश्रवणमनन-करणशीलः। (अर्जुनसमो भक्तः)।

(५) मर्यादापुष्टिजीवः—विध्यनुकूलमर्यादापालनतत्परो भगवदनुग्रहवान् (अम्बरीष-समो जीवः)।

(६) पुष्टिपुष्टिभक्तः—भगवत्स्वरूपगुणगानपरायणो भगवद्गुणस्वरूपज्ञानवान् लीलारहस्यकोविदो विशेषानुग्रहवान्। (नारदप्रह्लादादयः)।

(७) शुद्धपुष्टिजीवः—प्रभुप्रेमसन्दोहनिर्भरो निस्साधनो हरिसर्वस्वरूपो गोपीजनसमः, "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते" इति सिद्धान्तानुगतः।

(८) प्रवाहस्थपुष्टिमिश्रितो जीवः—भगवद्भजनानुकूलकर्मकर्ता।

(९) प्रवाहस्थमर्यादामिश्रितो जीवः—केवलं सत्कर्मकर्ता ।

(१०) प्रवाहस्थप्रवाहमिश्रितो जीवः—लौकिककार्यतत्परो हिंसैकजीवन आसुरः ।

"पुष्टिः कायेन निश्चयः" इति सिद्धान्तानुसारिशुद्धपुष्टिसृष्टेः स्वरूपम् । "कस्य रूपमभूद् द्वेधा तत्कायमभिचक्षते" इति वचनात्, "स इममेवात्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नीश्चाभवताम्" इति पुरुषविधब्राह्मणानुसारेण स्वरूपस्यैवानेकधा भवनं प्रतीयते । स्वरूपञ्चानन्द एव । आनन्दाख्यब्रह्मण उपादानत्वेन जायमानायाः सृष्टेरानन्दरूपत्वमेव, "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रेण कार्यकारणयोरभेदस्य बोधनात् ।

न च पुष्टिमार्गे आसुरमर्यादाजीवानामपि भगवत एवोपादानकारणत्वात् शुद्धपुष्टिसृष्टितो न भिन्नत्वमिति चेन्न, "अव्यक्ताद् व्यक्तयः सर्वाः" इत्यादिवाक्यैर्मर्यादासृष्टेरुपादानकारणत्वेनाक्षरब्रह्मण एव स्वीकारेणादोषात् । प्रवाहे च मायामनोरूपः समवायी । अत एव "मायामयं वेद स वेद वेदम्" इति सङ्गच्छते । "अथ यदस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहर उत्तरेभ्यः" इत्यादिश्रुतिसूत्रैर्भगवल्लीलायाः सृष्टेर्भगवद्रूपत्वं स्पष्टमेव ।

बृहद्वामनपुराणे—

आनन्दमात्रमिति यद् वदन्ति पुराविदः ।<br>
तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥<br>
श्रुतिभिः प्रार्थितो भगवान् स्वलोकं प्रकृतेः परम् ।<br>
केवलानुभवानन्दमात्रमक्षरमध्यगाम ॥

इत्युपक्रम्य 'किशोराकृतिरच्युतः' इत्यन्तेन वृन्दावनगोवर्धनयमुनादिसर्वभक्तजनसहितं स्वरूपं दर्शितवानिति सर्वस्या एव लीलासृष्टेर्भगवद्रूपत्वं भवति सिद्धम् ।

## शुद्धजीवसृष्टेः स्वरूपम्

यथा भगवान् सच्चिदानन्दमयो लीलार्थं स्वावतारान् धारयति, तथैव भक्तगणोऽपि । किञ्च यथा भगवति ऐश्वर्य-वीर्य-यशः-श्री-ज्ञान-वैराग्यादिगुणा विद्यन्ते, तथैव भक्तेष्वपि । ध्वजवज्रादिलक्षणानि भगवत्तुल्यानि तत्राऽपि ।

## पुष्टिसृष्टेः फलम्

भगवानेव हि फलं स यथाविर्भवेद् भुवि।
गुणस्वरूपभेदेन तथा तेषां फलं भवेत्॥

(षोडशग्रन्थाः)

पुष्टिमार्गीयभक्तानां कृते भगवान् स्वयमेव भक्तगृहे, तद्धृदये, वृन्दावने वाविर्भूय फलं ददाति। परमत्र विशेषोऽयं यस्य भक्तस्य यथावान्छं तथाविर्भूय फ ं धत्ते।

श्रीरामनृसिंहवामनादयोऽवतारा गुणरूपेण प्रकटीभूय भक्तेभ्यो मुक्तावस्थायामपि तथैव फलं धारयन्ति, बाल्यपौगण्डस्वरूपे प्रकटीभूय नित्यलीलायां साक्षाद्धर्मिरूपेण च। अत एव गोपीजनान् तामसत्वविशिष्टान् विधाय हरिः स्वयं तेषां तामसत्वं दूरीचकार।

अधुनाऽपि भगवान् यं भक्तं समुद्धर्तुमिच्छति तं मर्यादातो विधाय पृथक् पुष्टौ प्रवेशं कारयति, जीवावस्थायां तिरोहितान् भगवद्धर्मानाविर्भावयति च।

आसक्तौ भगवानेव फलं दापयति क्वचित्।
अहङ्कारेऽथवा लोके तन्मार्गस्थापनाय हि॥

(षोडशग्रन्थाः)

यदा भक्तोऽन्यासक्तो भवति तदा भगवान् तस्य हिताय शापं दापयति तस्मै। तथा परीक्षिच्चित्रकेतुभ्यां शापदापनं नाधःपातनाय, किन्तु हितायैव। अर्जुनस्याहङ्कारं दूरीकर्तुं पुत्रानानीयार्चयामासाहङ्कारञ्च प्रबभञ्ज। सर्वमेतल्लोकमर्यादारक्षणमेव फलं नान्यत्।

अत एवोक्तम्—

न ते पाषण्डतां यान्ति न च रोगाद्युपद्रवाः।
महानुभावाः प्रायेण शास्त्रं शुद्धत्वहेतवे॥

(षोडशग्रन्थाः)

अस्यार्थः—भक्तेभ्यः शापप्रदानं तेषामवदाकरणार्थमेव, न तु रोगादिस्थितये। तन्निवृत्तौ महाप्रभाविणो भवन्ति, सर्वमेतदनुग्रहस्य फलमेव। उदाहरणञ्चात्र जयविजयादयः।

भगवत्तारतम्येन तारतम्यं भजन्ति हि
(षोडशग्रन्थाः)

अर्थाद्भगवद्भजने तारतम्यं भवति तदा फलेऽपि तारतम्यमेव। पुष्टिमार्गे भजनीयः पुरुषोत्तमः, अत्र नियामकश्च स्नेहः, मर्यादायां भजनीयो विभूतिस्वरूपोऽन्यस्वरूपो वा, किन्तु सर्वं कार्यविध्यधीनमेव। निर्विशेषोपासकानामिन्द्रद्युम्नादीनां गजेन्द्रजन्मन्यपि कर्ममार्गोपासनापेक्षया वैलक्षण्यं स्पष्टमेव।

## पुष्टिभक्तानां लौकिकादिकर्मविचारः

लौकिकत्वं वैदिकत्वं कापट्यात्तेषु नान्यथा।
वैष्णवत्वं हि सहजं ततोऽन्यत्र विपर्ययः॥
(षोडशग्रन्थाः)

पुष्टिभक्ताः स्वीयान् भावान्निगूहितुं नित्यनैमित्तिककाम्यकर्माणि कर्तुं प्रभवन्ति, न त्वासक्त्या, यतो हि तत्र वैष्णवभावस्य स्वभावसिद्धत्वात्।

श्रीविट्ठलेशेनाऽपि प्रज्ञापितमास्ते—
"विजातीयजनाक्रान्ते निजभावस्य गोपनम्" इति।

पुष्टिजीवा अनासक्त्या लौकिकवैदिककर्माणि व्यवहाराय सम्पाद्य निजभावं गोपायेयुः।

बृहच्छिक्षापत्रेऽप्युक्तम्—

यदङ्गीकृतजीवानां न दुःखं लेशतोऽपि हि।
सदानन्दः सदानन्दस्तत्स्मृतिः क्रियतां सदा॥

भगवच्छरणागतजीवानां लेशतोऽपि दुःखं नैव भवति, कदाचिद्भवेत्तद्यपि भगवान् तन्न सहते, अत एव स्मरणं सदा विधेयम्।

हृदयस्थः समस्तानां धुनोति विषयादरम्।
दयादामोदरः श्रीमाँस्तत्स्मृतिः क्रियतां सदा॥

भगवान् सर्वत्राऽस्ति हृद्देशावच्छेदेन तस्य विशेषाविर्भावः, अत एव भगवच्छरणागतानां समस्तानां विषयवासनां सर्वथा विहन्ति हृद्देशस्थः सन् भगवानेव।

अतः सदैव भेतव्यं लौकिकासक्तितो जनैः।
सत्सङ्गमग्रतः कृत्वा नाशनीया न चान्यथा॥

अनेकजन्मवासनावासितो जीवः पुनरपि जननं पुनरपि मरणं प्राप्नोत्येव, अतः सत्सङ्गेन लौकिकी वासना हातव्या। जडभरतादीनामपि लौकिकवासनया हरिणभावतापन्ना, तस्मात् सर्वथा वासनाया नाशः सत्सङ्गौषधेन विधेय इति शिक्षापत्रमतम्।

गुणगानं तु सर्वेषां दोषाणां विनिवारकम्।
गुणगाने ज्ञानमार्गादुत्कर्षः प्रभुणोदितः॥

भगवद्गुणगानस्य समस्तदोषनिवारकत्वाज्ज्ञानापेक्षयोत्कृष्टत्वं गुणगानस्य। तच्च द्विविधम्—पुष्टिमार्गीयं मर्यादामार्गीयञ्च। पुष्टिमार्गे सेवादर्शनविशिष्टं संयोगे गुणगानम्। विप्रयोगे तु वेणुगीतयुगलगीतादिना स्तवनम्। मर्यादामार्गे तु केवलं गुणगानमेव। ज्ञानमार्गेणानाद्यविद्यानिवृत्तौ मोक्षस्य सिद्धत्वेऽपि भगवद्दर्शनं दुर्लभम्। अतो ज्ञानमार्गाद्भगवन्मार्गस्य ज्यायस्त्वम्।

किञ्च सत्सङ्ग-सेवा-श्रीमद्भागवतपाठकरणश्रवणादिपरायणान् भगवदीयान्नैव बाधन्ते दैहिकवाचिकमानसिकदोषाः। उक्तञ्च भागवते—"कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः। कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्॥" इति। आत्मनिवेदनं सर्वदोषशामकम्। ततो भगवत्कृपा, ततः सर्वसिद्धिः।

## असमर्पितवस्तुपरित्यागः

कृष्णात् परं नास्ति दैवं वस्तुतो दोषवर्जितम्।

यथा प्रसन्नगम्भीरपरमपावनगङ्गाप्रवाहपतिता अनिर्मला अपि प्रवाहविशेषा विशुद्धीभूय तीर्थजलात्मना परिणमन्ति, तथैव पुरुषोत्तमश्रीकृष्णचन्द्रार्पितवस्तूनि दोषरहितानि प्रभूय पवित्रीभवन्ति। पवित्रवस्तुग्रहणादेव मनसोऽमलत्वं जञ्जन्यते। सत्त्वशुद्ध्यैव भगवतो हृद्देशे आविर्भवनं स्थिरत्वञ्च प्रजायते। "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृतिः स्मृतिलाभे सर्वग्रन्थीनां विप्रमोक्षः"। श्राद्धादिस्थलेऽपि प्रभुसमर्पितादन्नादेव व्यवहर्तव्यम्।

यागादिकर्माण्यपि प्रभुसमर्पितहविर्विशेषैरेव विधेयानि। न च प्रभुसमर्पितवस्तुनो दानरूपत्वेनाग्राह्यत्वमिति वाच्यम्, दानसमर्पणयोर्भेदस्वीकारेणादोषात्। भगव-

न्मार्गे समेषां पदार्थानां भगवतो जायमानत्वेन तत्स्वामित्वेन च समर्पणं दानं न संभवति। विभिन्नस्वामिकवस्तुनोऽन्यस्मै विप्राय सम्प्रदानत्वेन प्रदेयं भवति, तद्दानपदवाच्यम्।

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्।
पितृभ्यश्चाऽपि तद्देयं तदानन्त्याय कल्पते॥

भगवन्मार्गे यत्किमपि क्रियाकाण्डं भगवन्निवेदनमन्तरा नैव भवितुमर्हति। अनिवेद्य करणेऽन्याश्रयत्वापत्तिः।

त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि॥

(श्रीमद्भागवते ११।६।४६)

भगवत्यात्मनिवेदनादेव सर्वदोषाणां निवृत्तिः, (पुष्टिभक्तिरेव राजमार्गः)। अत एव "कर्मणा कर्मनिर्हारो नात्यन्तिक इष्यते"। ज्ञानमार्गस्य ब्रह्मावाप्तौ कारणत्वमस्ति, परन्तु तस्यातीव दुःसाध्यत्वेन सर्वाधिकाराभावेन च भक्तिमार्गस्यैव ज्यायस्त्वम्। अत्र च ब्रह्मसम्बन्धस्याप्युपयोगः।

अन्यथा सर्वदोषाणां न निवृत्तिः कथञ्चन।
असमर्पितवस्तूनां तस्माद्वर्जनमाचरेत्॥

भगवता शङ्कराचार्येणाऽपि—"सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्" इत्यादिना स्पष्टमेवोक्तम्।

## भगवन्मार्गेऽधिकारनिरूपणम्

"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।...यमैवेष वृणुते तेन लभ्यः" इति श्रुतिमार्गेण यत्र भगवतोऽनुग्रहस्तस्याधिकारत्वं नान्यस्य। कृपाया अप्रत्यक्षत्वेन यत्र यत्र कृपा तत्र पुष्टिमार्गीयरुचिरिति व्याप्तिज्ञानेनानुमीयते सा। एवञ्च पुष्टिमार्गीयफलदित्सासमुद्भूतभगवत्कृपाजन्यपुष्टिमार्गीयरुचिमानधिकारी। ततो मार्गरुच्या क्रियमाणे श्रवणादौ स्वान्ते भगवदावेशः, ततश्चित्तशुद्धिः, ततः पुनः श्रवणादिषु प्रवृत्तिः। तदुक्तम्—

प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।
धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥
धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति ।

ततः परोक्षरुचिरुत्पद्यते । तदनन्तरमात्मनि भगवत्स्फूर्तौ यत्किञ्चिदनुभवविशेषः सम्पद्यते । सैवापरोक्षरुचिस्तया जायमाना श्रवणादिसाधनैः प्रवृद्धा च प्रेमरूपो भवति । स च स्नेहो हरीतरविषयकरागनिवर्तको गृहादिप्रवृत्तिषु प्रतिबन्धकः । भगवद्रुच्युत्पत्त्यनन्तरं क्रियमाणैः श्रवणादिभिः साध्यायाः प्रेमभक्तेः प्रथमावस्था । ततो मध्यमावस्था आसक्तिः । परिपाकावस्था व्यसनपदवाच्या । समेषामभेदव्यवहारात् परस्परं स्वारसिको व्यवहारः, व्यसनात्मकभक्तेरेव मुख्यत्वात् । तस्या एव देवहूतिं प्रत्यात्यन्तिकत्वेनोक्तायाः—

अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ।
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ।

इति वाक्योक्तनिर्गुणभक्त्यनन्तरं सर्वत्र पुरुषोत्तमबुद्ध्युत्पादिकायाः प्रभवत्येव विलक्षणं सामर्थ्यम् । फलं तु नित्यलीलाप्रवेशलक्षणमेव ।

## विशेषरूपेण फलविचारणा

"भगवत्युत्तमश्लोके भवतीभिरनुत्तमा । भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥", "निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः" इत्यादिवचनैः शक्तिभिः सहितस्य भगवतः प्रपञ्चे क्रीडनमेव निरोधः । निरोध्यभक्तानां तामसराजससात्त्विकत्रैविध्याल्लीलाया अपि त्रैविध्यमेव । तया त्रिविधलीलया क्रियमाणा प्रपञ्चविस्मृतिभेदेन पूर्वकभगवदासक्तिरपि निरोधपदवाच्यैव । "हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे" इति वचनेनाऽपि निरोध्यभक्तानामेवाहर्निशं मोदमानत्वं प्रतीयते । निरोधश्च भगवति कृष्ण एव, "कृष्णो निरुद्धकरणा भक्ता मुक्ता भवन्ति हि" इति वचनात् । तत्र व्रजभक्तानां तामसत्वं त्रिविधम्—अविहितभक्तिरसानुसन्धानरूपं पारिभाषिकमेकम् (१), धर्मविशेषरूपं द्वितीयम् (२), भगवन्मायाकृतं तृतीयम् (३) । इदं तामसत्वं तामसप्रकरणे सर्वेषु भक्तेष्वनुगतमस्ति ।

त्रयाणामपि तामसत्वानां भगवद्विशेषरूपत्वमेव। वैष्णवीयमायाकार्यस्य तामसत्वस्य भगवान् स्वयमेव नाशं करोति, ततश्चालौकिकसुखानुभवः। "इति नन्दादयो गोपाः कृष्णरामकथां मुदा। कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनाम्॥", "शय्यासनाटनालापस्नानक्रीडाशनादिषु। न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः॥" इत्यादिना तथैव निरूपितत्वात्।

तथा च प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिसम्पादिका प्रपञ्चाधिकरणिका भगवल्लीला निरोधपदार्थः। स च भगवद्धर्मः। तज्जन्यप्रपञ्चविस्मृतिपूर्वकभगवदासक्तिर्जीवधर्मः। तामसत्वस्य नाशकरणानन्तरं राजसत्वस्य नाशं करोति। तन्नाशे केवलं सत्त्वस्यैवोदयस्तदा सात्त्विकाः उच्यन्ते। अत एव कुरुक्षेत्रप्रसङ्गे "गेहञ्जुषामपि मनस्युदियात् सदा नः" इत्येव प्रार्थितम्। अन्यथा पुरः स्थिते भगवति व्रजे भगवदागमनं प्रार्थयेयुः। ततः सत्त्वनिवृत्तौ निर्गुणावस्था प्रजायते। तस्यां सत्यां नित्यलीलाप्रवेशः, सैव मुक्तिपदवाच्या—"मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः" इति। ततश्चाश्रयप्राप्तिरिति विद्वद्भिर्विभावनीयम्॥

———

# अद्वैतवेदान्तो गणतन्त्रसम्मता समाजव्यवस्था च

श्रीजानकीवल्लभभट्टाचार्यः, कलकत्ताविश्वविद्यालयस्थः।

नहि किमपि मतमाकस्मिकं भवति। आचार्यशङ्करात् प्राचीनकाले नास्तिकचार्वाकसम्प्रदायस्य लौकिकदृष्ट्या बहुमुखी समालोचना एकतो वैदिकसमाजं हीनबलं कर्तुमुद्यता, अपरतो बौद्धजैनदार्शनिकानामलौकिकलौकिकभागे संस्कार-प्रयाससहकृतनिरासप्रकारः सर्वथा दुर्विषहोऽभूत्।

चार्वाकाणां लौकिकमुखे प्रवृत्त्युत्पादनम्, ब्राह्मणशासनविलोपाय तेषामुद्यमः; प्रमाणशास्त्रस्य मूले आघातोऽभीप्सितः। वितण्डापथमवलम्ब्यैव ते प्रतिपक्षमत-निरसने धृतव्रताः। खण्डनशैलीचतुरास्ते साधारणजनमनोगतिमनुसृत्य काममर्थं च परमं पुरुषार्थं वर्णयन्ति स्म। धर्मो मोक्षश्चालीकं वस्तु। देहादिव्यतिरिक्त आत्मा नास्ति। ईश्वरोऽसिद्धः। धर्माद्यलौकिकवस्तुप्रमापका वेदा अप्रमाणम्। योगिनां लोकोत्तरं प्रत्यक्षं नास्ति। अतीन्द्रियपदार्थवादः सर्वथा परित्याज्यः। लौकिकं जीवनं सुखावहं कार्यम्। सामाजिकवैषम्यविलोपाय पराङ्मुखं वेदादि-शास्त्रम्, अतः सामाजिकभेदप्रवर्तकशास्त्रस्य मूले कुठाराघात एव कार्यः।

शासकसम्प्रदायः सामाजिकभेदरक्षणे तत्परः। चार्वाकाश्च एतादृशभेदविलो-पाय दृढसङ्कल्पाः। प्रचलितव्यवस्थाविलोपमकृत्वैव न कोऽपि नवीनादर्शं प्रतिष्ठा-पयितुं प्रभवति। अत्रान्तरायः शासकवर्गः। तस्य प्रधानमस्त्रं वेदः। सामाजिकमर्यादा-सम्पन्नाः, तेषां हितानुध्यायिनो ब्राह्मणाश्च नवादर्शविरोधिनः। सामाजिकचिन्ता-धारा द्विधा विभक्ता। विरुद्धयोर्मतयोः समन्वयः प्रार्थ्यते शान्तिप्रियैः सामाजिकैर्लोक-क्षयकारिविग्रहपरिहाराय।

अस्मिन् संशयाकुले जनसमाजे शान्तिप्रदीपं प्रज्वाल्य जैनबौद्धमतद्वयमावि-रासीत्। बौद्धाः स्वप्रतिष्ठापरिपालनाय योगमहिमानं स्वीकृत्यापि प्रमाणशास्त्रं प्राधा-न्येनावलम्बितवन्तः। विनयविशुद्धधर्माचरणे एव सामाजिकदृष्टिर्निवेशिता। किन्तु बौद्धदर्शनेन प्रचारितः क्षणिकत्ववादो नैरात्म्यवादः सर्वशून्यतावादश्च सामाजिकचित्तानि व्याकुलानि कृतवन्तः। प्रमाणशास्त्राणां परस्परसिद्धान्तखण्डने

रतानामप्रतिष्ठितत्वं सुव्यक्तमभवत्। राजधनिकाश्रितत्वं श्रमणानां समाजविधिशासनविधिसंशोधने विमुखताकारणमभूत्। औदासीन्यस्य फलं स्मृतौ वेदेषु च पुनः श्रद्धोदयः। प्रमाणशास्त्रदौर्बल्यमलौकिकप्रमाणं प्रत्यनुरागं समजनयत्। अधुना वेदस्य पुनः प्रतिष्ठा कालोचितवाक्यविन्यासमात्रमपेक्षते।

उद्योतकरकुमारिलभट्टप्रमुखा वादरसिका युक्तिबाणैर्बौद्धशास्त्रदेहेषु रन्ध्रनिचयं सम्पादितवन्तः। दिङ्नागधर्मकीर्तिप्रभृतिबौद्धानां पुनः पुनराक्रमणमाश्रयणीयमतदुर्गं सम्बोधयामास। बाह्यवस्तुसत्यता, अथवा विज्ञानसत्यता, अथवा उभयसत्यता ग्राह्येति विवेचनस्य सम्यक् क्षेत्रं विनिर्मितम्। सामाजिकचित्तविरोधेन परिणततरशतप्रकाशस्योपयुक्तोऽवसर आयातः। वेदप्राधान्यख्यापनं कथं युक्तिसिद्धं स्यादिति मार्गनिर्णयस्यायमेवावसरः। सर्वत्र व्यभिचारान् दृष्ट्वा चरित्रधनाः क्षुब्धा नवधर्मं प्रतीक्षन्ते स्म। जनसमाजे भोगेष्वनासक्तेषु ज्ञानिषु संन्यासिषु श्रद्धातिशयं परिलक्षितम्।

पूर्ववर्णितसर्वविषयानाकलय्य श्रीशङ्कराचार्यपादाः सच्चिदानन्दस्वरूपं ब्रह्मेति वेदान्तसिद्धान्तं प्रतिपादयामासुः। ब्रह्म परमात्मा। स च दृशिरूपः। यद्यपि लौकिकज्ञाने ज्ञाता ज्ञेयं ज्ञानं चेति भेदत्रयं सम्यक् स्फुरति, तथापि ज्ञानमेवात्र प्रधानम्। यतो ज्ञानाश्रयो ज्ञाता ज्ञानस्य विषयो ज्ञेयं वस्तु। एवं तयोर्ज्ञानसारपक्षत्वमवश्यमेव वाच्यम्। अत एव तयोर्ज्ञानाधीनसिद्धेर्ज्ञानमेव मूलं तत्त्वम्। तत्त्वज्ञानं निराश्रयं निर्विषयं स्वयं सिद्धं च भवति। वस्तुभूतस्य ज्ञानस्य दृशिशब्देन व्यवहारः क्रियते। सा च दृशिः सत्स्वरूपा, आनन्दस्वरूपा च। सा च स्वयंप्रकाशा सती सर्वप्रकाशिका। सा च दृशिः परमात्मेति ब्रह्मेति च कथ्यते। सा विश्वप्रबन्धस्य आश्रयः। दृशिरुपाधियोगात् सविषयकसाश्रयज्ञानात्मिका भवति। देहं सविषयं साश्रयं लौकिकज्ञानं प्रमाणप्रमान्तकं कल्पितं भवति। सर्वकल्पनाधिष्ठानभूता दृशिरेव। एवं सर्वजगन्मूलभूतं वस्तु दृशिरेव। यथा कारणं व्यापकतया कार्यगतविशेषरहितं सर्वकार्यसामान्यभूतम्, एवं ब्रह्मापि सर्वकार्यकारणमेव सर्वविशेषरहितं भवति। अत एव ब्रह्म निर्गुणं भवति। यतो ब्रह्मनिर्विशेषं भवति, अतस्तत् सजातीयविजातीयस्वगतभेदत्रयविरहितं सदद्वितीयं भवति। विश्वस्य मूलकारणतया चैतन्यरूपब्रह्मणो नित्यत्वम्। मूलकारणस्यानित्यत्वे जगत्याकस्मिकत्वप्रसङ्गो दुर्वार एव। सन्मात्र-

रूपस्य चैतन्येन सहाभिन्नत्वम्। नहि सन्मात्ररूपं चैतन्यस्य विषयो भवितुमर्हति, विषयविषयिभावस्य भेदघटितत्वात्।

अपि च, ब्रह्मसाक्षात्कारकाले आनन्दाभिव्यक्तेस्तात्त्विकतया लोकोत्तरानन्दस्य ब्रह्मस्वरूपत्वम्। वेदस्य पारमार्थिकसत्यत्वाभावेऽपि पारमार्थिकसत्यवस्तु सूचने सामर्थ्यमस्ति, मिथ्याभूतस्य स्वप्नस्य यथार्थपदार्थज्ञापने सामर्थ्यस्यानुभूयमानत्वात्। आनुपूर्वीविशिष्टवेदवाक्यानां जन्यत्वेऽपि प्रवाहरूपेण नित्यत्वम्। वेदा ईश्वरेण स्मर्यमाणाः सन्तः प्रकाशिता भवन्ति। यथा पूर्वस्मिन् सर्गे ते आसन् तथाऽस्मिन्नपि सर्गे भवन्ति। अतो वेदानां शब्दविषयादिगतभेदलेशोऽपि नास्ति। युक्त्याप्ययं सिद्धान्तः समर्थितो भवति। यावतीयमतिवैचित्र्यं स्वीकृत्यैव परमतत्त्वमरुन्धतीप्रदर्शनन्यायेन प्रतिपादितम्।

तत्त्वप्रवेशसोपानश्रेणी प्रथमभूमिकातश्चरमभूमिकां यावद् यथायथं शृङ्खलाबद्धभावेन सुसन्निवेशिता। परमतत्त्वस्य ऐक्यात् सम्भावितसोपानमार्गस्याप्यैक्यम्। सम्भाव्यमानसर्वबुद्धिवैचित्र्यान्तर्भावेनैव एवमुक्तम्। वक्तृविशेषप्रणीतागमस्य वेदापेक्षया एकदेशदर्शित्वमवश्यम्भावि, अतो वेदस्य सर्वेषु कारणेषु श्रेष्ठत्वम्। सर्वो योगलब्धोऽलौकिकसाक्षात्कारो वेदेष्वेव संगृहीतः। अतः परमसूक्ष्मतत्त्वसाक्षात्कारार्थं वेदमात्राश्रयग्रहणमेव प्रकृष्टः पन्थाः। यद्यप्यद्वितीयं ब्रह्म पारमार्थिकं तत्त्वम्, तथापि भावरूपं त्रिगुणात्मकं सदसद्भ्यामनिर्वचनीयमनिन्द्यज्ञानमेव स्वप्रभावेणानुक्तं चैतन्यमावृत्य जीवेश्वररूपेण द्विधा विभक्तमिव प्रदर्शयति।

जीवेश्वरावधिकृत्य शङ्करशिष्याणां मतभेदो दृश्यते। तत्सर्वं मतमाभासावच्छेदप्रतिबिम्बादिकं नालोच्यते। तज्ज्ञानाद् मायाविद्ययोर्भेदोऽपि सम्प्रदायप्रसिद्धो नालोच्यते। अज्ञानं जगत्प्रपञ्चस्य मूलम्, ब्रह्म चाधिष्ठानकारणम्। एवं जगदाविर्भावे विवर्तवाद आश्रितः। अज्ञानं चैतन्येन साक्षात् प्रकाश्यते। अज्ञानसत्ता शास्त्रगम्याप्यनुभवसिद्धा। "अहं ब्रह्माऽस्मि", "नेह नानास्ति किञ्चन" इत्यादि वृत्त्यात्मकज्ञानेनाज्ञानं निवर्त्यते। मोक्षदशायां जीवेश्वरभेदस्याविद्याया ब्रह्मणा सह अविद्यायाः सम्बन्धस्य च स्वरूपेण नाशो भवति। अयं जीवस्य ईश्वरस्योपाधेरेव स्वरूपेण नाशो भवति, न तयोः। अयमेवाद्वैतवेदान्तमतस्य संक्षेपः।

तद्यथा—चैतन्यस्य सर्वप्राथम्यं नित्यचैतन्यस्य स्वरूपात्मनः सर्वज्ञानो-

पजीव्यत्वेन स्वतः सिद्धत्वञ्च। सर्वस्य ब्रह्माभिन्नत्वमिति सिद्धान्तस्याकर्षिणी शक्तिरपूर्वा। सर्वेषां पदार्थानामुत्कर्षपराकाष्ठाप्राप्तियोग्यता विद्यते। जीवो ब्रह्माभिन्न इति सिद्धान्त आदरं लभते। सर्वगामि ऐक्यञ्चास्य सिद्धान्तस्य महत्त्वव्यञ्जकम्। त्रिधा विभक्ताः सत्पदार्था अद्वैतवादं महणीयं कुर्वन्ति। जगतो व्यावहारिकसत्ता स्वीकृता। आमोक्षं बाह्यपदार्थानां सत्यत्वमभ्युपगतम्। लौकिकानां जगतः सत्यत्वे प्रतीतिर्न विचालिता। जगतः पारतन्त्र्येण नास्तिकवादः परिहृतः। मोक्षे ब्रह्माभेदाधिगमेन जीवो वरिष्ठो गरिष्ठश्च भवति। सर्वोत्कृष्टमोक्षलाभे कस्य नाग्रहो भवेत्। जडवादं निराकृत्य ब्रह्मवादं च संस्थाप्याद्वैतवादिनः सामाजिकचित्तनदीप्रवाहं निवृत्तिप्रवणं कर्तुमयतन्त।

अद्वैतसिद्धान्तेन सह गणतन्त्रसम्मतादर्शस्य संवादो न परिलक्ष्यते। बाह्यप्रकृतिजयेन क्रमशः सौख्यलाभो नाद्वैतदर्शनेऽनुमोदितः। चिरशुद्धं नित्यमुक्तं ब्रह्म जीव एव तथा। अज्ञानकृतभ्रमवशाज्जीवस्य बन्धनानुभूतिः। अस्माकं गणतन्त्रे आस्थाभाजां विश्वासः शिक्षाप्रसारेण मनुष्याः समाजकल्याणार्थं सम्भूय कर्तव्यान्याचरन्त ऐक्यमत्येन विशालदेहवत् सुसम्बद्धं समाजं प्रतिष्ठापयिष्यन्तीति। स च समाजः सर्वेषां सौख्यावहो ज्ञानदीप्तिविवृद्ध्या मनुष्यत्वविकाशकरो भविता, विघ्नेष्वन्तरायेषु प्रतिपक्षतां विदधत्स्वपि। अद्वैतवादिनस्त्वात्मसाक्षात्कारेणैव परमपुरुषार्थाधिगमो भवतीति सश्रद्धं ख्यापयन्ति। ईश्वरः सर्वनियन्ता, सर्वे च प्राणिन ईश्वरशासनं शिरसि निधाय स्वस्वकृत्यानि निर्वाहयन्तीत्यद्वैतवादे दैवशासनं कीर्तयन्ति। अस्य फलं निपीडितानां सर्वास्ववस्थासु सन्तोषः, संग्रामपराङ्मुखता च।

अद्वैतवादे व्यक्तेः प्राधान्यं परिदृश्यते। समाजस्य संघशक्तेरात्मसाक्षात्कारादिपरमकृत्ये काप्युपयोगिता न लक्ष्यते। चरमकृत्येषु समाजस्यावदानं साकल्येनास्वीकृतम्। मठादिस्थापनं बहिरङ्गकृत्यसाधनम्। अन्तरङ्गसाधने समष्टिशक्तेर्नास्ति उपयोगितालेशोऽपि। ब्रह्मदर्शनस्य फलं सर्वत्र समदृष्टिः। ब्रह्मदर्शिनो भेदबुद्धिस्तिरोहिता भवतीति तु कथ्यते, परन्तु ब्रह्मसाक्षात्कारार्थं समबुद्धेः क्रमशः प्रसारो नोपदिष्टः। आदौ सर्वे नगरवासिन आत्मसमाः, अनन्तरं सर्वे मण्डलवासिन आत्मसमाः, अनन्तरं सर्वे देशवासिन एवं भवन्ति। सर्वे मनुष्या आत्माभिन्नाः। तेषां सुखानि दुःखानि च समवेतानि भवन्ति। अद्वैतवादे परमपुरुषार्थः सिद्धवस्तु।

स च परिनिष्पन्नस्वरूप एव। गणतन्त्रे पुरुषार्थः साध्यः। कृत्यनिष्पत्तौ फलमुपलभ्यते। फलदृष्ट्या च कृत्यं विचार्यत एव, तारतम्यं च निर्णीयते। तारतम्यनिर्णयस्तु मानदण्डः। अद्वैतवादे फलगततारतम्यं न विचार्यते। तत्त्वं नित्यं निरतिशयं स्वयंसिद्धं च भवति। फलसाधनं तु विचार्यते। तस्यान्तरङ्गत्वं बहिरङ्गत्वं च विचार्यते। फलप्रापकत्वतारतम्यं च विचार्यते। क्व च तारतम्यविशिष्टं साध्यं फलम्? क्व च निरतिशयं सिद्धं फलम्? तयोर्महान् भेदो वर्तते। अद्वैतशास्त्रदृष्ट्या गणतन्त्रमज्ञानपरिकल्पितमपारमार्थिकम्। अधुनातनसमाजपुष्टिसाधनेऽद्वैतवादादर्शो नोपयोगीति तु सत्यमेव।

सामाजिकानां पापपुण्ययोः स्थिराभेदबुद्धिः कुत्सिताचरणाद् निवृत्तौ आनुकूल्यं दधाना परिदृष्टा। अद्वैतवादोऽज्ञजनैः परिगृहीतः सन् तादृशभेदबुद्धिं विचारान्नयति। तादृशभेदबुद्धौ विकल्पितायां पापाचरणाद् भीतिरपि व्यपैति। एवं सति धर्माधर्मविचारबुद्धिर्मन्दप्रभा सती पुण्यपापसेतुं विशीर्णयति। धार्मिकसमाजे ईश्वरे भक्तिः परमोत्कर्षसाधिका। ईश्वरस्य लोकोत्तरमहिमा भक्तानुग्रहो लोककल्याणार्थं लौकिकरूपपरिग्रहोऽसाधुनिग्रहोऽकुण्ठिताभयदानं च सामाजिकानां चित्तनदीगतिं नियमयति। मायोपहित ईश्वरो न तादृशश्रद्धाभाजनम्। स हि अज्ञः प्रतारको वा भवति, मायोपहितत्वात्। स्वतन्त्रेश्वरवादखण्डनं धर्मे श्रद्धां परिम्लानयति। निर्गुणं ब्रह्म न ईश्वरस्थलाभिषिक्तं भवितुमर्हति। अतोऽद्वैतवादो धर्मशिक्षाप्रतिबन्धको भवति।

अद्वैतवादस्य सामाजिकचित्तेषु कार्यकारितां विलोक्येयमेव प्रतीतिरुदेति यदयं वादोऽज्ञजनस्य क्रियाकलापं समर्थयति, तेषु गौरवमर्पयति, अनुचितसंस्कारान् परिपोषयति। वर्णभेदव्यवस्थां द्रढयति, विविधसम्प्रदायविद्वेषप्रमाणेन चित्तस्यानौदार्यं प्रोत्साहयति, एवं च सर्वथा सामाजिकप्रगतिं प्रतिरुणद्धि। समाजव्यवस्थासंस्कारप्रातिकूल्याचरणमेवास्य वादस्य फलमिति सामाजिकजीवने परिलक्षितम्।

स्त्रीणां वेदपाठेऽधिकारो न स्वीकृतः। तासां शूद्राणां च मोक्षेऽधिकारः प्रतिषिद्धः, स्त्रीशूद्रदेहानां साजात्यं च निरूपितम्। निषेधकारणं निभृतम्। तदनुसन्धाने प्रवृत्तिरपि व्याहता। एवमनधिकृतानां कान्तावत् परमपुरुषार्थः। कथमेवं वैदिकसिद्धान्तः? कया युक्त्या स सिद्धान्तो दोषविनिर्मुक्तः। वेदेऽनार्याणामस्पृ-

श्यता च दृश्यते। परन्तु कतिषु यज्ञेषु यज्ञोपकरणं तदधीनम्। उपकरणानां संशोधनार्थमुपदेशो दत्तः। एवं समाजो बहुधा विभक्तः।

अद्वैतसिद्धान्तानुसारेणाद्वयवाद एव मुख्यसिद्धान्तः। एवं सति समाजविज्ञाने एकत्वबुद्धिव्याघातकभेदप्रथाप्रवर्तनं कथं स्यात्। अद्वैतवादिनां समाजविज्ञानदर्शनयोः संगतिर्नास्ति।

बौद्धदर्शनं लोकचित्तवृत्तिमनुसृत्य समाजधर्माचरणादिनिष्ठान् कतिपयान् दोषानुद्धर्तुं कृतयत्नमासीत्। कालक्रमेण कतिषु विषयेषु बौद्धशासनमवसितम्। वेदेषु श्रद्धालुभिस्तत्र तत्राधिपत्यं पुनर्लब्धम्। रुचिभिर्वर्णाश्रममहिमा प्रतारितः। दार्शनिका वेदप्रामाण्यस्थापनार्थं प्रपतिताः। ते तु भिन्नप्रस्थाना आसन्। बौद्धाः सन्तुष्टा नाभवन्। बौद्धप्रदर्शितमार्गेण बौद्धा निरसनीयाः। स एव प्रकृष्टः पन्थाः। तथा सति संस्कारमूलं शिथिलं स्यात्। बौद्धानां राजशासनस्वीकारेऽसम्मती रुद्धवेगा स्यात्। अद्वैतदर्शनस्य निभृतमुद्देश्यं बौद्धदर्शनपराभवसाधनेन सामाजिकसंस्कारविलोपसाधनम्। गणतन्त्रसम्मतसमाजव्यवस्थायामद्वैतवेदान्तस्य स्थानं नास्ति॥

——

# सारस्वती सुषमा

वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१५ वर्षः } फाल्गुनपूर्णिमा, संवत् २०१७ { ३-४ अङ्कौ

## आगमसंस्कृतिः

आस्थानविद्वान् वे०ब्र०श्रीएम्० जि०नञ्जुण्डाराध्यः, मैसूरस्थश्रीमन्महाराजसंस्कृतमहापाठशालायां वीरशैवागमप्राध्यापक ।

सम्पूर्वक(डु)कृञ्धातोः भावार्थे घञि सुटि वृद्धौ 'संस्कार'-शब्दः निष्पद्यते ।

आत्मशरीरान्यतरनिष्ठविहितक्रियाजन्योऽतिशयविशेषः संस्कारः । संस्कृतिः संस्करणमित्यनर्थान्तरम् । भावे ल्युटि संस्करणं स्त्रियां भावे क्तिनि संस्कृतिरिति ।

मानवस्य मृगस्य चान्तरप्रदर्शनमेव संस्कृत्या वैशिष्ट्यम । अर्थाद् आत्मविकास एव संस्कृतिः । सा च संस्कृतिः ( Culture ) बाह्यवेषभूषणादिरूपनागरिकतातः ( Civilization ) भिन्ना । आत्मनो जन्मान्तरीयवासनाविशेषात् तदन्तःकरणेऽङ्कुरिता सती चित्तवृत्तिं बुद्धिव्यापारं च रूपयित्वा अन्तस्सत्त्वरूपेण समुज्ज्वलतीयं संस्कृतिः । क्षीरे नवनीतमिव सा नरस्य जीवनव्यापारेष्वोतप्रोततयाभिव्याप्ता प्रगतिमार्गमुपदिशति ।

"असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माममृतं गमय" इति श्रुतिरस्या व्यापारविशेषमेत्रोपबृंहयति।

गत्यर्थक'गम्लृ'धातुनिष्पन्न आगमशब्द आगमनार्थकः। अर्थात् 'परम्परया आगतोऽयम् आगम' इत्यवगम्यते। किञ्च "ये गत्यर्थकास्ते ज्ञानार्थकाः" इत्युक्त्या आङ्पूर्वकस्यास्य 'गम्लृ' धातुनिष्पन्नस्य 'आगम'शब्दस्य पूर्णज्ञानमपीत्यर्थो बोध्यते। 'विद् ज्ञाने' इति 'विद्'धातुनिष्पन्नस्यापि 'वेद'शब्दस्य ज्ञानमेवार्थः। तथा च आगमो वेदोद्देशमेव साधयतीत्यवगम्यते। अर्थाद् वेदोक्तानां मन्त्राणाम् ऋषिच्छन्दोदेवता-पल्लवादिनिरूपणद्वारा मन्त्रानुष्ठानोपयोगे आगमाः प्रवृत्ता इत्यवधार्यते। अत एव एते 'निगमागमाः' इति कथ्यन्ते। किञ्च वेदोऽपि तत्र तत्र 'आगम' इत्येवाभिधीयते।

'तन्त्र'शब्दोऽपि आगमस्य पर्यायवाचकः। सूक्ष्मतन्त्रे—"श्रुतितन्त्रम्" इत्यभिहितम्। "तन्यते विस्तार्यते ज्ञानमनेन त्रायते च तन्त्रम्"। अर्थात् तन्त्रेण मानवस्य ज्ञानविकासस्तदुद्धारोऽप्युपजायते।

तनोति विपुलानर्थान् मन्त्रतन्त्रसमन्वितान्।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥

मन्त्रतन्त्रसमन्वितार्थनिरूपणद्वारा मानवमुद्धरतीत्यन्वर्थकोऽयं तन्त्रशब्दः।

## भारतीयसंस्कृत्या वैशिष्ट्यम्

निगमागमसंवलितेयं भारतीया संस्कृतिः। विश्वविख्यातेयं स्वकीयौदार्यादि-गुणगणगरिम्णा, विश्वोद्धरणवैशिष्ट्येन च। इयं च संस्कृतिर्नारङ्गफलेनोपमयितुं शक्यते। बाह्यदृष्ट्या – चैकरूपं नारङ्गफलं तद्विस्रंसने अन्तस्संभृतैरनेकैरंशैः संवलितं दृश्यते। विभिन्नेष्वप्यंशीभूतेषु शकलेषु रसरुच्यादयो यथा चैकरूपास्तथैवात्र भारते विद्यमानेषु विभिन्नधर्मेषु संस्कृतिरेकैव। तथा चोक्तं शिवभक्तचिन्तामणिना पुष्पदन्तेन—

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

(महिम्नस्तवे–७)

रेणुकभगवत्पादाचार्यैरप्यगस्त्यं प्रति—

अगस्त्य खलु सिद्धान्ता विख्याता रुचिभेदतः ।
भिन्नाचारसमायुक्ता भिन्नार्थप्रतिपादकाः ॥
सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
एतानि मानभूतानि न हन्तव्यानि युक्तिभिः ॥
(सिद्धान्तशिखामणौ ५, ५, ३-४)

## वेदागमयोः समप्रामाण्यम्

"आप्तोक्तिरागमः सोऽपि" इति पौष्करवाक्याद् आगमानामपि वेदवदाप्तवाक्यत्वं युक्तमेव । मनुस्मृतिव्याख्याता कुल्लूकभट्टस्तु—"वैदिकी तान्त्रिकी चैव द्विविधा श्रुतिः कीर्तिता" इति जगाद । तेन वेदागमाः श्रुतित्वेन निर्दिष्टाः । श्रीपतिपण्डितभगवत्पादाचार्यैरपि स्वकीये सूत्रभाष्ये शास्त्रयोनित्वाधिकरणे—

अष्टादशानामेतासां विद्यानां ब्रह्मवर्त्मनाम् ।
आदिकर्ता शिवः साक्षात् शूलपाणिरिति स्थितिः ॥
विमर्शरूपिणी शक्तिः शिवस्य परमात्मनः ।
निगमागमरूपा स्यात् सर्वतत्त्वप्रकाशिनी ॥
(श्रीकरभाष्ये, अ. १ अ. ३)

एवमेव प्रथमाधिकरणेऽपि—"किञ्च, एककर्तृत्वेन वेदमूलत्वेन कामिकादिशिवागमानां वेदवत्प्रमाणत्वाच्च तदुभयप्रतिपाद्यत्वेन शैवमतं वैदिकमेव । तदुक्तं सिद्धान्तागमे—

वेदः प्रधानं सर्वेषां सांख्यादीनां महामुने ।
वेदानुसरणादेषां प्रामाण्यमिति निश्चितम् ॥
पाञ्चरात्रस्य सांख्यस्य योगस्य च तथा मुने ।
वेदैकदेशवर्तित्वं शैवं वेदमयं मतम् ॥
वेदैकदेशवर्तिभ्यः सांख्यादिभ्यो महामुने ।
सर्ववेदानुसारित्वात् प्रमाणं वेदवत् सदा ॥

इत्यादिना वेदमूलत्वाद् आगमानां प्रामाण्यं प्रतिपाद्य वेदोपनिषदुक्तमन्त्रानुष्ठानाङ्गन्यासादिनिदर्शकत्वादप्यागमानां प्रामाण्यं प्रतिपादितम् इति।

"किञ्च मुण्ड-माण्डूक्य-छान्दोग्य-बृहदारण्यक-कठवल्ल्यादिसर्वोपनिषत्सिद्ध-जीवब्रह्मैक्यव्यवस्थापकत्वेन, षडक्षर-त्र्यम्बक-गायत्र्यादिसर्वमन्त्राणां कराङ्गन्यास-ध्यानविधायकत्वेन, गौतम-भारद्वाज-शौनकाद्याचारविषयककर्षणादिप्रतिष्ठान्तोत्स-वादिविधायकत्वेन, 'भूत्यै न प्रमदितव्यम्', 'अग्निरिति भस्म' इत्यादियजुराथर्वण-बृहज्जाबाल-कालाग्निरुद्रोपनिषदादिप्रतिपादितभूतिरुद्राक्षधारणविधायकत्वेन, यजुरा-रण्यान्तर्गतसद्योजातादिपञ्चब्रह्ममन्त्रप्रतिपादकत्वेन, "अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमसि" इति सिद्धवर्ण-पद-मन्त्र-कला-भुवन-तत्त्वात्मकषडध्वप्रतिपादकत्वेन, 'या ते रुद्र' 'यच्छन्दसां सोमा रुद्र' इत्यादिश्रुतिसिद्धलिङ्गधारणविधायकत्वेन, 'अर्चत प्रार्चत', 'तमुष्णुहि' इति मन्त्रार्थबोधकपूजाविधायकत्वेन च श्रुत्यागमानां समानार्थत्वात् साक्षाद्वैदिकत्वम् आगमानां निष्प्रत्यूहम्" इत्यादिना समर्थितं च। उक्तं च श्रीकण्ठशिवाचार्यैरपि—"वेदागमयोर्भेदं न पश्यामः" इति। तिरुमूलरमहाशयोऽपि (क्रि० श० ६०० ) तिरुमन्दिराख्ये द्रामिडप्रबन्धे वेदागमयोः समप्रामाण्यं प्रतिपाद्य वीरागमप्रतिपादितवीरमाहेश्वरमतोक्तं षट्स्थलसिद्धान्तं सूचयति। ब्रुवन्ति च डा० रमणशास्त्रिणः—"शैवमतम् आगमान्तम्" इति। सर् जान् उड्राफमहोदयः शक्ति-शाक्ताख्ये स्वकीये प्रबन्धे—"वेदविषयकाः केचिद् दुराशया आगमैर्निर्मूलिताः" इत्यवदत्। अद्यतनभारतमहाराष्ट्रस्य उपाध्यक्षा डा० एस्० राधाकृष्णन्महोदयास्तु "विवेकिनोऽस्मत्पूर्वजा वेदागमान् समयोजयन्" इति साभिप्रायमवोचन् ( कमला लेक्चर्स् )।

## आगमविभागः

आगमा बहुधा प्रोक्ता शिवेन परमात्मना।
शैवं पाशुपतं सोमं लाकुलं चेति भेदतः ॥९॥
तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम्।
वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् ॥१०॥
शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम्।
सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम् ॥११॥

वेदधर्माभिधायित्वात् सिद्धान्ताख्यः शिवागमः ।
वेदबाह्यविरोधित्वात वेदसंमत उच्यते ।।१२।।
( सि० शिखामणौ प० प )

इत्यादिना सुस्पष्टमेव सर्वेषां नास्तिकानाम् आस्तिकानां च आगमानां विभागः। एवं सौरगाणपत्यादितन्त्राण्यपि श्रूयन्ते। किञ्च पाञ्चरात्रागमाः १०८, शाक्तागमाः ६४, उपतन्त्राणि ३२७, शैवतन्त्राणि २८, उपतन्त्राणि १२७, वैष्णवतन्त्राणि ७५, उपतन्त्राणि २०५, इत्यादिविभागाश्च श्रूयन्ते।

## आगमानां कालविचारः

यद्यप्यागमोक्तभाषाशैल्यादिसमालोचनेन तद्गताचारविचारपरिशीलनेन च आगमानामर्वाचीनत्वं सुस्पष्टं ज्ञायते, तथाप्यागमिकः सम्प्रदायः प्राचीन इत्यवगम्यते। यतः पाञ्चरात्रागमोक्तः पूजाविधिः क्रि० पू० द्वितीयशतककालिकत्वेन ज्ञायमानस्य महाभारतस्य शान्तिपर्वणि २५७ तमेऽध्याये निबद्धः। क्रि० पू० पञ्चमशतककालिकत्वेन निर्दिश्यमानायां भगवद्गीतायां पाञ्चरात्रागमोक्तं वासुदेवमहत्त्वं दृश्यते। पाञ्चरात्राणां 'सात्वत'-संज्ञा ऐतरेय-शतपथब्राह्मणयोः निरूपिता। अन्यच्च भगवद्गीतायां शैवागमोदिता बहवो विषया यथाश्रुतं निर्दिष्टाः। एभिः कारणकलापैः पाञ्चरात्रागमाः क्रिस्तोः पूर्वं चतुर्दशशतकात् पूर्वजा इत्यवगम्यते।[1] डा० एस० सि० नन्दीमठमहोदयास्तु—"पाञ्चरात्रागमेषु शैवागमानां प्रस्तावो दृश्यते। परन्तु वैष्णवागमानामुल्लेखः शैवागमेषु न दृश्यते, इत्यतः शैवागमा वैष्णवागमापेक्षया प्राचीनतराः"[2] इत्यवदन्। अत एव शैवागमाः कनिष्ठं द्विसहस्रवर्षात् पूर्वं रचिता इति श्रीरं० दिवाकरमहोदया लिलिखुः।[3] क्रि०श०पञ्चमशतकीयासु काञ्चीशिलालेखासु २८ शैवागमानामुल्लेखो दृश्यते।[4] तत्र शास्त्रेषु वर्णितो राजा 'गुणभरः'

---

१. संस्कृतवाङ्मयचरितम् (पृ० ७१) मल्लादिसूर्यनारायणशास्त्रिविरचितम्। आन्ध्रसंवत्सरादिसञ्चिका (पार्थिवः)।

२, शिवानुभवः ( सं ६. सं १. एप्रिल् १६३१ )

३. वचनशास्त्ररहस्यम् , पृ० २८६-२६६

४. इण्डियन् फिलासफि, भा. २.

'आगमप्रमाणः' इति। 'अत्यन्तकामो' नाम अपरो नृपः 'विदितबहुनयः शैवसिद्धान्तमार्गः श्रीमानत्यन्तकामः हृतसकलमलो दुर्धरः पल्लवानः'' इति चोपर्युक्तैरुल्लेखैश्चारित्रिकदृष्ट्यापि आगमधर्म ततोऽपि प्राचीन इति संसूच्यते। अन्यच्च महाकविकालिदासविरचिते शाकुन्तलेऽपि कण्वाश्रमस्था वटवः वैखानसागमानुयायिन इति निर्दिष्टाः। श्रीमन्निजगुणशिवयोगिविरचिते विवेकचिन्तामणौ क्रि० श० ( ११०० ), तिरुमूलरकृते तिरुमन्दिरे (६००), राजानकरामकण्ठस्य (९००-९२५) मतङ्गवृत्तौ, उमापतिशिवाचार्यस्य पौष्करभाष्ये, अघोरशिवकृतौ ( ११०० ), माधवाचार्यस्य (१४००) सर्वदर्शनसंग्रहे, ईशानशिवस्य (११००) ईशानशिवगुरुदेवपद्धतौ, अन्यत्र च आगमविषयका उल्लेखा बहवो दृश्यन्ते।

अपरं च भिटा, गुडिमल्लम् इत्यादिषु विद्यमानानि शिवलिङ्गानि क्रि० पू० प्रथमशतकात् पूर्वजानीति विद्वद्भिराकलितानि। न केवलं भारते एव प्रथितेयम् आगमिका संस्कृतिः, किन्तु अन्नां ( इण्डोचैना ) देशे, मिसोना (भद्रेश्वरः) मेक्सिकोपो-नगर-जावा-काम्बोडियादिदेशेष्वप्यागमोक्ताः शिवालया अद्याप्यस्याः संस्कृत्याः गतवैभवमुद्घोषयन्ति। मोहेञ्जोदारो ( सिन्धुप्रान्ते ) उपत्यकासंशोधनानन्तरं तु तत्रोपगतैः शिवलिङ्गादिभिरागमोक्ता संस्कृतिर्वेदपूर्वकालिकीत्यपि च निर्णीयते।

## आगमपरम्परा

आगमग्रन्थरचनाया अर्वाचीनत्वेऽपि तत्सम्प्रदायस्य प्राचीनत्वमुपपादितम्। स्वयमागमशब्दार्थ एव तेषां परम्परागतत्वं पिशुनयति। भगवद्गीतायां यथाध्यात्मविद्या भगवता विवस्वते, ततो मनवे, तत इक्ष्वाकवे इत्यादिपरम्परागता, तथैवागमसम्प्रदायोऽपि परम्परया उपदिष्टः। कामिकादिवातुलान्ता अष्टाविंशत्यागमा इत्थं संगृह्यन्ते — कामिक-योगज-चिन्त्य-कारण-अजित-दीप्त-सूक्ष्म-सहस्र-सुप्रभ-अंशुमत्-विजय - निश्वास-स्वायम्भुव-अनल-मार-रौरव-मकुट--विमल-चन्द्रज्ञान-बिम्ब- ललित - प्रोद्गीत-सिद्ध-सन्तान-सर्वोक्त-पारमेश्वर-किरण-वातुलम्। अत्र प्रथमदशागमाः 'शैवागमाः' इति, अवशिष्टा अष्टादश 'रुद्रागमाः' इति कथ्यन्ते। तत्र शैवागमाः त्रिवारम्, रुद्रागमा द्विवारञ्च प्रथिता इति ज्ञायन्ते। तत्र प्रथमः कामिकः प्रथमतः

प्रणवाय, ततस्त्रिकालाय, त्रिकालाद् हराय वारत्रयं कथित इत्यनुश्रूयते। तथैव रुद्रागमेषु विजयागमः पूर्वं रुद्राय, ततः परमेशायेति द्विरावृत्तः। इत्थमेव शाक्त-पाञ्चरात्राद्यागमेष्वप्यावृत्तिर्दृश्यते। अत एव सुप्रभेदे विस्तृताद् ग्रन्थान्तरात् संगृहीता 'आकुंचिता वृत्तिः' इत्युक्तम्। तत्र तत्र 'सारात्सारतरः' इत्याद्युल्लेखा अपि दृश्यन्ते।

## आगमोक्ता विषयाः

आगमेषु क्रिया-चर्या-योग-ज्ञान(विद्या)मिति पादचतुष्कं विद्यते। अद्योप-लभ्येष्वागमेषु केचन पादा न दृश्यन्ते। तदुक्ता विषया इत्थं संगृह्यन्ते—

क्रियापादः—अत्र आलयानां संस्थापनम्, विग्रहरचना, तत्प्रतिष्ठादयो विषया निरूपिताः। सुप्रभेदे कामिकादिषु च देवतागाररचनाविचारः सुविपुलमुप-लभ्यते। निसर्गरमणीये पवित्रोद्देशे देवतायतनानि स्थापयितव्यानि। तत्र प्रथमतः क्षेत्रं कर्षणादिना संस्कृत्य शाल्यादिबीजान्यावाप्य वर्धितेषु शाल्यादिषु पशु-पक्षिभ्यो वितीर्य तत्रालयनिर्माणं कार्यम्। शुभेऽहनि शङ्कुं संस्थाप्य विध्युक्तं बलि-हरणादिकमाचरेत्।

यद्यप्यालयनिर्मितिरज्ञजनमनोरञ्जनाय, तथापि तेन शिल्पशास्त्रोज्जीवन-मभूत्। शिल्पशास्त्रोद्गमे आगमा एव निदानम्। वैदिकसाहित्ये तावत् शिल्पस्य प्रायो नातीवावकाशः। मूर्तिपूजाया आकरमागमा एव। आगमोक्तं शिल्पशास्त्रवैभव-मद्यापि एल्लोर्-अजन्ता-एलिफेण्टा-बादामी-बेलूर्-हलेबीडु-सोमनाथपुर-पम्पाप्रभृतिषु विश्वविख्यातेषु देवालयेषु दरीदृश्यते।

देवालयस्थापने तावद् गर्भन्यास-पीठ-कण्ठ-मण्टप-प्राकारादिसुसूक्ष्मविषया अपि समीचीनमुपनिबद्धाः। विग्रहाराधनं यद्यपि न वैदिकयुगीयमिति सन्दिहन्ति संशोधकाः, तथापि तद्यास्कपाणिन्यादिभ्योऽपि प्राचीनमित्यवधार्यते। मानसिकैका-ग्रतासाधनाय विना विग्रहाराधनं नास्त्यपरमुत्तमं साधनमिति स्वामिविवेकानन्दा (हिन्दूधर्मसारे) अवोचन्। विग्रहेषु चलाचलप्रभेदाः सन्ति। मूर्तयः सकलाः। लिङ्गानि निष्कलानीत्युच्यन्ते।

चर्यापादः—अस्मिन् मानवनिर्मितानां देवतामूर्तीनां पूजोत्सवादिप्रकारः प्रतिपादितः। स्नानार्चननैवेद्यादिकानां च विधानादिकम्, अग्निकुण्डसमिदादीनां च निरूपणं कृतम्। आगमिकक्रियाकलापेषु शैवाग्निरेव स्वीकरणीयः। न तु वैदिकाग्निः। वैदिकाग्नितः शैवाग्निः श्रेष्ठतरः। दीक्षितः शैवाग्निमेव उपयुञ्जीत। पारमेश्वरे वीरशैवैरपि शिवदीक्षादिषु ( पटल ३–४–५ ) हवनादिकं कार्यमित्युक्तम्।

योगपादः—पातञ्जलस्य योगशास्त्रस्य आगमा एव मूलमिति संशोधकैरभ्यूह्यते। ईशानशिवगुरुनिजगुणशिवयोगिप्रभृतय आगमोक्तामेव योगपद्धतिमनुसृत्याष्टाङ्गयोगसाधनं न्यरूपयन्।

ज्ञानपादः—वैष्णवागमापेक्षया शैवागमेषु ज्ञानपादस्य माहात्म्यमधिकम्। अत्र पति-पशु-पाशात्मकं पदार्थत्रयं प्रतिपादितम्। पतिर्विश्वकर्ता परमशिवः। पशवो जीविनः। पाशस्तु आत्मनः कर्मबन्धात्मकः। ( पश बन्धने, पश्यन्त इति पशवः। पातीति पतिः। पातेर्डतिः )।

पतिपदार्थः—आगमोदितः पतिस्वरूपस्तात्त्विकः। स च पतिः सकल-सकलनिष्कल-निष्कलरूपेण निर्दिष्टः। एते प्रभेदा वीरशैवोक्तेषु इष्ट-प्राण-भाव-लिङ्गेषु विलीयन्ते। पत्यौ शक्तिरविनाभावसम्बन्धेन वरीवर्ति। शिवशक्त्योश्चन्द्र-चन्द्रिकयोरिव सूर्यप्रकाशयोरिव धर्मधर्मिभावः संदृश्यते।

यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा॥

( सि० शि० १४ )

सृष्टि-स्थिति-लय-तिरोधानानुग्रहाख्यानि पञ्च कृत्यानि पत्युर्निरूपितानि। विश्वं तु शिव-शक्तिसमुद्भवम्। स च शिवः सच्चिदानन्दनित्यपरिपूर्णः स्वतन्त्रत्वादिषड्विभवोपेतश्च निर्दिश्यते। तद्विभवस्तु—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥

इत्यादिना प्रतिपादितः।

पशुपदार्थः—पशुरात्मा । ते चानेके । "अनाद्यविद्यासम्बन्धादंशो जीवनामकः" ( सि० शि० प० ५ ) अनाद्यविद्यैव मलत्वेन जीविनः पाशत्वमुपयाति । जीवास्तु अग्नेर्विस्फुलिङ्गा इव शिवांशाश्चैतन्यमया मलसम्बन्धेन विज्ञानकलाः प्रलयकलाः सकलाश्चेति त्रिविधा जीवात्मानः । "मलावृतः संसारी" इत्युक्त्या विस्मृतनिजस्वरूपो जीवः किञ्चिज्ज्ञत्वादिना आत्मानमनुमनुते । अस्य मलविमोचनायैव विश्वस्य निर्मितिः । कर्मवशाज्जीवः ७४ लक्षेषु जीवराशिषूपजायते । जनन-मरणधर्मिके संसारे पुनः पुनरुद्भूय भगवत्कृपया शक्तिपाते सति गुरुकृतशिवदीक्षया विगतमलो जीवो विमुच्यते ।

पाशपदार्थः—पाशो रज्जुः । एष जीवानाबध्नाति । पाशस्तु आणवमायीय-कार्मजत्वेन त्रिविधः ।

तुष-कम्बुक-किंशारुकमुक्तं बीजं यथाङ्कुरं कुरुते ।
नैव तथाणव-माया-कर्मवियुक्तो भवाङ्कुरं ह्यात्मा ।।
( तन्त्रसारे ५ )

तुष-कम्बुक-किंशारुका यथा तण्डुलम्, कालिका च ताम्रं यथा, तथैव मला आत्मानमावृण्वन्ति ।

"अपूर्णं मन्यतारूपम् आणवम्", इच्छाशक्तिसंकोचादिदमुद्भवति । ज्ञानशक्तिसंकोचात् "किञ्चिज्ज्ञं मन्यतारूपं मायिकम्", क्रियाशक्तिसंकोचात् "किञ्चित्कर्तृत्वं मन्यतारूपं कार्मिकं मलमुदेति । तेनायमात्मा आत्मानमपूर्णम् अज्ञम् अकिञ्चित्करं च मन्यमानः संसारीति व्यपदिश्यते । इदं मलावरणं गुरुकृतशिवदीक्षायां क्रमेण वेधा-मन्त्र-क्रिया-दीक्षाभिः संच्छिद्य स्पर्शमणिसंपर्काद् लोहो यथा स्वर्णतामुपयाति न पुनः कालिकां तथा जीवोऽयं सर्वज्ञत्वादिकं लब्धा नदीसमुद्रन्यायेन शिवो भवति ।

जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम् ।
परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते ।।
( सि० शि० प० २० )

## शैवभेदः

शैवस्तु सप्तविधः। अनादिशैव-आदिशैव-महाशैव-अनुशैव-अवान्तरशैव-अन्त्यशैव-वीरशैवा इति। (सूक्ष्मतन्त्रे, प० ७-४-१८)। पारमेश्वरे योगशैव-ज्ञान-शैवाख्यं भेदद्वयं निवेशितम् (पा० प० १, ११-१५)। अत्र अनादिशैवः साक्षात् शिव एव। आदिशैवास्तु परशिवपञ्चवक्त्राद्दीक्षितानां कौशिक-काश्यप-भारद्वाजात्रि-गौतमादिऋषीणां वंशजाः। लोकपूज्या महान्तो महाशैवाः। दीक्षिताः क्षत्रियवैश्याः क्रमशोऽनुशैवा अवान्तरशैवाश्चेति कथ्यन्ते। अन्ये अन्त्यशैवाः। पूर्वोक्त-योग-ज्ञानशैवयोः समावेशाद् वीरशैवं प्रतिष्ठितम्। शैवकल्पतरोरयं फलभूत इत्याशयेनैव महान्तः श्रीमन्निजगुणशिवयोगिनो वीरशैवं 'चरमशरीरीति' समाह्वयन्ति विवेकचिन्तामणौ।

## वीरशैवागमः

सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्॥

कामिकादिवातुलान्तानाम् अष्टाविंशत्यागमानां सिद्धान्तागमत्वेनैव व्यवहारः। तदुत्तरे विभागे वीरशैवः प्रतिपादितः। अत एवायमागमान्तत्वेन व्यवह्रियते।

द्विधा पाशुपतं ज्ञेयं पूर्वापरविभेदतः।
शिवागमानुसारेण भस्मरुद्राक्षधारणम्॥
लब्ध्वा शिवं महादेवं लिङ्गरूपमुमापतिम्।
अर्चयेत्तु त्रिकालं वै पूर्वं पाशुपतं हि तत्॥
निगमागमानुसन्धानशैवदीक्षाविधानतः।
शिवलिङ्गं करे कण्ठे धृत्वा वक्षस्थलेऽपि वा॥
त्रिकालं योऽर्चयेद्भक्त्या महापाशुपतो हि सः॥

पूर्वापरविभेदेन पाशुपतं तावद् द्विविधम्। अत्रापरत्वेन निर्दिष्टं महापाशुपतं वीरशैवमेव श्रीनिट्टूरुनञ्जणाचार्यः (१७२७) वेदान्तसारवीरशैवचिन्तामणौ वीरशैवं महा-पाशुपतमित्यत्रोचत्। लक्कणदण्डेशो नाम विजयनगरसाम्राज्यसेनानी (१४२८) शिव-तत्त्वचिन्तामणौ स्वगुरुं मल्लिकार्जुनं "महापाशुपतसद्व्रताग्रणी" इति स्तौति। वीरणाचा-र्यविरचिते दशग्रन्थौ (शिवज्ञानप्रदीपिकायां) "वीरमाहेश्वरं तन्त्रं ज्ञातव्यं त्रिविधं सुत"

( आह्निकः ६ )। उक्तं च नीलकण्ठशिवाचार्यैरपि. क्रियासाराख्यायां ब्रह्मसूत्र-कारिकायाम्—

"वीरशैवागमाख्यातपदार्थानां परस्परम्" ( उपदेशः १-४७५ ) इति। विशेषतो वीरागमोत्पन्नत्वाद् वीरशैवस्य वीरागमो वीरशैवागम इत्युच्यते। महाकविचामरस ( १४४० ) विरचिते प्रभुलिङ्गलीलाख्ये कर्णाटककाव्ये वीरविरगिण्या महादेव्याः पिता 'निर्मलः' "वीरशैवागमिकः" इति निर्दिष्टः। चन्नबसवपुराणाख्ये अन्यस्मिन् कन्नडमहाकाव्ये कैलासवर्णनावसरे 'वीरशैवागमप्राकारः' इति सकलपुराणागमकोविदेन तत्रभवता विरूपाक्षपण्डिताराध्येन वर्णितः ( अ० १. )। शिवाद्वैताचार्येणापि मायिदेवप्रभुणा शतकत्रयाख्ये ग्रन्थे वीरशैवानामुपास्यत्वेन निर्दिष्टा गुरु-लिङ्ग-जङ्गमाः "वीरशैवागमोक्तचिह्नाङ्किताः" इत्यभिहिताः।

## वीरशैवपदार्थनिर्णयः

शिवज्ञानप्रदीपिकायां वीरशैवपदस्य निर्वचनमेवं कृतम्—

एक एवायमेतस्मिन् सर्वस्मिन् जगतीति यः।
विशिष्ट ईर्यते यस्माद् वीर इत्यभिधीयते॥
शिवेन सह संबन्धात् शैवमित्यादृतं बुधैः।
उभयोः सम्पुटीभावाद् वीरशैवमिति स्मृतम्॥ ( अ० ६ )

लौकिक-पारमार्थिकादिषु यत्र कुत्रापि विशिष्टगुणयुक्तो वीर इत्यभिधीयते। शिवसंबन्धाच्च शैव इति। वीर-शैवपदयोः सम्पुटीभाव एव वीरशैवः। उक्तं च नीलकण्ठशिवाचार्यैरपि—

वीरलिङ्गं समभ्यर्च्य तत्स्वरूपं प्रयान्ति ये।
ते वीरशैवा लोकानां नित्यं क्षेमाभिलाषिणः॥

( क्रियासारे० उ० ३-१० )

वीरलिङ्गार्चकाः सकललोकक्षेमाभिलाषिणश्च वीरशैवा इति। समर्थितञ्च रेणुकभगवत्पादाचार्यैरपि—

वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका।
तस्यां रमन्ते ये शैवा वीरशैवास्तु ते स्मृताः॥

वेदान्तजन्यं यद् ज्ञानं विद्येति परिकीर्त्यते।
विद्यायां रमते तस्यां वीर इत्यभिधीयते॥
(सि० शि० प० ५)

शिवजीवैक्यबोधनात्मिकायां विद्यायां ये रमन्ते ते तु वीरशैवाः। उक्तं च पारमेश्वरेऽपि—

वीरत्वं नाम देवेशि यथा वीरो रणे भटः।
तथा मते च सद्भक्त्या वीरो वैराग्यतो भवेत्॥

भटो यथा रणाङ्गणे वीराविष्टः स्वामिभक्त्या आत्मानमर्पयति तथा वैराग्ययुतो वीरशैवो भवति।

## वीरशैवप्रभेदाः

अयं च वीरशैवः सामान्य-विशेष-निराभारित्वेन त्रिधा विभक्तः। गुरुदत्तेष्टलिङ्गे भक्तिं विधाय गुरुलिङ्ग-जङ्गमसेवातत्परो यः स सामान्यवीरशैव इत्याद्रियते।

तस्माद्यत्नेन मद्भक्तैः वीरमाहेश्वरात्मनाम्।
सेवा कार्या महादेवि मनोवाक्कायकर्मभिः॥
(सूक्ष्मतन्त्रे० ७-८५)

वीरशैवागमोक्तकर्मानुष्ठानात् परिपक्वान्तःकरणो लिङ्गाङ्गानुसन्धानात्मक एकोत्तरशतस्थलानां रहस्यं गुरुमुखाद्विज्ञाय—

"विशिष्टधर्मानुष्ठानाद् विशेष इति कथ्यते।"

इत्युक्तविशिष्टधर्मानुष्ठानतत्परो विशेषवीरशैव इत्युच्यते। अयञ्च—

वीरशैवमतं प्राप्य जगदेतच्चराचरम्।
सर्वं शिवमयं ध्यायेत् शिवोऽहमिति भावयेत्॥

एवंभूतो विशेषवीरशैव एव निराभारीत्युच्यते। अस्यैव निराभारिशिवयोगिनो वैशिष्ट्यमुक्तं दिव्यागमे—

सर्वसंसारसौख्यानि त्यक्त्वा चित्तं शिवे लयेत्।
दण्ड-कौपीन-काषायजटावल्कलधारकः॥
मुण्डी वा शिवचिह्नानि धारयेदजिनादिकम्।

भिक्षाशी नियताहारः सुखः संसारवर्जितः ॥
निराभारी तु विज्ञेयः स एव परमशिवः ॥ (पारमेश्वरे)

अस्य च महात्मनः पूजावैभवन्तु—

सत्यं पुष्पं क्षमापुष्पं वस्तुषूच्चावचेष्वपि ।
अनन्यपीडनं पुष्पं परोपकृतिमुत्तमाम् ॥
स्वमते विमते मूढे परारावुपकर्तरि ।
सर्वत्र भावयेदेकं वीरशैवमते शिवे ॥
यः पूजयेन्मामीशानि पुष्पैरेतैरतन्द्रितः ।
(पा० प० १०, ६० ६७)

किञ्च—रागद्वेषवियुक्तानां लिङ्गिनां वीरशैविनाम् ।
अभितः शैवकैवल्यं करस्थं विदितात्मनाम् ॥
अवधूतश्च संन्यासी योगी पाशुपतशिवः ।
लिङ्गी वीरो वीरशैवो महामाहेश्वरो यतिः ॥
पर्यायनामान्येतानि वीरशैवस्य योगिनः ॥
(पा० प० १०)

इदमेव वीरशैवदर्शनं शक्तिविशिष्टाद्वैत-विशेषाद्वैत-द्वैताद्वैत-शिवाद्वैत-षट्स्थल-सिद्धान्तादिभिः पर्यायवाचकैरभिधीयते भगवत्पादरेणुक-श्रीपति-नीलकण्ठ-स्वप्रभानन्द-नन्दिकेश्वर-मायिदेवप्रभृतिभिराचार्यैः सिद्धान्तशिखामणि-श्रीकरभाष्य-क्रियासार-शिवाद्वैतमञ्जरी-लिङ्गधारणचन्द्रिका-अनुभवसूत्रादिषु सूत्रभाष्यादिष्वित्यलं विस्तरेण ।

## उपसंहारः

यद्यप्यागमसम्प्रदायो वेदाश्रयेणैव मान्यतां प्राप । तथापीदानीं वैदिको धर्म आगमिकधर्माश्रयेणैवोपजीवतीत्यत्र न काचिदनुपपत्तिः । यतोऽद्य वेदोक्ता केवलं यज्ञ-यागादिकी अग्निपूजा न दृश्यते । परन्तु आसेतुशीताचलं यावदखण्डे भारतवर्षे आगमोक्तपूजाविधानमेव सर्वेषु देवालय-मठादिषु प्रचलितं दृश्यते । आगम-संस्कृत्याः प्रभावो वैदिकधर्मस्योपरि महान् सञ्जातः । यतोऽद्य पशुविससनादिहिंस्र-यज्ञाः समाप्ताः । आगमेषु तत्र तत्र वर्णाश्रमाद्युल्लेखा यद्यपि दृश्यन्ते, तथापि

गुण-कर्म-स्वभावसुभगस्य यस्य कस्यापि नरस्य शिवदीक्षा दातु शक्यते शक्तिपातं समीक्ष्य गुरुणा। "कृण्वन्तो विश्वमार्यम्" इत्यादि वेदादेशोऽपि विश्वसंस्करणे बद्धादरो दृश्यते। आगमास्त्वस्मिन् विषये मुक्तद्वारा इति विदुषामाशयः। शिवज्ञानेन शूद्रादयोऽपि शिवत्वं प्राप्नुवन्ति।

शिवभक्तिसमावेशे क्व जातिपरिकल्पना।
इन्धनेष्वग्निदग्धेषु को वा भेदः प्रकीर्त्यते॥

(सि० शि० प० ११)

एवञ्चोदात्तो ध्येयः, उदारः कर्तव्यः, श्रद्धान्वितमौपासनम्, लोकहितचिन्तकं हृदयम्, निष्कामकर्मानुष्ठानम्, इत्याद्यनन्यसाधारणैर्विशिष्टैर्गुणैरागमिका संस्कृतिः विश्वोद्धरणबद्धपरिकरा अखण्डे भारतेऽस्मिन् सांस्कृतिककेन्द्रभूतेषु मठ-देवालयादिषु जनानुद्धरेदित्याशास्य विरम्यते। इति शम्॥

———

# शैवागमपरम्परा

श्री के० सीतारामसोमयाजी, मैसूरस्थएम०एस०महाविद्यालये शैवागमप्राध्यापकः ।

"तं देवं निगमागमाद्यधिगतं नित्यं समाराध्नुयाम्"

इत्याद्युक्तिप्रकारेण निगमागमप्रतिपाद्यो द्योतनात्मकः परमात्मा आत्मद्रव्यदेवतानामैक्यरूपाराधनार्हो भवति। एतादृशाराधनप्रकारस्तु आगमैरेव प्रतिपाद्यते। प्राचीनभारतेऽनुक्रमशो निगमागमाविति द्वे एव शास्त्रे प्रसिद्धतया प्रचारपथे वर्तेते। ते न परस्परप्रतिद्वन्द्विनौ, किन्तु परमात्मनिःश्वसितरूपो निगमः, आगमस्तु वाग्रूप इति सर्वजननिश्चप्रचम्। अत एव "निश्चयेन तत्त्वं गमयतीति निगमः" इति निगमस्य, "आप्तवचनादाविर्भूतमर्थविशेषसंवेदनमागमः" इत्यागमस्य च व्युत्पत्तिरपि सङ्गच्छते। यद्यपि निःश्वासवाग्रूपयोर्निगमागमयोः कर्तैक्येनाभिन्नार्थकत्वेऽप्येकस्य निष्फलत्वाशङ्काया नावकाशः। अगाधज्ञानभाण्डरूपेण निगमेन विरुद्धनानावादिसंशयास्पदत्वेन सामान्यजनानामुपयोगो न भवेदिति निश्चित्य लोकरक्षाबद्धादरः शङ्करः सर्वजनोपयोगिवेदार्थविवरणरूपागमानुपदिष्टवान्। यथा—"इति वेदास्त्रयस्त्रयी" इति वाक्यानुसारेण वेदत्रयमेव कालक्रमेण ज्ञानभाण्डागारवृद्ध्या चत्वारो वेदा अभवन्, तथा आगमा अपि शिवविश्वाद्यनेकभेदभिन्नाः क्रियाचर्यायोगज्ञानाख्यपादचतुष्टयैरुपेताः सिद्धान्त-संहिता-तन्त्र-आगमाद्यनेकशब्दविशेषैर्व्यवहारयोग्या अभवन्।

तत्र—

कामिकं योगजं चिन्त्यं कारणं त्वजितं तथा।<br>
दीप्तं सूक्ष्मं सहस्रञ्च अंशुमान् सुप्रभेदकम् ॥<br>
विजयञ्चैव निश्वासं स्वायम्भुवमथानिलम्।<br>
वीरञ्च रौरवञ्चैव मकुटं विमलं तथा॥<br>
चन्द्रज्ञानञ्च बिम्बञ्च प्रोद्गीतं ललितं तथा।<br>
सिद्धं सन्तानशर्वोक्तं पारमेश्वरमेव च॥<br>
किरणं वातुलं चैव अष्टाविंशतिसङ्ख्यया।

इति प्रधानतयाष्टाविंशतिभेदभिन्ना अन्यैरुपभेदैः इह सर्वार्थप्रकाशकाः शिवागमा अनादिपाशविश्लेषात् सर्वज्ञेनेश्वरेणैवोपदिष्टाः परम्परया प्रचारपथमायाताः। किञ्च कामिकादिष्वपि—

तेषु पूर्वे दश प्रोक्ताः शिवभेदा इति स्मृताः।
तथापराष्टदशकं रुद्रभेदमिति स्मृतम्॥
महेशात् शिवभेदानां श्रोतारस्तु त्रयस्त्रयः।
रुद्रभेदो महेशाच्च श्रोतारौ द्विद्विकौ मतौ॥

इत्यादिवचनानुसारेण आद्यदशशिवभेदाः क्रमेण त्रयाणामुपदेशेन विजयाद्यष्टादशरुद्रभेदाः क्रमेण द्वयोर्द्वयोरुपदेशेन च प्रचारपथमायाता इति ज्ञायन्ते।

किञ्च कामिके—

कामिकं प्रणवाख्यस्य परार्धग्रन्थसंख्यया।
प्रणवात् त्रिकलः प्राप्तः त्रिकलाच्च ततो हरः॥
त्रयश्चैवोपभेदाः स्युर्वक्त्रारं भैरवोत्तरम्।
नारसिंहञ्च विप्रेन्द्राः कथ्यते कामिकत्रयम्॥

योगजे—

योगजन्तु सुधाख्यस्य प्रोक्तं तल्लक्षसंख्यया।
सुधाख्याद् भस्मसंप्राप्तस्ततः प्राप्तो विभुः क्रमात्॥
वीणाशिखोत्तरं तारं सन्तं सन्ततिरेव च।
आत्मयोगञ्च पञ्चैते योगतन्त्रस्य भेदकाः॥

चिन्त्ये—

चिन्त्यं सुदीप्तसंज्ञस्य प्रोक्तं शतसहस्रकैः।
दीप्ताच्च गोपतिः प्राप्तस्ततः प्राप्तो नु चाम्बिका॥
सुचिन्त्यं सुभगं वामं पापनाशं परोद्भवम्।
अमृतं चिन्त्यतन्त्रस्य षड्विधं तु प्रकीर्तितम्॥

कारणे—

कारणं कारणाख्यस्य कोटिग्रन्थेन चोदितम्।
कारणाच्छर्वरुद्रस्तु शर्वात् प्राप्तः प्रजापतिः॥

कारणं पावनं दौर्गं माहेन्द्रं भीममेव च।
ततस्तु मारणं द्वेष्टं सप्तधा कारणं तथा॥

अजिते—

अजितं सुशिवाख्यस्य नियुतग्रन्थसंख्यया।
सुशिवाख्याच्छिवप्राप्तः तच्छिवादच्युतस्ततः॥
प्रभूतञ्च परोद्भूतं पार्वती पद्मसंहिता।
चतुर्भेदमिदं तन्त्रञ्चास्मिन् तन्त्रे प्रकीर्तितम्॥

दीप्ते—

दीप्तमीशस्य विख्यातं नियुतग्रन्थसंख्यया।
ईशानमूर्तिस्सम्प्राप्तः ततः प्राप्तो हुताशनः॥
अमेयं शब्दमाच्छाद्यमसंख्यममितौजसम्।
आनन्दं माधवोद्भूतमद्भुतञ्चाक्षतं यथा॥
दीप्तन्तु नवधा प्रोक्तं सूक्ष्मतन्त्रं निबोधत॥

सूक्ष्मे—

सूक्ष्मं सूक्ष्मस्य सम्प्रोक्तं तद्ग्रन्थं पद्मसंहिता।
सूक्ष्माद्वैश्रवणः प्राप्तः तस्मात्प्राप्तः प्रभञ्जनः॥
तत्सूक्ष्ममेकभेदं स्यात् सूक्ष्ममित्यभिधीयते।

सहस्रे—

सहस्रं कालसंज्ञस्य प्रोक्तं वै शङ्खसंख्यया।
कालाद् भीमस्ततः प्राप्तो भीमाद्धर्मो यथा तथा॥
अतीतं मङ्गलं शुद्धमप्रमेयन्तु जातिभाक्।
प्रबुद्धं विबुधं हस्तमलङ्कारं सुबोधकम्॥
एते सहस्रतन्त्रस्य दशसङ्ख्याः प्रकीर्तिताः॥

अंशुमति—

अंशुमानम्बुसंज्ञस्य पञ्चलक्षा कीर्तिताः।
अम्रश्चैवाम्बुसंज्ञाच्च अम्रात्प्राप्तस्ततो रविः॥

विद्यापुराणतन्त्रञ्च वासवं नीललोहितम् ।
प्रकारणं भूततन्त्रमात्मालङ्कारमेव च ॥
काश्यपं गौतमञ्चैन्द्रं ब्राह्मं वासिष्ठमेव च ।
ऐशानं नामतः प्रोक्तमंशुमान् द्वादशः स्मृतः ॥

सुप्रभेदे—

सुप्रभेदं महाशास्त्रं दशेशस्य प्रकीर्तितम् ।
विघ्नेश्वरो दशेशाच्च शशीप्राप्तो गणेश्वरात् ॥
त्रिकोटिसंख्यया प्रोक्तो भेदश्चात्र न विद्यते ।
क्रियादिज्ञानपर्यन्तं तन्त्रमत्रैव दृश्यते ॥

विजये—

रुद्रस्यानादिसंज्ञस्य विजयं तन्त्रमुत्तमम् ।
परमेशस्ततः प्राप्तस्त्रिकोटिग्रन्थसंख्यया ॥
विजयं चोद्भवं सौम्यमघोरं मृत्युनाशनम् ।
कुबेरञ्च महाघोरं विमलं विजयोष्टकम् ॥

निश्वासे—

निश्वासन्तु दशार्णस्य प्रोक्तं तत्कोटिसंख्यया ।
दशार्णाच्छैलजा प्राप्ता चाष्टभेदेन भेदितः ॥
निश्वासोत्तरनिश्वासौ निश्वासस्य मघोदयम् ।
निश्वासनयनं चैव तथा निश्वासकारिका ॥
घोरसंज्ञं यमाख्यञ्च गुह्यञ्चाप्येवमष्टधा ॥

स्वायम्भुवे—

निधनस्य स्वयम्भूतं त्रिकोट्यर्धेन कीर्तितम् ।
निधनेशात्स्वयं भूतं श्रुतवान् नलिनोद्भवः ॥
प्रजापतिमतं पद्मं स्वयम्भुवमिति त्रिधा ॥

अनले—

आग्नेयं यच्च तद्व्योम्नो ग्रन्थसंख्यायुतत्रयात् ।
आग्नेयं तन्त्रमेकन्तु तस्मात्प्राप्तो हुताशनः ॥

वीरे —

तेजस्तु वीरं सम्प्राप्तो नियुतग्रन्थसंख्यया।
प्रजापतिस्ततः प्राप्तस्त्रयोदशविभेदकम्॥
प्रस्तारं फुल्लमल्लञ्च प्रबोधं बोधबोधकम्।
अमोहं मोहसमयं ह्याकटं शाकटाधिकम्॥
हलं विलेखनं भद्रं वीरं वीरे त्रयोदश॥

रौरवे—

रौरवं ब्राह्मणेशस्य चार्बुदाष्टकसंख्यया।
नन्दिकेशस्ततः प्राप्तः षड्भेदञ्च विधीयते॥
कालघ्नञ्च कलातीतं रौरवं रौरवोत्तरम्।
महाकालमतं चैन्द्रं रौरवं षड्विधं मतम्॥

मकुटे—

मकुटन्तु शिवाख्यस्य शतसाहस्रसंख्यया।
महादेवस्ततः प्राप्तो भेदश्च द्विविधो भवेत्॥
मकुटोत्तरञ्च मकुटं द्विविधेन विधीयते॥

विमले—

सर्वात्मकस्य विमलं त्रिलक्षग्रन्थसंख्यया।
वीरभद्रस्ततः प्राप्तो भेदाः षोडशसंख्यया॥
अनन्तं भोगमाक्रान्तं वृषपिङ्गं वृषोदरम्।
वृषाद्भुतं सुदत्तञ्च रौद्रं भद्रविधं तथा॥
आरेवतमतिक्रान्तम् अट्टहासमलङ्कृतम्।
अर्चितं धारणं तन्त्रं विमलं षोडशैव तु॥

चन्द्रज्ञाने—

चन्द्रज्ञानमनन्तस्य त्रिकोटिग्रन्थसंख्यया।
बृहस्पतिस्ततः प्राप्तो भेदाश्चात्र चतुर्दश॥

स्थिरं स्थाणुं महान्तञ्च वारुणं नन्दिकेश्वरम् ।
एकपादपुराणञ्च शङ्करं नीलरुद्रकम् ॥
शिवभद्रं कल्पभेदं श्रीमुखं शिवशासनम् ।
शिवशेखरमाख्याकं देव्यामतं तथैव च ॥
चन्द्रज्ञानस्य तन्त्रस्य चतुर्दशविधो भवेत् ॥

बिम्बे—

मुखबिम्बं प्रशान्तस्य शतसाहस्रसंख्यया ।
दधीचिस्तु ततः प्राप्तो भेदाः पञ्चदशैव तु ॥
चतुर्मुखमलायोगं संस्तोभं प्रतिबिम्बकम् ।
आत्मालङ्कारवायव्ये तौटिकं तुटिनीरकम् ॥
कलात्ययं तुलायोगं कुट्टिमं पट्टशेखरम् ।
महाविद्या महासौरं बिम्बं पञ्चदशैव तु ॥

प्रोद्गीते—

प्रोद्गीतं शूलिनः प्रोक्तं लक्षत्रितयसंख्यया ।
कवचाख्यस्ततः प्राप्तो भेदा षोडशसंख्यया ॥
कवचं चैव वाराहं पिङ्गलामतमेव च ।
पाशबन्धं दण्डधरमङ्कुशं च धनुर्धरम् ॥
शिवज्ञानञ्च विज्ञानं श्रीकालज्ञानमेव च ।
आयुर्वेदं धनुर्वेदं सर्पदष्ट्रीविभेदनम् ॥
गीतं भरतमातोद्यं प्रोद्गीतं षोडशैव तु ॥

ललिते—

ललितं चालयेशस्य प्रोक्तमष्टसहस्रकम् ।
आलयाल्ललितः प्राप्तो ललितं ललितोत्तरम् ।
कौमारं चैव तद्भेदं त्रिविधं परिकीर्तितम् ॥

सिद्धे—

बिन्दोस्सिद्धमिदं तन्त्रं कोटिकोट्यर्धसंख्यया ।
बिन्दुसंज्ञन्तु सिद्धाख्यं प्राप्तः चण्डेश्वरः परः ॥
सारोत्तरमथान्यत्तु औशनोत्तरमेव च ।
शालभेदं शशीखण्डं सिद्धतन्त्रं चतुर्विधम् ॥

सन्ताने—

सन्तानं शिवनिष्ठस्य षट्सहस्रन्तु संख्यया ।
असंवायस्ततः प्राप्तो भेदः सप्तविधो भवेत् ॥
लिङ्गाध्यक्षं सुराध्यक्षं शङ्करं त्वमलेश्वरम् ।
असंख्यमनिलद्वन्द्वं सन्तानः सप्तधोदितः ॥

शर्वोक्ते—

सोमदेवस्य शर्वोक्तं द्विलक्षेणैव संख्यया ।
नृसिंहः प्राप्तवान् सोमाद् भेदः पञ्चविधो भवेत् ॥
शिवधर्मोत्तरं चैव वायुप्रोक्तं तथैव च ।
दिव्यप्रोक्तमथैशानं शर्वोद्गीतं विधीयते ॥

पारमेश्वरे—

श्रीदेव्यास्तु समाख्यातं पारमेश्वरमुत्तमम् ।
ग्रन्थद्वादशलक्षन्तु सप्तधा प्रसृतन्तु तत् ॥
उशनामुनिसम्प्राप्तः श्रीदेव्याश्च यथाक्रमात् ।
मतङ्गं यक्षिणी पद्मं पारमेश्वरमेव च ।
पुष्करं सुप्रयोगञ्च हंसं सामान्यमेव हि ॥

किरणे—

किरणं देवविभवे कोटिपञ्चकसंख्यया ।
संवर्तकः ततः प्राप्तो भेदास्तु नवसंख्यया ॥
गारुडं नैर्ऋतं नीलं रूक्षं भानुकधेनुके ।
प्रबुद्धं बुद्धकालाख्ये नवधा किरणो भवेत् ॥

वातुले—

शिवस्य वातुलं प्रोक्तं ग्रन्थाः शतसहस्रकम् ।
महाकालः ततः प्राप्तो भेदा वै द्वादशैव तु ।।
वातुलं चोत्तरं चैव कालज्ञानं प्ररोहितम् ।
सर्वं धर्मात्मकं श्रेष्ठं नित्यं शुद्धं महाननम् ।।
विश्वं विश्वात्मकञ्चैव वातुलो द्वादशः स्मृतः ।।

इत्याद्याधारैः कामिकाद्यागमानां परम्परा उपभेदा ग्रन्थसंख्याश्च प्रतिपाद्यन्ते । किञ्च, क्रियाचर्यायोगज्ञानपादानां क्रमेण सामीप्य-सालोक्य-सारूप्य-सायुज्यरूपमुक्तिद्वारा परम्परया आगमानां परमोक्ष एव फलमिति शम् ।।

— —

# शिवब्रह्माद्वयवादौ

श्रीकेदारनाथ ओझाः, राजकीयसंस्कृतमहाविद्यालयः, पाटलिपुत्रम् ।

काश्मीरस्य प्रत्यभिज्ञाया अद्वयं शिवाद्वयम्, शाङ्करवेदान्तस्य ब्रह्म ब्रह्माद्वयमिति प्रगीयतेऽत्र। तत्र प्रत्यभिज्ञादर्शनमुखेनैव कानिचित् तद्दर्शनतत्त्वान्युपगच्छता ब्रह्माद्वयेन संक्षेपतः साधर्म्यवैधर्म्ये निरूप्येते, तत्र च लेखकलेवरविवृद्धिभिया प्रायः प्रमाणवचनान्युपेक्षमाणेन वस्तुस्वरूपाण्येव दर्शयित्वा समापयितुं प्रयतिष्यते। तत्र प्रथमं शिवतत्त्वमिदम्।

यद्यपीश्वरप्रत्यभिज्ञाविमर्शिनीटीकाभास्करीप्रभृतिभ्यः शिवशक्तिसामरस्यस्वरूपस्य सप्तत्रिंशत्तत्त्वान्तरता आयाति। तस्यैव च प्राथम्यमुचितम्, तथापि शिवशक्तिवर्णनाभ्यामेवावसेयवर्णनीयतया तस्य, प्रसिद्धषट्त्रिंशत्तत्त्वाभ्युपगमरीत्यैवेदमस्य प्राथम्यमवसेयम्।

(१) तत्र शिवः प्रकाशः स्वप्रकाशश्च। स्वप्रकाशत्वञ्च स्वभिन्नप्रकाशाविषयत्वम्। अतो विमर्शशक्त्या अहं विमर्शविषयोऽपि शक्तिशक्तिमतोरभेदन्यायेन स्वभिन्नप्रकाशाविषयत्वमक्षतम्। अत एवाहमंशग्राहक इति गीयते। शिवस्य आत्मस्वरूपस्याहमिति स्फूर्तिरस्ति सैव च विमर्शशक्तिरिति भावः।

एवमस्य पद्यप्रदर्शनेन माहात्म्यं स्तूयते यच्छाङ्करवेदान्तस्य यत् परमं शुद्धं ब्रह्म प्रकाशस्वरूपमेवाहमिति विमर्शशून्यं स्वात्मनोऽप्यज्ञमुपलप्रायं ततोऽप्यग्रे विमर्शशक्तिपथा प्रत्यभिज्ञादृष्टिरञ्चतीति। शक्तिं विना निःसारं वस्तु जायते, अतः शक्तिं विना शिवोऽपि जडप्राय एव, शिवेन विना आश्रयहीना शक्तिरप्यकिञ्चिदेवेति वर्णनं विमर्शिनीटीकायामुपलभ्यते।

वेदान्तस्य ब्रह्म प्रकाशस्वरूपं स्वयंप्रकाशञ्च, आभ्यां शब्दाभ्यां शिवब्रह्मणोः साम्यगानम्, एवं जगदुपादानत्वविभुत्वनित्यत्वसर्वात्मत्वसजातीयद्वितीयराहित्यादिभिः समानता, शक्तिमत्त्वमपि साधर्म्यमेव, परं तत्तच्छब्दार्थविचारे विधर्मब्रह्मणा कः सधर्मा शिवो वान्यो वा साम्यं स्पृशेत्।

तथा हि—वेदान्तस्य ब्रह्म निर्धर्मकं प्रकाशस्वरूपमेव न स्वेन स्वाभिन्नेन परेण वा प्रकाश्यम्। स्वप्रकाशशब्दस्य स्वभिन्नः प्रकाशो नास्ति स्वयमेव प्रकाश इत्यर्थः। प्रकाश्यत्वं प्रकाशविषयत्वं वा जडत्वम्। ब्रह्मभिन्नं सकलं ब्रह्मप्रकाश्यत्वात् प्रकाश्यं जडस्वरूपम्, तच्छक्तिरशक्तिः स्वाभिन्नं भिन्नं वास्तु, समेषां जडतैव। तथा च प्रत्यभिज्ञाऽभिज्ञातौ शक्तिशिवावेतद्दर्शने जडस्वरूपावेव, अन्धसमुदायस्येवोभयोः सम्मिलितरूपस्य कुतः प्रकाशता ? सर्वस्य आन्ध्यप्रसङ्गः।

तद्दर्शनेऽपि शक्तिं विना शिवस्य, शिवं शक्तं विना शक्तेश्च निःसारता वर्णिता। एवं हि तत्स्फुटीक्रियताम्—विमर्शशक्तिः स्वयंप्रकाशा, अप्रकाशा वा ? तत्रापि प्रथमे शिवमपेक्षमाणा स्वयंप्रकाशा निरपेक्षमाणा वा ? तत्र प्रथमे स्वयमप्रकाशतैव सम्पन्ना। द्वितीये शिवं निरपेक्षमाणाऽपि सा सती प्रकाशस्वरूपा शिवं स्वप्रकाशेन समालिङ्गति तदा कथं शिवसापेक्षता तस्याः ? कीदृशी च परतन्त्रस्वभावतारूपशक्तिरूपता ? स्वयञ्चाप्रकाशस्वरूपा कथं शिवं प्रकाशतां नयेत ? अतः प्रथमविकल्पस्य द्वितीयकल्पोऽपि व्याख्यातः।

किञ्च, शक्तिशिवयोरभेदस्तादात्म्यमिव भेदसहिष्णुर्भेदासहिष्णुर्वा ? प्रथमे द्वैतगर्भे विभूती इयमद्वैतभावना पारमार्थिकं द्वैतमेव प्रसूते, परप्रकाशतया शिवस्य जडतामेव पोषयेत्। न द्वितीयः सर्वथाऽभेदे शक्तिशक्तिमद्भावस्य कुत्राप्यक्लृप्तत्वात्, स्थिरस्य परिवर्तमानो धर्मः, नित्यस्य वानित्यो धर्मः शक्तिरूपतया व्यवह्रियते, सर्वथाऽभेदे शक्तिरूपताया अक्लृप्तता। स्वभाव एव शक्तिपदेन व्यपदिश्यत इति चेत् स्वस्य भावो धर्म इति चेत् सर्वथाऽभेदे धर्मधर्मिभावस्यादर्शनात्। स्वं भाव इति चेत्, तत्रापि कष्टम्, अहमिति विमर्शमात्रमव्यक्तं शिवस्वभाव इत्यापत्त्या घटादिप्रकाशनार्थं प्रकाशान्तरस्यान्वेषणापत्तेः, घटप्रत्यक्षेऽहमिति विमर्शस्य अननुभवात्। शक्तेः शिवाद् पृथक् स्थित्यभावेन शक्तिरूपता स्वभावता वा शक्तेरिति तावतैवाभेदो व्यावहारिक इति चेत्, हन्त प्राप्तं, नैयायिकानामयुतसिद्धानामिव रामानुजदर्शनीयापृथक्सिद्धानामिव वस्तुतो स्वभावभिन्नानां व्यावहारिकं पारिभाषिकमद्वैतं ब्रह्माद्वयाद् दूरेऽपसर्पति। एवमहमिति विमर्शेऽपि बोध्यम्।

यद्यपि भामतीरीत्या अहमर्थः पूतिकुष्माण्डीकृतस्तथाऽपि तत्प्रकाशे चिदंशस्तदधीनश्चित्प्रतिबिम्बो वोपयुज्यत इति पश्चाद्भाविन्या अहमर्थबुद्धेः 'शक्ति-

ब्रह्मण्यपि वर्तते, ततश्च अहमिति विमर्शशक्तस्य शिवस्य ब्रह्मणि सामान्यं वर्णयितुं शक्यते, तथापि विवेचने महावैधर्म्यपर्यवसायि सिध्यति।

तथा हि—वेदान्तिमतेऽहमर्थस्य जडत्वं मायिकत्वं मिथ्यात्वञ्च। प्रत्यभिज्ञामते च प्रकाशस्वभावत्वं सत्यत्वञ्च। अहमिति विमर्शं विना आदिकारणस्य स्वप्रकाशस्य शिवस्य न न्यूनतैव, अपि तु तदधीनप्रकाशत्ववर्णनया स्वयं जडत्वापादकमिति तु प्रागुक्तमेव।

(२) द्वितीयं तत्त्वं शक्तिनामकम्—विमर्शस्वरूपा, अस्या निष्कर्षविचारे प्रकाशरूपतायां पर्यवस्यति। पूर्णा अकृत्रिमा अहं स्फूर्तिः, एतद्वशादेव शिवस्याहमंशग्राहकता। तत्सर्वन्तु वर्णितालोचितप्रायम्। इयमेव शिवस्य सृष्टिस्थितिसंहारशक्तिः, अस्या विश्वाकारस्फूर्तिः सृष्टिः, विश्वप्रकाशः स्थितिः, विश्वसंहरणं संहारः, विमर्शसंकोचः स्वरूपः। एषैव चेतनस्य शिवस्य चैतन्यं स्वातन्त्र्यं कर्तृत्वविज्ञातृत्वे स्फुरत्ता सारो हृदयं स्पन्दो वा गीयते।

एषा च वैदान्तिकेश्वरस्याविद्यामायादिशब्दवाच्यया शक्त्या विशेषतस्तुलनां बिभर्ति। मायैव परिणामपरम्परया अहमर्थं सूते, आवरणशक्त्या चाध्यासेन अहमिति चिदचिन्मिश्रणात्मकस्फूर्तिः, ईश्वराधिष्ठिताया अस्या एव विक्षेपशक्त्या विश्वाकारपरिणतिः सृष्टिः, परिणतकार्यरूपेणावस्थितिः स्थितिः। एवमेव संहरणमपि।

परिणामोपादानभूताया अस्या अनाद्यध्यासमूलमेव ईश्वरस्य सर्वोपादानत्वत्रिवृतिः कर्तृत्वमैश्वर्यम्, ईश्वरस्य सारो हृदयं स्पन्दस्वभावो वा सर्वं वर्णयितुं प्रभूयते। मायां विना ईश्वरे न किमप्यैश्वर्यमिप्यनया ईश्वरशिवयोः सम्यक् तोलनं जायते। ब्रह्मणा सह तुलनायास्तु परिहारो विहित एव।

परं जडस्वरूपाऽप्यधिष्ठानप्रकाशेनैव स्फुरति, अध्यस्ततया अधिष्ठानसाक्षात्कारेण निवर्तमाना बाध्या सत्यधिष्ठानस्य सर्वथाऽबाध्यमानत्वं पारमार्थिकमद्वैतं न विरुणद्धि, स्वयं बाध्यमाना स्वकार्यजगतो बाध्यमानत्वं द्योतयन्ती ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वं विशदयति।

विमर्शप्रकाशरूपा चेयं शिवशक्तिः शिवं प्रकाशयन्ती शिवस्य जडतामानयति, स्वयमबाध्यमानया स्वाश्रयस्यापि सत्तया द्वैतमापादयति, स्वकार्याण्यप्यबाध्यमानानि सृजन्ती नाना सत्यानि सम्पादयन्ती अद्वैतं दूरमपसारयति।

ननु सजातीयद्वितीयराहित्यमेवाद्वैतम्, वेदान्तिमते व्यावहारिकसदां नानात्वेऽपि परमार्थसत एकस्यैव सत्त्वाद् यथाऽद्वैतम्, तथा स्वप्रकाशस्यैकस्यैव शिवस्य सतः सर्वत्र स्फुरणाद् लाघवाच्चैकमेव सदिति कुतो नाद्वैतमिति वाच्यम्, विकल्पासहत्वात्, तथा हि—शक्तिशक्तिमत्त्वं वेदान्तिनामिव व्यावहारिकं पारमार्थिकं वा ? आद्ये शक्तेरपि बाध्यमानतया तत्कार्याणां सुतरां मिथ्यात्वाद् भवतु नामाद्वैतदर्शनशरणं शरणम्, केवलं प्रक्रियाभेदः। द्वितीये शक्तिशक्तिमत्त्वे पारमार्थिके द्वयोः सत्ताया अनिवारणात्। न च शक्तौ द्वितीयत्वं नास्तीति वाच्यम्, अस्य वचसः शक्तिर्नास्तीत्याकार एव परिणमनात्।

(३) तृतीयं सदाशिवतत्त्वम्—शिवस्य आन्तरनिमेषो भवति। ज्ञानमेवात्र दर्शने क्रियारूपतां धत्ते, क्रियाप्रादुर्भावस्य प्रागवस्थामान्तरनिमेषशब्दः परिचाययति, अत एव चलनस्य स्फुरणमिति पर्यायः। अत्रेदमंशोऽपि विषयांशप्रायः स्फुरति, परमहमिति चैतन्यांशस्फूर्त्या आच्छादित एव भवति। अस्यामवस्थायां बाह्यसत्तायाः स्फुरणात् सद्वाचकोऽस्ति सदाशिवे सच्छब्दो न तु कालद्योतकः।

(४) चतुर्थमीश्वरतत्त्वम्—शिवस्य बाह्यनिमेषाऽवस्थायां शिव एवेश्वरो व्यपदिश्यते, सदाशिवावस्थायां विषयाणां शक्तिरूपेणावस्थानमीश्वरावस्थायान्तु स्फुटरूपेण। अस्यामवस्थायामिदमिदमिति विषयप्रधानो विमर्शः, परमहमंशेन चिदात्मना विभेदरहित एवेदमंशः स्फुरति।

संक्षेपत इत्थमद्वैतवेदान्ततुलामधिरोहति। सिसृक्षात्मकमायावृत्तिस्वरूपेक्षणो-पाधिकः परमेश्वरः सदाशिवः, बहुभवनेक्षणोपाधिकश्चेश्वरोऽत्र गीयते। अन्य-नाम्नाऽपि साम्यता प्रतिपादयितुं शक्यते। वैधर्म्यन्तु पारमार्थिकत्वव्यावहारिकत्वाभ्यां स्फुटमेव।

(५) शुद्धविद्यातत्त्वम्—अहमंशेदमंशयोः समानभावेन स्फूर्तिः, एतावत्पर्यन्तं शिवात्मताया सर्वत्र जगति विमर्शस्तिष्ठतीति विद्यापदेनोच्यते।

(६) षष्ठं मायातत्त्वम्—"कलादीनां तत्त्वानामविवेको माया" (३।३) इत्यादि-शिवसूत्रसम्मतम्। अविवेकवशाज्जडेष्वपि शिवात्मता न स्फुरति, अहमंशेदमंशयोः स्वातन्त्र्येण पृथगवभासः। द्वैतं स्फुटं भवति, चैतन्यांशस्य क्रमशः सर्वानुस्यूतत्व-

संकोचो जागर्ति। यथा शाङ्करमतेऽऽवरणशक्त्या ब्रह्मणः स्फुटतयाऽनवभासः, विक्षेपशक्त्या च नानाविधस्य सृष्टिः। तादृगेवेयं माया विद्यते।

एवं निष्कलो निरंशोऽपि भगवान् शिवः सर्वानुस्यूततायाः संकोचेन परिमित-शक्तिसम्पन्नः सर्वकर्तृत्वं विसृज्य किञ्चित्कर्तृत्वं धत्ते। परिमितत्तामापन्नः सर्ववस्तु-सम्पर्काभावाच्छरीरेन्द्रियसम्बद्धानेव गृह्णन् सर्वज्ञतां विहाय किञ्चिज्ज्ञः सम्पद्यते, परिमिततया किञ्चिज्ज्ञतया च नित्यतृप्तेरभावात् सन्निकृष्टविषयानुरागी भवति, कालवशतया च परिच्छिद्यमानो नित्यतां निरुन्धे, परिमितशक्तितया च स्वातन्त्र्य-विहीनो जायते। निरोधकानि च आवरणशक्तिरूपाणि कञ्चुकपदव्यपदिष्टानि कला-७ विद्या-८ राग-६ काल-१० नियति-११ रूपाणि सप्तमादारभ्यैकादशं यावत पञ्च तत्त्वानि परिगण्यन्ते, ततश्च पुरुषो द्वादशतत्त्वमवतरति। स एव च जीवात्मा स्थूलजगति अहमंशश्चेतनः, तद्भिन्नाश्च सर्वे जडस्वरूपा इदमंशा विषयांशा वा त्रयोदशं प्रकृतितत्त्वम्। अग्रे च सांख्यानुसारी प्रायस्तत्त्वानामाविर्भावः।

प्राय एवमेव शब्दान्तरेण वर्ण्यमानं शाङ्करवेदान्तेऽपि। तूलाविद्याऽवच्छे-दवशादन्तःकरणतादात्म्याध्यासाद्वा सर्वसम्बन्धाभावाद् यत्किञ्चित्कर्ता, ज्ञानेऽन्तः-करणवृत्तिपरतन्त्रतया सकलविषयसन्निकर्षाभावादल्पज्ञः, विषयलाभाभावेन तृप्तेरभावाद् रागवान्, शरीरेन्द्रियपरतन्त्रतया तेषां कालावच्छेदाच्चानित्यः, कर्मादिशक्तिनियन्त्रि-तश्च स्वातन्त्र्यविहीनो जीवश्चेतनो भवति।

यथा च वेदान्ते परिणामस्वभावा माया नानारूपतां धत्ते, ब्रह्माधिष्ठिताया मायायाः परिणामा अपि ब्रह्मण्यध्यस्ताः, अधिष्ठानाध्यस्तयोरभेदव्यवहार इदं रजतमिति भ्रमस्थले क्लृप्तः, अधिष्ठानसत्तया च स्फुरन्तो मायापरिणामाः कार्याणि सर्वं ब्रह्ममयं जगदिति रीत्या ब्रह्मरूपाण्येव, तथा प्रत्यभिज्ञादर्शनेऽप्यनन्तशक्ति-समष्टिरूपाया विमर्शशक्तेर्नानाकारपरिधानाद् विमर्शशक्तिमतोऽभिन्नस्य शिवस्यापि सर्वात्मकतया शिवाद्वैतं निर्बाधं सिध्यति। वेदान्तनये च मिथ्याभूतमायाकार्यतया-ध्यस्ततया च मिथ्याभूतानां विकाराणां बाध्यमानतया स्वतःसिद्धं प्रकाशमात्र-सारं ब्रह्माद्वयमवशिष्यते। त्रिकमते तु सत्या शक्त्या प्रसूतानामनध्यस्तानां विका-राणां सतामेव शक्त्यभिन्नशिवप्रसूतानां सतां शिवात्मकतया शिवाद्वयं निर्वहति। वेदान्ते नानात्वमसत्, शैवमते नानात्वमपि सत्। वेदान्ते नाना वस्तूनि मिथ्या-

भूतानि ब्रह्मैव सत्, त्रिकतन्त्रे नाना वस्तूनि सन्ति सन्ति शिवात्मकानि, अत एव शिवाद्वैतम् ।

परिणामवादे उपादानस्य विकारित्वम्, विवर्ते च विकाराणामविद्याकार्यतया मिथ्यात्वम्, अत्र स्वातन्त्र्यवाद उभयविलक्षणतयोपादानस्य शुद्धत्वं विकाराणामपि सत्यत्वम् । शिवस्येयं भगवती स्वातन्त्र्यशक्तिरतुलितमहिमा किं किं न कर्तुमकर्तुञ्च समर्था येन काचिदनुपपत्तिः प्रसरेत् ।

तथा हि--शिवस्येश्वरादिरूपतापन्नत्वं कादाचित्कं स्वाभाविकं वा ? आद्ये निरपेक्षं सापेक्षं वा ? तत्र निरपेक्षतायां मुक्तावप्यहङ्कारप्रभृतिपर्यन्तसर्जनात् कादाचित्कभोगापत्तेः, सापेक्षतायां सहकारिणः प्रक्षये शिवात्मककार्यस्य विनाशे शिवस्य विलयापत्तेः । स्वाभाविकत्वे शिवस्य सर्वदाभाववद् भोगसाधनानां विकाराणां सर्वदाभावात् किं कुर्यात् संहरणशक्तिः ? किन्तु लोकवत्तु लीलाकैवल्यमिति न्यायेन स्वातन्त्र्यशक्त्या कदाचित्सृष्टिः कदाचन चोपसंहरणम्, मुक्तानाञ्च न भोगः ।

ईश्वरानुग्रहादेषा पुंसामद्वैतभावनेति रीत्यैव दीक्षोपेयस्य शक्तिपातापरनामकस्य शिवानुग्रहवशादेव सर्वत्राहमिति स्फूर्तिद्वारा शिवात्मसाक्षात्कारस्तेन च मुक्तिरिति ।

प्रत्यभिज्ञोपयोगोऽपि वेदान्तदर्शनमनुहरति, शास्त्रेषु यः सर्वकर्ता सर्वज्ञः स्वतन्त्रः शिवः श्रुतः स एवाहमिति प्रत्यभिजानन् क्रमशो मनननिदिध्यासनसिद्धिद्वारा शिवात्मतां साक्षात्कृत्यमुच्यते । वेदान्तेऽपि तत्त्वमसि श्वेतकेतो ? इति महावाक्यं सदेव सोम्येदमग्र आसीदित्यादि श्रौतं सदात्मानं श्वेतकेत्वात्मतया ग्राहयति, गृहीतवाक्यार्थश्च श्वेतकेतुः स एवाहमित्येव आत्मानं भावयेत् । तथा च प्रत्यभिज्ञा न नूतना । अग्रे लक्षणया अखण्डार्थवर्णनं वेदान्तस्य तत्त्वस्तु विशेषः, परं प्रत्यभिज्ञापर्यन्तं तु गृहीतमेव । इति विस्तरभिया संक्षेपतः संसूच्य विरमति ।।

---

# शुद्धाध्वस्वरूपविमर्शः

श्रीरघुनाथपाण्डेयः, वा० सं० वि० विद्यालये, आगमाध्यापकः ।

ध्यायामः परमं भर्गं शिवाख्यं वयमद्भुतम् ।
शुद्धाध्वभावनाप्राप्ते यस्मिन् कृत्यं न विद्यते ॥ १ ॥
शक्तिं स्मरामि मनसा शिवस्य परमेशितुः ।
स्वतन्त्रोऽपि शिवः कर्तुं नालं विश्वं यया विना ॥ २ ॥
सर्वज्ञं यामि शरणं करुणावारितक्रतुम् ।
मुक्तये सर्वलोकस्य येन मुक्तिर्न काम्यते ॥ ३ ॥
वासुदेवं परं धाम विविधव्यूहतां गतम् ।
प्रपद्ये दास्यभावेन शुद्धसर्गस्य कारणम् ॥ ४ ॥
तत्त्वतत्त्वेशरूपाभ्यां प्रत्येकं पञ्चतायुतम् ।
शुद्धाध्वानमुपेताय नमः शान्ताय शम्भवे ॥ ५ ॥
अशुद्धं पुनरध्वानमणूनां भोगसिद्धये ।
कलादितत्त्वं सृजतेऽघोरेशाय नमोऽस्तु ते ॥ ६ ॥

## अध्वशब्दार्थनिरूपणम्

अथातः सर्वेषामागमानां शिरोमौलिरत्नं शुद्धाध्वा विमृश्यते। तत्राध्वा नाम अमूर्तायाः सर्वगतायां निष्क्रियायाश्च संविदो यन्मूर्त्यात्मना क्रियात्मना चावभासनं तदेव च महेशितुरध्वा। स च शुद्धाशुद्धभेदेन द्विविधः। तत्र मन्त्रादिरूपः शुद्धाध्वा। भुवनादिरूपस्त्वशुद्धः। तत्र लोके यातव्ये ग्रामादौ सम्प्राप्तिकारणमध्वपदेन व्यपदिश्यते। एवमणूनां यातव्ये शिवतत्त्वात्मनि पदे तत्तत्त्वोलङ्घनक्रमेण शिवतत्त्वस्य संप्राप्तिकारणमध्वपदेन व्यवह्रियते। तत्र पञ्चविंशतिस्तत्त्वानि सांख्ये प्रसिद्धान्येवात्रापि, अन्यानि त्वेकादशेमानि—शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या, माया, कला, विद्या, रागः, कालः नियतिः। किञ्चाद्यत इत्यध्वेति व्युत्पत्त्यापि सर्वेषां तत्त्वाध्वनां शिव-

तत्त्वातिरिक्तानां द्वैतिभिर्भोग्यत्वादध्वपदेन व्यपदेशः। तथा च पूर्वस्मिन् पक्षे रूढ्या-ऽध्वपदस्य तत्त्वेषु प्रयोगः। द्वितीयस्मिन् पक्षे तु योगशक्त्येत्यलौकिकोऽयं तत्त्वेष्वध्वपदप्रयोगः, अधिगततत्त्वा हि सर्वं स्वात्मसात्कुर्वन्तीति सिद्धान्तमूलकः।

## शुद्धोऽध्वा

सोऽयं तत्त्वाध्वा शुद्धाशुद्धभेदेन द्विविधः प्रागुपदर्शितः। तत्र शुद्धोऽध्वा पञ्चधा भवति। चित्प्राधान्ये शिवतत्त्वम्, आनन्दप्राधान्ये शक्तितत्त्वम्, इच्छाप्राधान्ये सदाशिवतत्त्वम्, ज्ञानशक्तिप्राधान्ये ईश्वरतत्त्वम्, क्रियाशक्तिप्राधान्ये शुद्धविद्यातत्त्वम्। अत्र च क्रमेण तत्त्वेश्वराः शिवशक्तिसदाशिवेश्वरानन्ताः। एते च सामान्यरूपा एताननुगताश्चाणवो यथाक्रमं शाम्भवाः शाक्ता मन्त्रमहेश्वरा मन्त्रेश्वरा मन्त्रा इति च विशेषैर्व्यपदिश्यन्ते। इति शुद्धोऽध्वा। अस्मिंस्तु शुद्धाध्वनि साक्षात् शिवः कर्ता। तदुक्तं रत्नत्रये—

शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः।

किञ्च, परनादाख्यो बिन्दुः शुद्धाध्वन उपादानकारणम्, उत्पत्तिस्थितिलयाधिष्ठानत्वात्। तदुक्तं रत्नत्रये--

जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयते।
स बिन्दुः परनादाख्यो नादबिन्द्वर्णकारणम् ॥ २२ ॥

किञ्च शुद्धाध्वनः संप्राप्तिकारणं शक्तिपातरूपानुग्रहपूर्विका दीक्षैव, सा च सत्यसंवित्प्रवेशफलिका सत्यसंवित्स्वरूपिणी च एका। तदुक्तम्—मालिनीविजयवार्त्तिके—

दीक्षा च वस्तुतस्तादृक् सत्यसंवित्स्वरूपिणी॥ १११६ ॥
एतद्दीक्षामहासंवित्प्रवेशाय च भण्यते ॥ ११२१ ॥

द्वितीया तु क्रियास्वभावदीक्षा। कर्मादिमलहानिहेतुः शुद्धाध्वप्राप्तेरुपायः। तदुक्तं तत्रैव—

दीक्षादिकर्मयोगे तु न मलत्वं प्रतायते ॥ १११८ ॥
सहि भेदमयाशेषसंसारदहनव्रतः ॥१११६ ॥
क्रियास्वभावदीक्षाऽसौ कर्मादिमलहानये ॥ ११२२ ॥

## शुद्धाध्वस्वरूपविमर्शः

कर्मादिमलहानिरेव शुद्धाध्वनि शुद्धिः । यश्च बिन्दुः शुद्धाध्वन उपादानकारणत्वेन प्रागुक्तः स आगमशास्त्रेऽनाहतबिन्दुपदव्यपदेश्यः, स एव च शुद्धाध्वयोनिर्महामाया। एवमन्येऽपि बिन्दुपर्यायाः प्रोक्ता रत्नत्रये—

शब्दतत्त्वमघोषा वाग् ब्रह्म कुण्डलिनी ध्रुवम् ।
विद्याशक्तिः परा नादो महामायेति देशिकैः ॥
बिन्दुरेव समाख्यातो व्योमानाहतमित्यपि ॥६०-६१॥

किञ्चात्राशुद्धाध्वनि विद्येश्वरादीनां भोक्तृत्वश्रुतेर्भोगस्य शरीराद्यविनाभावादशुद्धभोगसाधनशरीरादिहेतूनां मलमायाकर्मणां तत्रासंभवात् । शुद्धभोगसाधनैः शरीरादिभिर्भोक्तृत्वहेतुः शुद्धोऽधिकारमलः शुद्धं चेश्वरसेवादिकं सहकारि कर्म शुद्धा च माया शरीराद्युपादानमनुमीयते, तयोश्चाधिकारमलेश्वरसेवात्मककर्मणोर्महामायाभुवनप्राप्तिः तत्कारणभूतदीक्षा वा संपादिका। मायोत्तीर्णानां विच्छिन्नावारकमलादीनामेव तत्संभवात् । तदुक्तं रत्नत्रये—

तत्र भोक्तृतया भोगैः शरीरेन्द्रियगोचरैः ।
मलः कर्म च माया च विशुद्धमनुमीयते ॥
मायैव कारणं शुद्धाशुद्धयोर्मलकर्मणोः ॥१७३॥

## शुद्धाध्वशरीराणि

अस्मिंश्च शुद्धाध्वनि विद्येश्वरादीनां शरीराणि बैन्दवानि आगमशास्त्रेषु समाख्यातानि। न केवलं बिन्दुः शुद्धाध्वन एव उपादानकारणं किन्त्वशुद्धस्य कलाध्वनोऽपि । तथा हि–अशुद्धो बिन्दुरशुद्धमायापदव्यपदेश्योऽशुद्धाऽध्वन उपादानकारणम् । शुद्धो बिन्दुस्तु शुद्धमायापदेन महामायापदेन च व्यपदेश्यः शुद्धाध्वन उपादानकारणमिति शुद्धाशुद्धभेदभिन्नो बिन्दुरेवोभयोरध्वनोरुपादानकारणम् । अन्यथा अन्यस्य शुद्धयान्यो न शुद्धयेदिति कथं षडध्वशुद्धया संप्राप्तिरुपपद्यते । सूचितं चैतद्रत्नत्रये—

येषां माया मते नित्या कलाविद्यादिकारणम् ।
न तेषामसितो मार्गः कलाशुद्धया विशुद्धयति ॥१६०॥

एतच्छ्लोकव्याख्यावसरेऽघोरशिवाचार्येण ।

किञ्च शुद्धाध्वनि कर्मणः प्रगमासंभवात् तज्जन्यस्य च भोगस्य सुखदुःखमोह-रूपत्वेनाशुद्धत्वात् सदाशिवादिभुवनवर्त्यपरमोक्षसंज्ञः शुद्धभोगः। परमोक्षश्च शिव-साम्यरूपो योगादिसहकृतदीक्षया प्राप्यते। तत्र मलपरिपाकमान्द्ये भौतिकदीक्षाभाजां भोगानन्तरं मोक्षप्राप्तिः। विशिष्टमलपरिपाकवतां नैष्ठिकदीक्षाभाजां शरीरपाता-नन्तरं सद्यो निर्वाणदीक्षाभाजां च तदनन्तरमेव मोक्षप्राप्तिः।

## अध्वभेदाः

श्रीभोजदेवकृते तत्त्वप्रकाशे तु शैवरहस्यमनुसृत्य साङ्ख्यमतसंवादि च शुद्धशुद्धा-शुद्धकेवलाशुद्धभेदेनाध्वत्रयं प्रदर्शितम्। तथा हि—तत्र शिवस्वरूपत्वात् पञ्च तत्त्वानि शुद्धानि—शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या चेति। एतत्तत्त्वपञ्चकमुत्तमम्। मध्यमं तु तत्त्वसप्तकं पशुरूपत्वात् शुद्धाशुद्धम्। तच्च कारणमाया, कार्यभूतं तत्त्व-पञ्चकम्, कालो नियतिः कला विद्या राग इति। एतत्तत्त्वपञ्चकोपहितश्च पुरुषः सप्तमः, इत्येवं तत्त्वसप्तकम्। पूर्वोक्तं च कालादितत्त्वपञ्चकं पुरुषस्य ज्ञानार्थं कर्तृत्वार्थं च मायात उत्पद्यते। इदं च तत्त्वसप्तकं शुद्धाशुद्धमुक्तं शैवरहस्ये—

माया कालो नियतिः कला च विद्याभिलाषकृत्पुरुषः।
क्लृप्तानि सप्तधैवं शुद्धाशुद्धानि तत्त्वानि॥

शिष्टं तु तत्त्वमव्यक्तादिपृथिव्यन्तं केवलाशुद्धम्। तथा हि—अव्यक्तस्य मायात उद्भवः, अव्यक्ताद् गुणतत्त्वस्य, गुणतत्त्वाद् बुद्धेः, बुद्धितत्त्वादहङ्कारस्य, अहङ्कारान्मनोबुद्धीन्द्रियकर्मेन्द्रियतन्मात्राणामुद्भवः, तन्मात्रेभ्य आकाशादिपृथिव्य-न्तानामिति।

पुरुषस्य पशोः स्वकृतपुण्यापुण्यफलभूतसुखदुःखानुभवार्थं त्वेषां त्रयो-विंशतितत्त्वानां मायात उद्भवः। यद्यपि प्रागुक्ततत्त्वानां संकलनया चतुर्विंशतिसंख्या संपद्यते। तथापि—अव्यक्तपदव्यपदेश्यायाः प्रकृतेर्गुणतत्त्वस्य चात्यन्तिकभेदा-भावात् त्रयोविंशतितत्त्वसंख्योपपत्तिः। भोगस्तु भोगायतनं भूतात्मकं शरीरं भोग-साधनानीन्द्रियाणि भोग्यान् शब्दादिविषयान् विना न संभवतीति भोगार्थमेषां तत्त्वानां जन्म। एतदुक्तं शैवरहस्ये—

शुद्धाध्वस्वरूपविमर्शः

अव्यक्तबुद्ध्यहङ्कृतिमनांसि चत्वारि शब्दमात्राद्यम् ।
श्रोत्राद्यं वागाद्यं वियदाद्यं पञ्चकं च पृथक् ।
तत्त्वचतुर्विंशतिकं त्रिगुणात्मतयैव केवलाशुद्धम् ।। इति ।

## शिवतत्त्वम्

अथेदानीं शुद्धाध्वनोऽत्यन्तं संस्तवाय तद्वर्तीनि पञ्च शिवादितत्त्वान्यवश्यं निरूपणीयानीति तेषु प्रथमं शिवतत्त्वं निरूप्यते। तत्र शिवतत्त्वमेकमद्वितीयमखिलस्य तत्त्वजातस्य कारणं सर्वभूतस्वरूपेणावस्थितं सर्वगतं नित्यं साक्षित्वरूपज्ञान-क्रियास्वभावमागमाचार्याणां सम्मतम्। तस्य च स्वव्यतिरिक्तं यद्यस्ति तदा तदनु-गतत्वाद् व्यापकम्। वस्तुतस्तु शिवव्यतिरिक्तं तत्त्वं नास्त्येवात्यन्तभिन्नमिति कारणरूपेण सर्वानुगमाद् व्यापकत्वम्। स्वसमानासमानपुरुषान्तराभावादेकत्वम्। व्याप्त्येकत्वे चाकाशस्यापि स्त इति तन्निवृत्त्यर्थं नित्यपदोपादानम्। व्याप्तिनित्य-त्वैकत्वानि पशोरपि विद्यन्त इति तन्निवृत्त्यर्थं कारणमखिलस्य तत्त्वजातस्येति पदम्। मायायाश्च व्यापकनित्यत्वैकत्वाखिलकारणत्वसद्भावात् तन्निवृत्त्यर्थं ज्ञानक्रिया-स्वभावमित्युक्तम्। अतो यद् व्यापकमेकं नित्यमखिलतत्त्वकारणं ज्ञानक्रियास्वभावं तच्छिवतत्त्वमिति। एतदुक्तं श्वेताश्वतरे—

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः।
सर्वव्यापी स भगवांस्तस्मात् सर्वगतः शिवः ।। इति ।

शिवधर्मोत्तरे च—

आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः ।
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे ।। इति ।

इदं च शिवतत्त्वं तत्त्वप्रकाशसम्मतम्। पराप्रावेशिकायां तु—शिवतत्त्वं नाम इच्छाज्ञानक्रियात्मकः केवलपूर्णानन्दस्वभावः परमशिव एव। अस्य परमे-श्वरस्य जगत्स्रष्टुमिच्छां परिगृहीतवतः प्रथमः स्पन्द एवेच्छाशक्तितत्त्वम्। स च परमेश्वरस्य प्रथमः स्पन्दः स्वस्वातन्त्र्यमाहात्म्याद् बहिरुल्लिलसिषया परानन्द-चमत्कारोद्रेकादहमिति परामर्शरूप इत्युक्तम्। जगतः प्रलयोदयौ निमेषोन्मेषरूपौ भगवत इच्छाशक्तिमात्रनिमित्तकाविति भगवत इच्छाशक्तावनन्तावभासविशेष-

चित्रं जगद् मनागप्यनुपजातविशेषात् स्वरूपादविकृतादव्यतिरेकेणैवावतिष्ठते। सेयं परमार्थसती शिवदशा, या एवं विद्वद्भिः स्तूयते—

सदा सृष्टिविनोदाय सदा स्थितिसुखासिने।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः॥ इति।

प्रथमस्पन्दकारिकातद्व्याख्यापर्यालोचनेन शिवतत्त्वं प्रतीयते। स्पन्दकारिकोक्तमेव च शिवतत्त्वं 'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति' इति द्वितीयस्मिन् शक्तिसूत्रे सूचितम्, एतद्विवृण्वता च क्षेमराजेन व्याख्यया विशदीकृतम्। तन्त्रालोके तु भगवतः शिवस्य ज्ञानशक्तौ ज्ञेयस्य विश्वस्य स्थितिरुक्ता। तस्या एव विश्वमुन्मीलति निमीलति च तस्यामेवेति ज्ञेयस्य विश्वस्य परं तत्त्वं प्रकाशात्मकः शिव एवेति। तदुक्तम्—

ज्ञेयस्य हि परं तत्त्वं यः प्रकाशात्मकः शिवः।
नह्यप्रकाशरूपस्य प्राकाश्यं वस्तुताऽपि वा॥
(तन्त्रा० १।५२)

'ततश्च शिवस्येच्छाशक्तौ जगत्स्थितं तत एवोन्मीलति निमीलति च' इति स्पन्दकारिकाद्यभिमते मते औपनिषदानां सृष्टदृष्टिवादः फलति, शिवेच्छया सृष्टस्य विश्वस्य दृष्टेः। शिवस्य ज्ञानशक्तौ विश्वं स्थितमित्यभिनवगुप्ताचार्यमते तु दृष्टिसृष्टिवाद इति।

ईश्वरप्रत्यभिज्ञायां तु मतभेदेन शिवस्य इच्छाशक्तौ ज्ञानशक्तौ वा विश्वं स्थितमिति निरूपितम्। तत्राद्ये मानम्—

चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद् बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत्॥
(ईश्वरप्रत्य० १।५।७)

द्वितीयस्मिन् मानं तु—

या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः॥
(ईश्वरप्रत्य०)

अत्र पूर्वार्धेन शिवतत्त्वमुपवर्णितमुत्तरार्धेन तु तस्य परमेश्वराभेदो वस्तुभूत उक्तः।

श्रीकण्ठभाष्यस्य शिवार्कमणिदीपिकायां तु दहरविद्योपास्यः परमात्मा शिव एवेत्याचार्यस्य मतमुपन्यस्याग्रे—

समेधयति यन्नित्यं सर्वार्थानामुपक्रमम्।
शिवमिच्छन्मनुष्याणां तस्माद्देवः शिवः स्मृतः॥

इति महाभारतवचनं शिवशब्दस्य मनुष्यादिहितैषित्वतत्प्रारिप्सितपुरुषार्थोपयोगिसकलव्यापारसमेधयितृत्वप्रवृत्तिनिमित्तकत्वेन व्याख्यानपरतयोक्तम्। ततोऽप्यग्रे-महाभारत एव शिववचनम्—

समा भवन्ति मे सर्वे दानवाश्चामराश्च ये।
शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः॥ इति।

वश कान्ताविति धातोर्वर्णव्यत्ययेन सिद्धश्शिवशब्दः पृषोदरादिः। तदाहुः—

हिसिधातोः सिंहशब्दो वशकान्तौ शिवः स्मृतः।
वर्णव्यत्ययतः सिद्धौ पश्यकः कश्यपो यथा॥ इति।

तेन शिवशब्दस्य इच्छावानित्यर्थलाभे कस्मिन्निति तद्विषयाकांक्षायां देवासुरमनुष्यादीनां शिवे विषय इत्ययमर्थः शिवमिच्छन् मनुष्याणामित्यार्षवचनप्रामाण्याल्लभ्यते। समेधयतीति व्युत्पत्त्यनन्तरं तु शिवशब्दाच्छुभवाचिनस्तत्करोतिण्यन्तात्पचाद्यच्प्रत्ययेन लभ्यते। व्युत्पत्तिद्वयनिष्पन्नस्यापि शिवशब्दरूपस्य परमेश्वरवाचकस्य तन्त्रेणोच्चारणादुक्तार्थसिद्धिः। अपि च शिवशब्दः सकृदुच्चारणमात्रेण सकलदुरितहरः, अपि वा "यश्चण्डालः शिव इति वाचं वदेत्तेन सह संवदेत्तेन सह संवसेत्तेन सह भुञ्जीत", "यद् द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्" इत्यादिश्रुतिपुराणप्रामाण्यात्। अत एव चाष्टादशविद्यास्थानमध्ये सर्वतः सारतरत्वमस्य पौराणिका वर्णयन्ति।

विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनीश्रुतौ।
तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम्॥

इति शिवतत्त्वमाहात्म्यनिर्दिदिक्षया शिवेति नाम्नो निर्वचनमुपदर्शितम्। इदं चात्रोपवर्णितं शिवस्य स्वरूपं न शुद्धं शिवतत्त्वम्, तत्र शक्तिमात्रेणैवेच्छादीनामवस्थानात्, अत्र तु इच्छादीनां स्वरूपेणावस्थानमुपवर्णितमिति विशेषात्।

तन्त्रालोके तु शिवतत्त्वस्य स्वतःसिद्धचिद्रूपत्वेन स्वसिद्धौ प्रमाणान्तरानपेक्षत्वरूपं स्वातन्त्र्यं प्रथमाह्निके (५६-६१) एकोनषष्टिषष्टिश्लोकाभ्यामुक्तम्। षष्टि-एकषष्टितमपद्याभ्यां तस्य दिग्देशकालानवच्छिन्नत्वं विभुत्वं नित्यत्वेनाद्यन्तरहितत्वं चोक्तम्। द्वाषष्टितमेन च पद्येन तस्य विश्ववैचित्र्यावभासकत्वं तेन बहुरूपत्वं चोक्तम्—

भुवनं विग्रहो ज्योतिः खं शब्दो मन्त्र एव च।
बिन्दुनादादिसंभिन्नः षड्विधः शिव उच्यते॥

इति (६३) त्रिषष्टितमेन पद्येन शिवस्य षड्विधत्वमुक्त्वा एतेषां रूपाणां वस्तुतो विमर्शमात्रसारशिवतत्त्वरूपत्वाभावेऽप्येतेषां ध्यानेन फलाभिलाषशून्येन वस्तुभूतशिवतत्त्वैकात्म्यापत्तिरूपो मोक्षो निस्संशयं भवतीति चतुःषष्टितमेन पद्येनोपसंहृतम्। ईश्वरप्रत्यभिज्ञा (३ अ० १ आ० १ कारिका) विमर्शिन्यां तदेतदविद्युक्त-ज्ञानक्रियारूपं क्रियाद्वारेण सकलतत्त्वराशिगतसृष्टिसंहारशतप्रतिबिम्बनसहिष्णु यत् तदुपदेशभावनादिषु तथा भासमानमनाभासरूपमपि वस्तुतः शिवतत्त्वमित्युक्तम्।

## शक्तितत्त्वम्

शक्तिस्वरूपं तु "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति प्रत्यभिज्ञाहृदये प्रथमसूत्रे विश्वस्य सदाशिवादेर्भूम्यन्तस्य सिद्धौ निष्पत्तौ प्रकाशने स्थित्यात्मनि परप्रमातृविश्रान्त्यात्मनि च संहारे पराशक्तिरूपा चितिरेव भगवती स्वतन्त्रा अनुत्तरविमर्शमयी शिवभट्टारकाभिन्ना हेतुः कारणम्। अस्यां हि प्रसरन्त्यां जगदुन्मिषति व्यवतिष्ठते च, निवृत्तप्रसरायां च निमिषतीति स्वानुभव एवात्र साक्षी। अन्यस्य तु मायाप्रकृत्यादेश्चित्प्रकाशभिन्नस्य अप्रकाशमानत्वेन असत्त्वाद् न क्वचिदपि हेतुत्वम्, प्रकाशमानत्वे तु प्रकाशैकात्म्यात् प्रकाशरूपा चितिरेव हेतुः, न त्वसौ कश्चित्। अत एव देशकालाकारा एतत्सृष्टा एतदनुप्राणिताश्च नैतत्स्वरूपं भेत्तुमलमिति व्यापकनित्योदितपरिपूर्णरूपेयमित्यर्थलभ्यमेवैतदित्युक्तम्।

## सदाशिवः, ईश्वरः, शुद्धविद्या च

पराप्रावेशिकायां तु भगवतोऽप्रतिहतेच्छत्वात् सदेवाङ्कुरायमाणमिदं जगत् स्वात्मनाऽहन्तयाऽऽच्छाद्य स्थितं रूपं सदाशिवतत्त्वम्, अङ्कुरितं जगदहन्तया-

## शुद्धाध्वस्वरूपविमर्शः

ऽऽच्छाद्य स्थितमीश्वरतत्त्वम् , अहन्तेदन्तयोरैक्यप्रतिपत्तिः शुद्धविद्येत्युक्तम् । नामधेयान्तरमपि ईश्वरसदाशिवरूपतत्त्वद्वये दर्शितमीश्वरप्रत्यभिज्ञायाम्— "ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः" (ईश्वरप्रत्यं ३।१।३) इति कारिकाया व्याख्यावसरे—विश्वस्य हि स्फुटत्वं बाह्यत्वमुन्मेषणां निमेषणां त्वस्फुटत्वापादनमन्तारूपतोद्रेचनमिति निमेषः सदाशिवतत्त्वम् । उन्मेषस्तु ईश्वरतत्त्वमेवं निमेषोन्मेषशक्ती एव सदाशिवेश्वरौ । अस्यामेव कारिकायामहमिदंधियोर्यत्सामानाधिकरण्यं सा शुद्धविद्येत्युक्तम् । अत्रायं विवेकः—यदा परमेश्वरः शुद्धचिन्मात्राधिकरणा एवाहमित्यंशे इदमंशमुल्लासयति तदा तस्य प्रोन्मीलितमानचित्रकल्पभावराशिविषयत्वेन अस्फुटत्वाद् इच्छाप्रधानं सदाशिवतत्त्वम् । स्फुटीभूते चेदमंशे यदाऽहमंशं निषिञ्चति तदा ज्ञानशक्तिप्रधानमीश्वरतत्त्वम् । अनयोः प्रोक्तयोस्तत्त्वयोरहंविमर्शस्याविशेषेऽपि इदमंशस्य ध्यामलत्वाध्यामलत्वाभ्यां विशेषः । यदा पुनः प्ररूढभेदभावराशिगतेदमंशस्फुरणे चिन्मात्रत्वेनाहमंशः समुल्लसति भेदाद्वैतवादिनामिव ईश्वरस्य यः समधृततुलापुटन्यायेनाहमिदमिति परामर्शः, तत् क्रियाशक्तिप्रधानं विद्यातत्त्वम् ।

## शुद्धाध्वप्रयोजनम्

अयं तु शैवागमेषु शुद्धाध्वमार्गोपन्यासः पुरुषस्य परमशिवभावस्य सोपानक्रमेण प्राप्तये फलायोपन्यस्तः । तथा हि—यदा परमेश्वरः पारमेश्वर्या मायाशक्त्या स्वरूपं गूहयित्वा संकुचितग्राहकतामश्नुते तदा पुरुषसंज्ञः । अयमेव मायामोहितः कर्मबन्धनः संसारी । परमेश्वरादभिन्नोऽप्यस्य मोहः परमेश्वरस्य न भवेत् । इन्द्रजालमिव ऐन्द्रजालिकस्य स्वेच्छया संपादितभ्रान्तेर्विद्याभिज्ञापितैश्वर्यैस्तु चिद्घनो मुक्तः परमशिव एव । एवं च परमेश्वरस्यैव स्वस्वरूपेषु भावेषु यदा भेदप्रथा तदा माया, यदा तु अहन्तेदन्तयोरैक्यप्रतिपत्तिस्तदा शुद्धविद्या, तदधिगमे ईश्वरतत्त्वाधिगमः, तदधिगमे सदाशिवतत्त्वाधिगमः, तदधिगमे शक्तितत्त्वाधिगमः, तदधिगमे शिवतत्त्वाधिगमः, तदधिगमे च परमशिवभावरूपताप्राप्तिरिति । सोऽयमुत्तरोत्तरं विशुद्धो मार्गो भूमिकाशब्देन निर्दिष्टो योगदर्शने । प्रत्यभिज्ञाहृदये च चितेः संकुचितग्राहकत्वे नीलसुखादिग्राहिकायाश्चित्तरूपाया मायाप्रमातृत्वम्, समाधिप्रयत्नोपार्जिते तु चित्प्र-

धानत्वे शुद्धाध्वप्रमातृत्वम्, तादृशी चितिश्च क्रमेण प्रकर्षवतीति क्रमेण संकोचस्य तनुतायां विद्याप्रमातृत्वम्, ईश्वरसदाशिवशिवरूपता च संपद्यते (प्रत्यभिज्ञाहृ० सूत्र सं० ५) इत्युक्तम्।

## शुद्धाध्वाधिकारिणः

इदमप्यवधेयं न सर्वेऽणवः शुद्धाध्वगन्तारः, किन्तु विज्ञानाकला एव। मायामलं कार्ममलं च समुत्तीर्य ते सर्वप्रथमं शुद्धविद्याभूमिकाप्राप्तिक्रमेणोत्तरोत्तरमपरा अपि शुद्धाध्वगता ईश्वरादिरूपाश्चतस्रो भूमिकाः क्रमशः संप्राप्य समुत्तीर्य च परमशिवरूपतामधिगच्छन्ति। किन्त्विदं न विस्मर्तव्यं यत् शुद्धाध्वाऽपीतराध्ववद् बन्धकारणमेव, "अध्वा बन्धस्य कारणम्" इत्यभियुक्तोक्तेः। किञ्च, यतः शुद्धाध्वगतानामप्यधिकारसंभोगलयाख्यानि त्रीणि मलानि सन्तीति विशदं प्राङ् निरूपितमतस्तेषां मलसत्तया वासनाऽस्तीत्यनुमीयते। सा च शुद्धा, तस्यां सत्यामपि परार्थप्रवृत्तिदर्शनादिति। इदं सर्वं शैवागमानुसारेण।

## बौद्धमतेन शुद्धाध्वनिरूपणम्

बौद्धास्तु शैवागमिनां तत्त्वभेदभिन्नान् पञ्च शुद्धाध्वन इवोपपत्तिभेदभिन्नान् पञ्च शुद्धावासान् प्रकल्पयन्ति, यद्यपि ते प्रमुदितादिशुद्धभूमिकाभेदरूपाः स्वरूपतो दश भवन्ति। तथा हि कामधातौ जन्मानन्तरं य आर्योऽनागामिफलं प्राप्तवान् सोऽन्यस्मिन् धातौ जन्मग्रहणार्थं न गच्छति। कामधातुगतदुःखानां तीव्रसंवेगतैव तत्र कारणम्। रूपधातावधिगतानागामिफलस्तु आरूप्यधातावपि गच्छति। स कामधातौ परिवृत्तजन्मा आर्यो रूपारूप्यधातुगतौ च ऊर्ध्वजौ। त एते नैवेन्द्रियाणां सञ्चारे न च स्वरूपपरिहाणौ समर्थाः, प्रज्ञायाः परिपक्वतरत्वात्। एवञ्च कामधातौ जातस्यार्यस्य चतुर्थध्यानस्य प्रथममाकिरणभावना जायते। तत्राकिरणं धातुव्यतिभेदनम्। सा च भावना उपपत्तिविहारफला क्लेशभीरुत्वहेतुका च। तथा हि—आर्यस्याकिरणभावनायां ध्यानमग्नतायां त्रयो हेतवः। तीक्ष्णेन्द्रियानागामिनः शुद्धावासेषूपपत्तिदृष्ट्या, सुखविहारदृष्ट्या वा तथा करणम्। मृद्विन्द्रियस्य अनागामिनश्च क्लेशभयेन। सा चेयमाकिरणभावना पञ्चविधा—मृदुः, मध्या, अधिमात्रा, अधिमात्रतरा, अधिमात्रतमा चेति। तत्क्रमेणैव शुद्धावासेषु पञ्च उपपत्तयः—अवृहा-तप-सुदृश-सुदर्शना-कनिष्ठा भवन्ति। अत्रोप-

पत्तिरुत्पत्तिरेव। अतः परं संज्ञावेदितनिरोधसमाप्तिप्राप्तोऽनागामी, स एवार्यो निरोधलाभतः कायसाक्षीत्युच्यते। यतः स निर्वाणसदृशं धर्मं कायेन साक्षात्करोति। ततः परं यावत् स भवाग्रस्याष्टमं भागं ध्यानेन विनाशयति तावत् सोऽर्हत्त्वेऽधिकारी। ततः परं नवमे आनन्तर्यमार्गे भवाग्रक्षितिस्थितोऽप्यर्हत्फलाधिकारी, अर्हत्त्वयोग्यतान्वितो न त्वर्हत्त्वं प्राप्तः। स नवमो मार्गः। ततः परं सर्वानुशयभेदी सर्वासां कर्मवासनानामनुभववासनानां च भेदकत्वाद् वज्रोपमसमाधिरुच्यते। भवाग्रस्य नवमः क्लेशप्रकारो वज्रोपमसमाधिना भिद्यते। भवाग्रीयतन्नवमप्रकारक्षयस्य यदा लाभो जातस्तदा तेन लाभेन सहैव क्षयज्ञानं जायते। क्षयज्ञानानन्तरमेव स अशैक्षोऽर्हन् जायते। अत्र अशैक्ष इति शिक्षां विनैव स्वयं सिद्ध इत्युच्यते। इयं च हीनयानपरम्परा।

## दश भूमयः

एताश्च शुद्धावासरूपाः प्रमुदितादयो दश भूमयः परिकर्मसहिता अभिसमयालङ्कारालोके प्रथमविवर्ते विस्तरेण प्रपञ्चिताः। तद्यथा—कामधातौ रूपधातौ आरूप्यधातौ वा परिवृत्तजन्मन आर्यस्य प्रमुदितादिभूमौ दर्शनप्रहेयं समुदायेन द्वादशोत्तरं क्लेशशतं प्रहीयते। तथा हि—प्रमुदिताया भूमेः प्रथमः क्षणो दर्शनमार्गः, ततोऽन्ये द्वितीयादयः क्षणा यावद्वज्रोपमाख्य आनन्तर्यमार्गो यस्मादनन्तरं समन्तप्रभा बुद्धभूमिरवाप्यते। तत्र चतुरप्रमाणाभिनिर्हरणादिभिर्दशभिर्धर्मैः प्रथमा अपूर्वधर्मतत्त्वाधिगमेन प्रमोदलाभात् प्रमुदिता भूमिः प्राप्यते। तदुत्तरं कुशलधर्मसंग्राहकशीलादिभिरष्टभिर्धर्मैर्द्वितीया सर्वदौःशील्यमलापगमाद् विमला भूमिरधिगम्यते। तदुत्तरं श्रुतेऽतृप्ततादिभिः पञ्चभिर्धर्मैर्लोकोत्तरज्ञानावभासकरणात् तृतीया प्रभाकरी भूमिरवबोध्यते। श्रावकादिमनस्कारविवेकादिपरिकर्मणा दशप्रकारेण सकलक्लेशेन्धनदहनज्वालयोपेतत्वादर्चिष्मती नाम चतुर्थी भूमिरभिरुह्यते। अतः परं संवासादीन् बोधिनिबन्धकान् दशधर्मान् विवर्जयन् तद्विपर्ययधर्मेण दशप्रकारपरिकर्मणा पञ्चमीं सुष्ठु दुःखेन जीयत इति सुदुर्जयां भूमिमाक्रामति। ततः परं दानादिषट्पारमितापरिपूरणेन श्रावकप्रत्येकबुद्धाभिलाषादिषट्कपरिवर्जनेन द्वादशभिः परिकर्मभिः षष्ठी सर्वबुद्धधर्माभिमुखी भूमिराज्ञायते। ततः परमात्मसत्त्वग्रहादिरूपविंशतिकलङ्कविच्छेदेन सप्तमी सम्यगनाभोगमार्गोपसर्गात् सुष्ठु दूरं गतत्वाद् दूरङ्गमा भूमिः समीयते। ततः परं यथावत्सर्व-

सत्त्वचित्तचैत्तज्ञानादिनाऽष्टप्रकारधर्मेण परिकर्मणा निमित्ताभोगाप्रकम्प्यत्वाद् अचलाष्टमी भूमिरनुभूयते। ततः परमनन्तप्रणिधानादिरूपैः सम्पत्तिपदाभिधेयैर्द्वादशभिः परिकर्मभिर्धर्मदेशनाकौशलतोऽनवद्यत्वात् साधुमती नवमी भूमिः साक्षात्क्रियते। ततः परं यत्र बुद्धभूमौ येन कर्मवशिताश्रयत्वादिना ज्ञानेनावतिष्ठते सा तेन प्राप्या दशमी धर्माम्बुप्रवर्षणाद् धर्ममेघा बोधिसत्त्वभूमिः। तथा चोक्तम्—

नवभूमीरतिक्रम्य बुद्धभूमौ प्रतिष्ठते।
येन ज्ञानेन सा ज्ञेया दशमी बोधिसत्त्वभूः॥

## बुद्धभूमिः

इयं च दशमी बुद्धभूमिर्नवविधा। गोत्रभूमिः श्रावकादिगोत्रस्य, अष्टमकभूमिः प्रथमफलप्रतिपन्नस्य, दर्शनभूमिः श्रोतआपन्नस्य, तनुभूमिः सकृदागामिनः, वीतरागभूमिरनागामिनः, कृताविकल्पभूमिरर्हतः, विशेषवचनाभावेन श्रावकभूमिः प्रतिपन्नकत्रयस्य, प्रत्येकबुद्धभूमिः प्रत्येकबुद्धानाम्, बोधिसत्त्वभूमिश्च यथोक्ता बोधिसत्त्वानामित्येवं नवविधा। इयं च महायानपरम्परा। इमाश्च दशापि चित्तभूमयः स्वस्वानुकूलपरिकर्मपरिशुद्धाः शुद्धवासनायुताः। बौद्धदर्शने बोधिचित्तमेव हीनयाने शुद्धावासेषु, महायाने शुद्धासु दशभूमिष्वधिकारि।

## बोधिचित्तम्

तच्च बोधिचित्तं चतुर्भिर्हेतुभिर्गोत्रभूम्यादिगतानेकप्रकारसम्भवेऽपि बोधिप्रणिधिचित्तं बोधिप्रस्थानचित्तञ्चेति समासेन द्विविधम्। तत्र यथा कश्चित्पुरुषोऽभिमतदेशप्राप्तये गन्तुकामो गमनाभिप्रायः, न तु पुनर्गच्छत्येव। अन्यः पुनस्तत्प्राप्तये प्रस्थितो गच्छत्येव। यथा तयोर्भेदो विशेषः प्रतीयते तथा भेदोऽनयोर्बोधिप्रणिधिप्रस्थानचेतसोर्ज्ञेयः पण्डितैः। तत्राद्यं प्रणिधिचित्तं प्रतिपत्तिविकलमपि संसारे महाफलं भगवता वर्णितम्। एतस्य चित्तस्य यद्यपि बुद्धत्वं फलं नास्ति, तथापि संसारेऽपि देवमनुष्योपपत्तिस्वभावं सुखसंपत्तिलक्षणं महत्फलमन्यस्मात् कुशलात्। तस्माद् योऽपि पारमितासु सर्वेण सर्वं सर्वथा शिक्षितुमसमर्थस्तेनापि बोधिचित्तमुत्पादनीयं महाफलत्वात्। चर्याविकलेऽप्येतस्मिन् बोधिचित्ते नावमानना कार्या, एतस्याप्यनन्तसंसारे सुखप्रसवनात्। इदमेव चित्तं हीनयानेऽधिकृतमित्युक्तं बोधिचर्यावतारपञ्जिकायां प्रथमपरिच्छेदे सप्तदशकारिकाव्याख्यावसरे आर्यराजाव-

वादसूत्रोपन्यासमुखेन—"यस्मात्त्वं महाराज! बहुकृत्यो बहुकरणीयः। असहः सर्वेण सर्वं सर्वथा दानपारिमितायां शिक्षितुम्। यावत्प्रज्ञापारमितायां शिक्षितुम्। तस्मात्तर्हि त्वं महाराज! एवमेव संबोधिच्छन्दं श्रद्धां प्रार्थनां प्रणिधिं च गच्छन्नपि तिष्ठन्नपि निष्पन्नोऽपि शयानोऽपि जाग्रदपि भुञ्जानोऽपि पिबन्नपि सततसमितमनुस्मर। मनसि कुरु भावय। सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकपृथग्जनानामात्मनश्च अतीतानागतप्रत्युत्पन्नानि कुशलमूलानि पिण्डयित्वा तुलयित्वाऽनुमोदयस्व" इति। ततः "सर्वसत्त्वानां यावत्सर्वज्ञताप्रतिलम्भाय सर्वबुद्धधर्मपरिपूरणाय दिने दिने त्रैकाल्यमनुत्तरायां सम्यक्सम्बोधौ परिणामय" इति। किञ्चाग्रे तत्रैव—

इदं सुबाहुपृच्छायां सोपपत्तिकमुक्तवान्।
हीनाधिमुक्तिसत्त्वार्थं स्वयमेव तथागतः॥

इति विंश्यां कारिकायां तद्व्याख्याने च प्रणिधिचित्तवन्त एव हीनयानाधिकारिण इत्युक्तम्।

किञ्च प्रस्थानचित्तवर्णनावतारे—"येऽनियतगोत्राश्चिरतरकालेन बहुतरसम्भारोपार्जनभीता महायानाच्चित्तं व्यावर्त्य लघुतरकालेनाल्पतरसम्भारसाध्ये श्रावकप्रत्येकबुद्धयाने चित्तमुत्पादयन्ति तद् व्यावर्तनार्थं भगवानुपपत्तिमाह" इत्युक्तम्। तदेवं बोधिचित्तद्वैविध्येन यानद्वैविध्यं भगवतोक्तम्। वस्तुतस्तु हीनयानस्यापि महायान एव पर्यवसानमित्येकमेव यानम्। तदेतदुद्धृतं लङ्कावतारोक्तमभिसमयालङ्कारालोके द्वितीयपरिवर्ते—"नास्ति महामते श्रावकयानिकानां श्रावकयानेन मोक्षोऽपि तु महायानपर्यवसानिका एव ते" इति। अन्यच्च—"भविष्यसि त्वं शारिपुत्रानागतेऽध्वनि सम्यक् संबुद्धः", तथा "एकं हि यानं द्वितीयं न विद्यते" इत्यादि। "एकं हि यानं नयश्च एक एका चेयं देशना देशिकानाम्। उपायकौशल्यं ममेव रूपं यन्त्राणि यानान्युपदर्शयामि॥" इति सद्धर्मपुण्डरीकेऽप्युक्तमिति। तच्च प्रस्थानचित्तं प्रतिपत्तिसारं बोधिचित्तमेव, तस्य च निरन्तरशुभप्रवाहवाहित्वरूपमविच्छिन्नपुण्यत्वम्। इदञ्च प्रस्थानचित्तरूपं बोधिचित्तं गोत्रसन्मित्रकारुण्यदुःखाभीरुत्वरूपप्रत्ययचतुष्टयाज्जायते। तच्च प्रस्थानचित्तं प्रयोगावस्थायां द्विविधम्—अधिमुक्तिचित्तम्, अधिमुक्तिचरितचित्तं चेति।

## पारमिताः

तत्राधिमुक्तिचित्तस्य सप्त पारमिता भवन्ति, अधिमुक्तिचरितचित्तस्य तु दश। ताश्च—

दानं शीलं क्षमा वीर्यं ध्यानं प्रज्ञा उपायता।
प्रणिधानं बलं ज्ञानं मताः पारमिता दश॥

इत्युक्तदशप्रभेदाः। तत्राद्याः सप्तपारमिता दशपारमितासु विशिष्यन्ते। सप्तस्वपि तासु प्रज्ञापारमिता विशिष्टा। सा च शून्यता करुणारूपभावनाद्वयवती। तदुक्तं डाकिनीवज्रपञ्जरे—

शून्यताकरुणाभिन्नं यत्र चित्तं प्रभाव्यते।
सा हि बुद्धस्य धर्मस्य सङ्घस्यापि हि देशना॥
गुडे मधुरता चाग्नेरुष्णत्वं प्रकृतिर्यथा।
शून्यता सर्वधर्माणां तथा प्रकृतिरिष्यते॥

अन्यत्राप्युक्तम्—

मुक्तिस्तु शून्यतादृष्टिस्तदर्थाशेषभावना। इति।

किञ्च, शून्यताकरुणायोः प्रज्ञापारमिताधर्मयोर्भेदाभेदावद्वयवज्रसंग्रहे पञ्च तथागतमुद्राविवरणप्रकरणे प्रोक्तौ—

शून्यताकृपयोर्भेदः प्रदीपालोकयोरिव।
शून्यताकृपयोरैक्यं प्रदीपालोकयोरिव॥ इति।

एतदेवोक्तमभिसमयालङ्कारालोके तृतीयपरिवर्ते प्रज्ञापारमिताधिकारे—"यतः शून्यताकरुणागर्भमेव बोधिचित्तं मुख्यतः प्रज्ञापारमिता" इति। सा च प्रज्ञापारमितायां समवस्थिता करुणा सर्वसत्त्वानां सर्वदुःखपरिजिहीर्षारूपा, सर्वविधकल्याणचिकीर्षारूपा च। एताश्च महायानस्य दश, सप्त, षड्, वा पारमितारूपा भूमयश्चित्तरूपा एवेति चित्तमेव दोषेभ्यो वारयति गुणेषु प्रवर्तयति बोधिसत्त्वः, यतश्चित्ताधीनो धर्मो धर्माधीना बोधिरिति। एतच्चोक्तं धर्मसंगीतिसूत्रे मतिविक्रमबोधिसत्त्वमुखेनेति।

## यानत्रये महायानस्य वैशिष्ट्यम्

तत्र यद्यपि तत्त्वरत्नावल्यां यानत्रयं निर्दिष्टम्—श्रावकयानं प्रत्येकबुद्धयानं महायानं चेति, तथाप्याद्यद्वयं महायानस्यैव प्राप्तिसोपानभूतमिति प्रागुक्तं न विस्मर्तव्यम्।

बोधिसत्त्व एव च महायानेऽधिकृत इत्यपि। एतस्य महायानस्य स्वरूपं महत्त्वं चाभिसमयालङ्कारालोके प्रथमपरिवर्ते उक्तम्—

आलम्बनमहत्त्वं च प्रतिपत्त्योर्द्वयोस्तथा।
ज्ञानस्य वीर्यारम्भस्य उपायकौशलस्य च॥
उदागममहत्त्वं च महत्त्वं बुद्धकर्मणः।
एतन्महत्त्वयोगाद्धि महायानं निरुच्यते॥ इति।

सप्तविधमहत्त्वयोगान्महायानं सफलो बोधिसत्त्वमार्गः। लोकप्रसिद्धमात्रस्यैत्रायथार्थाभिसंबोधिफलं महायानम्, तस्यैव बन्धत्वात्। इतरथा हि महायानस्य प्रतिपत्तभावनावैयर्थ्यं स्यात्। अतोऽभूतपरिकल्पमात्रत्वाद्वितथप्रख्यातिरूपं सदेवमानुषासुरं लोकं तत्प्रतिपत्तत्वेनासत्यार्थतया स्वरूपपरिज्ञानादभिभवाद्यस्मान्निश्चयेन गन्तव्यं स्थानं सर्वसत्त्वाग्रतादिमहत्त्वं यास्यतीति तस्मान्महायानमुच्यत इति वाक्यार्थः।

किञ्च, महायानेनैव बुद्धत्वप्राप्तिर्यया सर्वक्लेशगणात् सर्वदुश्चरितेभ्यश्च जन्ममरणाभ्यां च परित्राणम्। यच्च बुद्धत्वमनुपमं शरणं तन्नान्येन यानेन लभ्यत इति महायानमेव बुद्धत्वप्राप्तये समाश्रयणीयमिति। एतच्च महायानसूत्रालङ्कारे नवमे बोध्यधिकारे विस्तरेण प्रदर्शितमिति तन्निदर्शनानि कतिचित्पद्यानि तत उद्धृत्य प्रदर्श्यन्ते—

परित्राणं हि बुद्धत्वं सर्वक्लेशगणात् सदा।
सर्वदुश्चरितेभ्यश्च जन्ममरणतोऽपि च॥७॥
उपद्रवेभ्यः सर्वेभ्यो(भ्य) अपायादनुपायतः।
सत्कायाद् हीनयानाच्च तस्माच्छरणमुत्तमम्॥८॥

शरणमित्यस्य बुद्धत्वमित्यर्थः।

आलोकात् सवसत्त्वानां बुद्धत्वं शरणं महत्।
सर्वव्यसनसम्पत्तिव्यावृत्त्यभ्युदये मतम्॥११॥

क्लेशज्ञेयवृत्तीनां सततमनुगतं बीजमुत्कृष्टकालं
यस्मिन्नस्तं प्रयातं भवति सुविपुलैः सर्वहानिप्रकारैः।
बुद्धत्वं शुक्लधर्मप्रवरगुणयुता आश्रयस्यान्यथाप्ति-
स्तत्प्राप्तिर्निर्विकल्पाद्विषयसुमहतो ज्ञानमार्गात्सुशुद्धात्॥१२॥

अत्र ज्ञानमार्गादित्यनेन महायानमेवोक्तम्, तस्यैव ज्ञानमार्गत्वात्। तस्य च सुशुद्धादिति विशेषणेन शुद्धाध्वस्वरूपत्वमुपदर्शितमिति बौद्धानामपि महायानं शुद्धाध्वैव। शैवागमिनां परमशिवपदप्राप्तिरिव बौद्धानामपि बुद्धत्वप्राप्तिः शुद्धाध्वनैव भवतीत्यायातम्।

## वैष्णवागमेषु शुद्धसर्गः

यच्छैवागमे शुद्धाध्वपदेनोदितं यच्च बौद्धदर्शने शुद्धावासबोधिचित्तपदाभ्यामुदितं तदेव वैष्णवागमेषु शुद्धसर्गपदेनोच्यते। तथा हि—या परस्य ब्रह्मणो हरेः स्तैमित्यरूपा शून्यत्वरूपिणी शक्तिर्विद्युदिव विद्योतमाना विभूतिरूपा सा श्रुतौ प्रेक्षणापदव्यपदेश्येन सुदर्शननाम्ना सुसंकल्पेन प्रेर्यमाणा विविधान् शुद्धाशुद्धान् भावान् विदधाति। तत्र विभूतेः शुद्धः सर्गः प्रथमजश्चातुरात्म्यरूपः। तद्यथा भगवान् वासुदेवः, सङ्कर्षणः, प्रद्युम्नः, अनिरुद्ध इति। तत्र भगवतो विष्णोः शक्तौ यत्षाड्गुण्यं ज्ञानं बलमैश्वर्यं वीर्यं शक्तिस्तेज इति तस्य यो युगपदुन्मेषः शक्तेः स्तैमित्यनाशकः सुदर्शनाख्येन संकल्पेन प्रागुक्तेन कल्पितः स एव भगवतो विष्णोर्व्यक्तिरूपो भगवान् वासुदेवः, सा एव परमा प्रकृतिः, सर्वत्र चराचरे स्वविकारे निवासात्। अत एव सर्वत्र वसतीति वासुः, वासुश्चासौ देवश्चेति वासुदेवपदव्युत्पत्तिमभिदधति वृद्धा इति वासुदेवसंज्ञकः षाड्गुण्यसंपन्न एक आत्मा। ततः सर्वशक्तिमयो वासुदेवो देवः सिसृक्षया आत्मनाऽऽत्मानं विभजतीति वासुदेवाद् विभक्तः सङ्कर्षणनामा द्वितीयो व्यूहः। स च ज्ञानबलरूपगुणद्वयसंपन्नः, स च बली सङ्कर्षणो देवो नियमेन भगवत्प्राप्तिसाधनं मार्गं ज्ञानमयत्वेन व्यनक्ति। तत्र दृष्टान्तोऽहिर्बुध्न्यसंहितायामुक्तः—

भानावुदयशैलस्थे प्रभा यद्वद्विजृम्भते।
उदयस्थे तथा देवे प्रभा सङ्कर्षणात्मिका॥

एषा च सङ्कर्षणात्मिका शक्तिर्वासुदेवेन सृष्टा सती षोडशशतानि वर्षाणि व्यापाररहिता तूष्णीं तिष्ठति, तदनन्तरं स एव भगवाननन्तः पुरुषोत्तमः प्रद्युम्नरूपेणाविर्भवति, वीर्यैश्वर्यरूपगुणद्वयसंपन्नः। सा चैषा प्रद्युम्नरूपा भगवच्छक्तिरपि षोडशशतानि वर्षाणि व्यापाररहिता तूष्णीं तिष्ठति। ततः प्रद्युम्नरूपेणावस्थितोऽनन्त

एव भगवान् स्वसंकल्पप्रेरितः शक्तितेजोरूपगुणाढ्यसंपन्नोऽनिरुद्धो भवति। सा एषा भगवतोऽनिरुद्धरूपा शक्तिरपि षोडशशतानि वर्षाण्यव्यापृता तूष्णीं तिष्ठति। तदुत्तरमसौ शक्तितेजोरूपगुणाढ्यसंपन्नोऽनिरुद्धः प्रद्युम्नसङ्कर्षणाभ्यां पूर्वाभ्यां व्यूहाभ्यां सह जगत्सृष्टौ व्याप्रियते। एते च वासुदेवादयश्चत्वारो व्यूहा विशालाक्षाः पुरुषोत्तमा निर्दोषा निरनिष्ठा निरवद्याः सनातनाः। ते च शक्त्यात्मकाः सच्चिदानन्दलक्षणा अपि स्थूलदशायां जगतामुपकाराय व्यक्तिभावमुपागताः। एभ्यश्चतुर्भ्यो व्यूहेभ्यो द्वादशसंख्याकानां व्यूहान्तराणां यथायथमाविर्भावः। तद्यथा—वासुदेवात् केशवादित्रयमाविर्भवति, सङ्कर्षणाच्च गोविन्दादित्रयम्, प्रद्युम्नात् त्रिविक्रमादित्रयम्, अनिरुद्धाद्धृषीकेशादित्रयम्। एतेषाञ्चोत्पत्त्याकारवेषभूषादिकं सात्वतसंहितातो ज्ञेयम्। सा च भगवतो विष्णोर्नित्यविभूतिरूपा शक्तिः शुद्धाशुद्धविभागेन चेत्यचेतनरूपेण,काल्यकालभेदेन व्यक्ताव्यक्तभेदेन व्यङ्ग्यव्यञ्जनभेदेन वाच्यवाचकभेदेन भोग्यभोक्तृभेदेन देहदेहिभेदेनान्यैश्चैवंप्रकारैर्विभज्यते। एवञ्च यथा शैवागमे शुद्धाध्वनि शुद्धं शक्तितत्त्वं स्वीक्रियते, तथाऽत्रापि वैष्णवागमे शुद्धसर्गे शुद्धा शक्तिः स्वीक्रियते। किञ्च यथा शैवागमे शिवः शक्तिः सदाशिव ईश्वरः शुद्धविद्येति तत्त्वपञ्चकं स्वीक्रियते, एवमत्र वैष्णवागमेऽपि वासुदेवः संकर्षणः प्रद्युम्नोऽनिरुद्ध इति व्यूहचतुष्टयं स्वीक्रियते। किञ्च, यथा शुद्धाध्वनः परं परमः शिवः शैवागमे प्राप्यस्तथाऽत्रापि विष्णुः परो वासुदेवः परमं परायणमित्यस्ति शैवागमवैष्णवागमयोः शुद्धाध्वनि शुद्धसर्गे च साम्यम्। एष एव चाहिर्बुध्न्यसंहितोक्तः सात्वतसंहितादौ च विस्तारितः शुद्धसर्गो नित्यविभूतिपदेन तत्तद्वैष्णवभाष्येषु तदनुगामितत्तद्ग्रन्थेषु चोक्तः।

## निम्बार्कमते शुद्धाध्वा

ब्रह्मसूत्रस्य निम्बार्कभाष्ये तु चतुर्थेऽध्याये विदुषो विद्यया पुण्यपापयोरश्लेषमुक्तिमुपवर्ण्य अर्चिरादिमार्गेण शुद्धेन ब्रह्मलोकप्राप्तिरुक्ता। तत्र च विदुषः सूक्ष्मशरीरसंबन्धोऽस्त्येव, ततः परं सरिद्वरां विरजां प्राप्य तत्र सूक्ष्मशरीरं हित्वा परभावं विद्वान् प्राप्नोतीति चतुर्थाध्यायस्य द्वितीयपादे चतुर्दशसूत्रे भाष्ये उक्तम्। चतुर्थाध्याये एव च चतुर्थे पादे १४, १५, १६, ( चतुर्दशपञ्चदशषोडश )सूत्रेषु मुक्तानां सत्यसंकल्पबलाद्दिव्यदेहमनोबुद्धीन्द्रियसृष्टिरुक्ता। स एष शुद्धसर्गः। एष चार्चिरादिकः शुद्धोऽध्वा

मुक्तानां च संकल्पबलाद्दिव्यदेहादिसर्गरूपः शुद्धसर्गश्च सर्वेषां वैष्णवाचार्याणां समान इति मन्ये।

## शाक्तागमे शुद्धाध्वा

शाक्तागमस्तु चितेर्भिन्नाऽभिन्नायास्तच्छक्तेः स्वीकारेऽपि चितेः परमशिवरूपायाः स्वातन्त्र्यमनुपगम्याभ्युपयनभेदावभासनशक्तिबलाच्चितेरभेदावभासनकाले शैवागम इव शुद्धाध्वानं तत्त्वपञ्चकोपेतमन्यानि चाशुद्धतत्त्वानि भेदावभासनरूपशक्तिसहकृतायाश्चितिशक्तेः स्वातन्त्र्यभरात् समुद्भूतानि समुपगच्छन् शैवागमान्न विशिष्यत इति पृथक् तद्विचारे प्रयासो निष्फल इति ततो विरम्यते।

## उपसंहारः

तदेवं यः शैवागमिनां शुद्धाध्वा, यच्च बौद्धानां बोधिचित्तं शुद्धाध्वानुकारि महायानमनुगतम्, यश्च वैष्णवानां शुद्धसर्गस्तदेतत्त्रयमपि परमशिवसर्वज्ञपरवासुदेवपदव्यपदेश्यैकपरमतत्त्वप्राप्तये साधनत्वेन स्वरूपभेदभिन्नमपि, बाह्याभ्यर्चनादिरूपेतिकर्तव्यताभेदभिन्नमपि, आन्तरध्यानादिरूपेतिकर्तव्यताभेदभिन्नमपि, एकीभूतमिव ध्वनिप्रतिध्वनिवद् बिम्बप्रतिबिम्बवच्च परस्परसादृश्यमनुगतम्। तत्र कतम आगमो ध्वनिबिम्बयोश्छायामनुहरति, कतमश्च प्रतिध्वनिप्रतिबिम्बयोरिति पृच्छायां तु तत्तदागमाविर्भावकाल एव मानरूपेण प्रमारूपावधारणकारणं भविष्यतीत्यस्मिन् विषये आगमकालविदः पाश्चात्त्यास्ताननुगताः प्राच्याश्चैव प्रमाणम्। तदेवमुपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इति न्यायेन रुचिभेदेन च—

शुद्धाध्वा समुपास्यतामथ महायानं समालम्ब्यतां<br>
शुद्धा सृष्टिरथापि काऽपि विविधव्यूहा समासेव्यताम्।<br>
शक्तिं सद्गुरुतोऽधिगम्य पतितां स्वान्तेन मोमुद्यतां<br>
चित्तं बोधि विधीयतां भगवतो दास्यं समास्थीयताम्॥

---

# वीरशैवदर्शनम्

श्री नि० प्र० सिद्धरामस्वामी, कुटोज़ीमठः, सोलापुरम्।

मराठीभाषानिबद्धेऽस्मिन् निबन्धे वीरशैवदर्शनस्य प्राचीनतमायाः परम्परायाः, आगमानां प्रामाण्यस्य, श्रुत्यनुकूलत्वस्य च प्रतिपादनं विद्यते। वेदानामागमानां च कालनिर्णयः, आगमानां वेदविरोध्यविरोधिभेदेन द्वैविध्यं चापि प्रदर्शितमस्ति। तत्र वीरशैवशब्दस्य लिङ्गायतशब्दस्य च व्युत्पत्तिप्रदर्शनपूर्वकं प्राधान्येन प्रमाणभूतानां वीरशैवदर्शनप्रतिपादकानां ग्रन्थानां परिचयोऽपि प्रदत्तः। देशविदेशयोः समुपलभ्यमानान् पुरातत्त्वगतान् लिङ्गपूजायाः प्रमाणानुल्लिख्य लिङ्गब्रह्मणः प्रतिपादनपुरःसरमिष्टालिङ्गधारणमावश्यकमिति च सप्रमाणं प्रसाध्य वीरशैवमतस्य प्रधानाचार्यस्य वसवेश्वरस्य तस्य ग्रन्थानां च विवरणमुपस्थापितम्। कर्णाटकभाषानिबद्धस्य वीरशैववाङ्मयस्य परिचयप्रदानमुखेन षट्स्थलस्वरूपविचार-पञ्चाचारविचारप्रमुखा वीरशैवदर्शनसिद्धान्ताः संक्षेपेणोपस्थापिताः। अन्ते च कर्णाटकभाषानिबद्धाः केचन वसवेश्वरवचना गीर्वाणवाण्या परिणमय्योपस्थापिताः।

अत्र विशेषजिज्ञासुभिरस्यैव विदुषः 'लिङ्गायतसिद्धान्तबिन्दुः' इत्येष निबन्धः "सारस्वत्याः सुषमायाः" दर्शनाङ्के ( ११ व० ३-४ अ० ) प्रकाशितोऽवलोकनीयः॥

———

# वीरशैवसिद्धान्ते किञ्चित्

श्री एन० एच० चन्द्रशेखरस्वामी सं० वि० अनुसन्धानविभागस्थः।

परापश्यन्तीमध्यमादिविधिना वेदसमा आगमाश्चाप्यविष्कृता महर्षिभिः। एते शिवमुखादागता अत एव आगमा इति ऊर्ध्वाम्नायश्च वेति व्यवह्रियन्ते। यस्मात् पृथिवीतत्त्वात्प्रभृति समधिगम्यते शिवतत्त्वं तदेवागमः।

## आगमतन्त्रयोः पर्यायत्वम्

तन्त्रं प्रयुज्यते व्यापकतरेऽर्थे। विशेषतः शैवागमसम्प्रयोग आगमशब्दीयः। क्वचित् तन्त्रागमयोः प्रयोगः समानरूपत्वेन समुपलभ्यते। तद्यथा कामिकागम-तन्त्रान्तरपटले—

तनोति विपुलानर्थान् तन्त्रमन्त्रसमन्वितान्।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥

आगमतन्त्रयोरेकत्वम्। इष्टदेवतोपासनाभ्यामवान्तरभेदत्वेऽपि ध्येयं तदीयं विद्यते मोक्षाधिगमनम्।

आगमशास्त्रं साधनाप्रधानं दर्शनम्। इह सन्ति शाक्त-शैव-वैष्णव-पाशुपत-कापालिक-प्रभृतयो भेदाः। अनन्तधारास्तान्त्रिकयः, एतत्संख्यानं भूरिश्रममपेक्षते। शाक्तादिसम्प्रदायेष्वपि तत्साधना दिव्यानुभूतीः समवलम्ब्य शाखाप्रशाखा-रूपत्वेन सम्प्राप्यते प्रभूतं तन्त्रोद्धरणम्। शाक्तमते चतुष्षष्टितन्त्राणामुल्लेखोऽवाप्यते। तद्यथा सौन्दर्यलहर्याम्—

चतुष्षष्ट्या तन्त्रैः सकलमतिसन्धाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः।
पुनस्त्वां निर्बन्धादखिलपुरुषार्थैकघटना-
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम्॥

लक्ष्मीधरेण तट्टीकायां प्रस्तुतमेतस्य विस्तृतं विवरणम्—

महामायाशम्बरम्, योगिजालशम्बरम्, तत्त्वशम्बरम्, भैरवाष्टकम्, सिद्ध-

भैरवम्, वटुकभैरवम्, कङ्कालभैरवम्, कालभैरवम्, कालाग्निभैरवम्, योगिनीभैरवम्, महाभैरवम्, शक्तिभैरवम्, बहुरूपाष्टकम्, ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, माहेन्द्री, चामुण्डा, शिवदूती, यमलाष्टकम्, चन्द्रज्ञानम्, भासिनीविद्या, महासंमोहनम्, वामजुष्टमहादेवतन्त्रम्, वातुलम्, हृद्भेदतन्त्रम्, तन्त्रभेदतन्त्रम्, कलावाहम्, कलासारम्, कुण्डिकामततन्त्रम्, मतोत्तरमतम्, वीणाख्यम्, त्रोतलम्, त्रोतलोत्तरम्, पञ्चामृतम्, रूपभेदादितन्त्रम्, चन्द्रविद्याष्टकम्, सुभगामततन्त्रपञ्चकमित्यादयः।

सनत्कुमारसंहितानुसारं शैवागमे श्रौताश्रौतत्वेन भेदद्वयम्—

श्रौताश्रौतविभेदेन द्विविधास्तु शिवागमाः।

एतेन शैवागमेष्वपि वैदिकावैदिकाः सन्त्यागमा[1] इति प्रतीयते। शैवागमीयाः सन्ति शैव-पाशुपत-सोम-लाकुलादिभेदाः। तद्यथा—

आगमा बहुधा प्रोक्ताः शिवेन परमात्मना।
शैवं पाशुतं सोमं लाकुलं चेति भेदतः॥ ५॥

(शिद्धान्तशिरोमणौ)

तन्त्रालोकस्य टीकाकर्तृभिर्जयरथाचार्यैः—

[2]अष्टाविंशतिश्शैवागमा भेद-भेदाभेद-अभेदप्राधान्यत्वेन समाम्नाताः। भेदप्रतिपादकाः शिवाः, भेदाभेदप्रतिपादका रुद्राः, अभेदप्रतिपादका भैरवसंज्ञात्वेन स्वीकृताः।

ललितासहस्रनामटीकाकर्त्रा भास्कररायेणापि सौभाग्यभास्करोदयाभिधायां तट्टीकायां कामिकागमानुसारं शिवावयवरूपत्वेन वर्णिता २४ शैवागमाः—

कामिकं पादकमलं योगजं गुल्फयोर्युगम्।
पादद्वयाङ्गुलीरूपे कारणप्रसृताह्वये॥

---

१. प्रामाण्यमविशेषेण निगमागमवर्त्मनाम्।
आगमा द्विविधा ज्ञेया वेदानामविरोधिनः॥ १४॥
कापालादिमतान्याहुः शैवान्यन्यानि यानि च।
अवैदिकानि सर्वाणि नाचरेत्तानि वैदिकः॥ २३॥
(श्रीकण्ठभाष्यम्)

२. (तन्त्रालोके प्र० आह्निक० पृ० ४५)।

अजिता जानुनोर्युग्मं दीप्तमूरुद्वयं विभोः।
पृष्ठभागेंऽशुमानस्य नाभिः सुप्रभेदकम् ॥
विजयं जठरं प्राहुर्निःश्वासं हृदयात्मकम्।
स्वायंभुवं स्तनद्वयमनलं लोचनत्रयम् ॥
वीरागमः कण्ठदेशो रुरुतन्त्रं श्रुतिद्वयम्।
मुकुटं मुकुटं तन्त्रं बाहवो विमलागमाः ॥
किरणं रत्नभूषा स्याद्वातुलं वसवात्मकम्।
अङ्गोपाङ्गानि रोमाणि तन्त्राण्यन्यानि कृत्स्नशः ॥
...... ..............महादेव्या विचिन्तयेत्। इति।

(ललितास० सौ० व्या० पृ० ५४)

केचन तत्तत्सिद्धान्तानुसारं गौणप्रधानरूपत्वेनाष्टाविंशागमानूरीकुर्वन्ति प्रमाणम्। शैवागमान् प्रमाणत्वेन स्वीकुर्वतां दर्शनेष्वपि सन्त्यवान्तरभेदाः। एतानेव शैवागमानाधृत्य काश्मीरत्रिकदर्शनम् (ईश्वराद्वयः), वीरशैवः (शिवाद्वैतं शक्तिविशिष्टाद्वैतं वा), शैवसिद्धान्तः (द्वैतम्), श्रीकण्ठस्य विशिष्टाद्वैतमिति भेदाः प्रस्तूयन्ते।

आगमानाधृत्य वीरशैवसिद्धान्तस्तदाचारानुभूतित्वेन विलक्षणं धत्ते निजं पदम्। परमात्मस्वरूपनिर्देशं कुर्वन्ति ते शून्यलिङ्गनिष्कललिङ्गप्रभृतिभिः पारिभाषिकैः शब्दैः। तदुक्तमुत्तरवातुलागमे—

आद्यन्तशून्यममलं परिपूर्णमेकं
सूक्ष्मं परात्परमनामयमप्रमेयम्।
भावैकगम्यमजडं शिवतत्त्वमाहु-
श्चिच्छक्तिस्फुरणरूढं महात्मलिङ्गम् ॥

(गणभाषितरत्नभा० पृ० २२२)

सकल-निष्कलरूपत्वेन ब्रह्मणोऽवस्थाद्वयम्। तच्च सिद्धान्तशिखामणौ प्रतिपादितम्। स्वतःप्रकाशस्वरूपं ब्रह्म, तत्रैव भवतः प्रादुर्भावलयौ चेतनाचेतनात्मकस्य विश्वस्य विश्वस्य। यदात्वे ओङ्काररूपशक्तेः स्फुरणं भवति निःशून्यलिङ्गे, तदात्वे तस्मान्निष्कललिङ्गाद् महालिङ्गपर्यन्तं जायते विकासः। यदा हि

निष्कललिङ्गमिदैव विकासार्थमभिलषति, तदा हि सानन्दं प्रपञ्चाकारत्वेन परिणमते। यदा च तदीहा भवति सम्मीलयितुं तदा च निजमेव संकोचयति कूर्मभङ्गिन्यायतः।

सूक्ष्मागमे—परशिवमनादिस्वरूपं ब्रह्म स्वयंसिद्धो नित्यो निरञ्जनश्चास्ति। स च नैवाणवादिमलसम्बद्धः।

श्रीकरभाष्ये — अनन्तशक्तिविशिष्टजगदुभयकारणपशुपाशनियामकसकल-निष्कलस्थूलसूक्ष्मचिदचित्प्रकाशसत्यज्ञानानन्तकल्याणगुणविभवाश्रयत्वं ब्रह्मत्वम्।

(अध्या० १, पाद० १, पृ० ४)

वीरशैवानन्दचन्द्रिकायां तु—व्याप्तिपञ्चाक्षरीरूपानन्दौन्मुख्यसूक्ष्मबहिर्मुख-स्थूलोद्यमक्रियास्वभावः परादीच्छाज्ञानक्रियात्मकः शान्त्यतीताद्युपकल्पितपञ्चकृत्य-परिनियामकत्वे सति पञ्चाक्षरीसमाप्तिप्रणवरूपचिन्मयशान्त्यतीततरः समरसत्वे सति आनन्दज्ञानसत्याभिन्नमहासादाख्यलक्षणनिष्कलामूर्त्तसादाख्यमूर्तसादाख्य ......... नित्यत्वपरिपूर्णत्वनिरस्तसमस्तोपप्लवकसङ्गत्वं महालिङ्गत्वम्। (पृ० ३१)

अनुभवसूत्रे मायीदेवः परमात्मानं स्थलशब्देन निर्दिष्टवान्। तद्यथा—

सर्वेषां स्थलभूतत्वाल्लयभूतत्वतस्ततः।
तत्त्वानां महदादीनां स्थलमित्यभिधीयते॥
अधिष्ठानं समस्तस्य स्थावरस्य चरस्य च।
जगतो यद्भवेत्तत्त्वं तद्धि वै स्थलमुच्यते॥

(द्वि० अधिकर०)

अस्य स्थलास्यार्थौ वीरशैवसिद्धान्तानुसारं द्विप्रकारेण प्रपञ्चितः। इदं परात्पराद्वैततत्त्वं विश्वम् इदं च सृष्टि-स्थिति-प्रलयाश्रयः। तत्रैव समस्ततत्त्वो-द्भवतिरोभावौ सम्पद्येते। इदमेव स्थलतत्त्वं विश्वं प्रति निमित्तोपादानत्वेन कारणम्। इदमेव स्थलपदवाच्यं परात्परं परब्रह्म (सर्वशून्यनिरालम्बलिङ्गम्) विश्वस्वरूपं विश्वातीतं वरिवर्ति।

स्थलशब्दविवेचनक्रमे तदर्थः—स्थ स्थानम्, ल लय इति निर्णीतवान्। तदाकूतमेतत्—स्थलमेव समस्तचेतानाचेतनात्मकस्य विश्वस्य समुत्पत्ति-लयकेन्द्रम्। एतदेव तत्त्वानामाधारः। एतैर्निखिलैः प्रमाणैः सिध्यति यत् स्थल-

वाच्यं ब्रह्म सच्चिदानन्दस्वरूपं प्रकाशस्वरूपं चावतिष्ठते। तद्धि धवलपटसन्निभं विज्ञेयम्। तत्रैव स्वविनोदार्थं निजं चाविर्भावयति तिरोभावयति च। इदं शुद्धसत्तास्वरूपम्।

सर्वतत्त्वाश्रयतत्त्वरूपेण परिणतमपि तदस्ति तत्त्वातीतम्। तच्चाध्यात्मिकानुभूतिगम्यम्। तन्निवर्चनं कर्तुकामा वयं सकलनिष्कलसच्चिदानन्दप्रभृतिभिः शब्दैः शक्नुमः।

कुतः सृष्टिः? इत्यस्य समाधाने निगदन्ति दार्शनिका आस्तिका तल्लीलामात्रम्। वीरशैवदार्शनिका अपि विचारेणानेन सहमताः। तेषां भणितिरियम्—परमात्मा निजविनोदार्थं नानारूपो मुदं गच्छति। तच्च तल्लीलामात्रम्। अस्माद् हेतोः शुद्धाशुद्धसृष्टिस्तल्लीला।

सृष्टिसिद्धान्तस्य विवेचनं विश्लेषणं च विभिन्नदार्शनिकैर्निजनिजदृष्टिकोणेन समुपस्थाप्य समाधानाय प्रयासो विहितः। पाश्चात्त्यदेशेषु डारबिनप्रभृतयो विकासवादसिद्धान्तिनः समामनन्ति यद् भौतिकपदार्थेभ्यः सृष्टिर्जाता। विकासश्चास्याः क्षुद्रादारभ्य स्थूलपर्यन्तं क्रमिकः। किञ्चोपादानकारणमुत्पत्तिविकासयोरित्यस्य प्रत्युत्तरे वदन्ति ते—आकस्मिकत्वं वातावरणं वा। तदीयो विकाससिद्धान्तो भौतिकजडपदार्थान् प्रमाणीकृत्य तद्व्याप्तिं घटयित्वा स्थिरीकृतोऽस्ति। तस्मिन्नेव देशे सेम्युल-अलेक्जण्डरेण सोपज्ञैर्युक्तिभिर्विकासवादं खण्डयित्वा चेतनसकाशादेव विकासस्तन्मूलकात्, तदुपादानकारणञ्च चेतनमित्युपपादितम्। तच्चेतनञ्च 'डेटि'-नाम्ना सम्बोधितम्।

हेनरि-बरगसान्महोदयेन नैजे सृष्टिविकासनाम्नि ग्रन्थे जडवादं निराकृत्य विश्वविकासार्थं चेतनमेवोपादानकारणमित्युपपादितं सोद्घोषम्, तत् तत्त्वञ्च 'एलानह्वाइटल' नाम्ना प्रतिपादितम्। सुविख्यातविकासवादिदार्शनिकेन बरग्सानमहाशयेन चेतनादेव विकास इत्युपपादितम्। ततोऽपि तत्र सूक्ष्मचेतनाविकासः केन प्रकारेण संवृत इति नाधिगतं महानुभावेन। सेम्युल-अलेक्जण्डरो डेटितत्त्वं कथं सम्भूतमित्युंपपादयितुं नाशकत्, तद्विशुद्धसृष्ट्यनुभूतेरतद्बुद्धिवशगत्वाभावात्।

वीरशैवदर्शने तु—सर्वशून्यं निरालम्बं लिङ्गमेव सर्वतः सूक्ष्मतमं शुद्धसत्त्वस्वरूपञ्चास्ति। सावस्था शुद्धोन्मेषाद् महासंकल्पात् प्राक्तनी। सर्वशून्यनिरालम्बलिङ्गम्, निश्शून्यलिङ्गम्, शून्यलिङ्गं चैतानि त्रीणि तस्यैव ब्रह्मणः सूक्ष्मावस्थान्त-

राणि। तस्मिन्नेवाविर्भावतिरोभावौ भवतः। एवं सत्यपि तत्त्वातीतं तत्। सर्वशून्यनिरालम्बलिङ्गं नाम महासत्ता। यदोङ्कारशक्तिः शून्यं स्मरति तदा निश्शून्यलिङ्गं भवति। शून्यलिङ्गं नाम (निष्कलं) महाचित्तस्वरूपम्। तदेव निष्कलम्। अस्मादेव महाचित्स्वरूपान्निष्कलब्रह्मणश्चिन्नादश्चिद्-बिन्दुश्चित्कलाश्चाविर्भवन्ति। एतदेव तदाश्रयः। एतेषां त्रयाणां समष्टिभाव एव महालिङ्गत्वेनाभिधीयते। तच्च घृतकाठिन्यवत् मूर्तिः सच्चिदानन्दलक्षणाम्। एनामेव समष्टिमखण्डगलिकाकारतेजोमूर्तिं महालिङ्गमिति व्याहरन्ति। निष्कल-लिङ्गाद् अकार-उकार-मकाराणां प्रस्फोटः। त्रयाणामेतेषां केन्द्रबिन्दुर्महाचित्तम्। चतुर्णामेतेषां समष्टिर्महालिङ्गम्।

प्रस्तुतवीरशैवसिद्धान्तस्य सृष्टिरचनातः कश्मीरदर्शनस्य (त्रिकदर्शनस्य) सृष्टिक्रमो मनाग् भिन्नतरः प्रतीयते। त्रिकसिद्धान्ते शिवोऽस्ति प्रकाशस्वरूपः, शक्तिश्च विमर्शस्वरूपिणी। एषैव विमर्शा शक्तिः परमात्मनः शिवस्य स्वतन्त्रा शक्तिः। अस्या एव स्वातन्त्र्यशक्तेर्भवति शुद्धाशुद्धतत्त्वसृष्टिः। अद्वैतमेव द्वैतत्वेन भासत इत्याकूतम्। वस्तुगत्या सृष्टिः (आभासः) परशिवान्नो भिन्ना। भिन्नाध्वादि-करणात् तत्त्वमेतद् द्वैतत्वेन समभिधीयते। परमशिवः स्वानन्दाय तत्त्वरूपेण परिण-मते। सर्वमुद्भवति लयमेति च तत्रैव। वीरशैवदर्शने प्रयुक्तोङ्कारशक्तिःप्रत्यभिज्ञा-सिद्धान्तीयशक्तितत्त्वतो विलक्षणतरा। प्रत्यभिज्ञासिद्धान्ते पूर्णाहन्तापरमशिवः स्वस्वातन्त्र्येण शिवशक्तिसदाशिवेश्वरविद्यातत्त्वरूपैः परिणमते। अस्माद् हेतो-रस्मिन् सिद्धान्ते शक्तिश्च तत्त्वस्वरूपिणी, न त्वोङ्कारशक्तिस्तथा।

प्रत्यभिज्ञासिद्धान्ते तत्त्वसृष्टिः शिवतत्त्वात् प्रक्रमते। वीरशैवसिद्धान्ते तु तत्त्व-सृष्टिर्महालिङ्गाज्जायते। फलतः प्रत्यभिज्ञावादिनः शक्तितत्त्वं तत्त्वतः परवर्ति सिध्यति। अस्मिन्मते त्रीणि निश्शून्यलिङ्गानि स्वीकृत्य तेषु सूक्ष्मविश्लेषणत्वेन तारतम्यं स्थाप्यते। प्रत्यभिज्ञासिद्धान्ते परशिवस्याधिष्ठानत्वेन स्वीकर्तव्यतायामपि नास्ति एतावत्सूक्ष्मविश्लेषणम्। महालिङ्गेन तावत् तुलनीयो शाक्तानां महाबिन्दुः।

महालिङ्गादेव शुद्धाशुद्धतत्त्वसृष्टिर्जायते। पञ्च शक्तयः पञ्च सादाख्याः पञ्च-विंशतितत्त्वानि समेत्य षट्त्रिंशत्संख्यां पूरयन्ति। इति शम्॥

---

# कथं वेदान्तिनां समवायविद्वेषः ?

श्रीआनन्दझा, लक्ष्मणपुर (लखनऊ) विश्वविद्यालयस्थः ।

मन्ये प्रविदितमेवेदं दार्शनिकरहस्यविदां यन्न्यायवैशेषिकमतसिद्धः समवाय एव ह्यारम्भवादस्य मेरुदण्डभूतः । यत आरम्भ उत्पत्तिः । उत्पत्तेश्च व्याख्या तत्तदवसरे नैयायिकैर्वैशेषिकैश्चेयमेव विहिता यदुत्पत्तिर्हि स्वकारणसमवायो वा स्वसत्तासमवायो वेति । अत्र स्वकारणसमवाय इत्यस्यार्थः—स्वस्य कारणे समवायः । अत्र स्वपदेन कार्यस्य, कारणपदेन च समवायिकारणस्य ग्रहणं वेदितव्यम् । फलतः समवायिकारणे कार्यस्य समवाय एव कार्यस्योत्पत्तिः । घटसमवायिकारणयोः कपालयोर्घटसमवाय एव घटोत्पत्तिः, पटसमवायिकारणेषु तन्तुषु पटसमवाय एव पटोत्पत्तिः । एवमेवान्यत्रापि सर्वत्र । आरम्भपदवाच्याया उत्पत्तेर्व्याख्या । यद्यत्र कश्चिद् ब्रूयाद् यदुत्पत्तेः पूर्वं घट एव नासीदिति कथं तस्य समवाय इति शक्यते वक्तुम् ? एवमेव सर्वत्रोत्पत्तिविवेचने कठिनता समापततीति । तदा 'स्वकारणसमवायः' इत्यस्य स्वं च कारणं च इति स्वकारणे, तयोः समवायः स्वकारणसमवाय इत्येवं व्याख्या बोध्या । तथा चैतस्यां व्याख्यायां पूर्वतो विद्यमाने समवाये कार्यप्रतियोगिकत्वस्य समवायिकारणानुयोगिकत्वस्य च सम्पत्तिरेवोत्पत्तिरिति पर्यवस्यति । घटोत्पत्तिस्थले नित्यो ह्येकः समवायः । यो हि पूर्वं घटप्रतियोगिकत्वकपालानुयोगिकत्वाभ्यां नासीत् सम्पन्नः, कुलालव्यापाराव्यवहितोत्तरं स ताभ्यां सम्पन्नो जात इति समवायस्य घटप्रतियोगिकत्वकपालानुयोगिकत्वसम्पत्तिरेव घटस्योत्पत्तिः । एवमेवान्यत्रापि बोध्यम् ।

'स्वसत्तासमवायः' इत्यस्य च व्याख्या 'स्वस्मिन् सत्तायाः समवायः स्वसत्तासमवायः' इत्येवंरूपा बोध्या । अस्यामस्य व्याख्यायां सत्ताप्रतियोगिकः कार्यानुयोगिकः समवायः कार्यस्योत्पत्तिरिति पर्यवस्यति । कुलालव्यापारात्पूर्वं घटो नासीदित्यस्य सत्ताप्रतियोगिको घटानुयोगिकः समवायो नासीदित्यर्थः, विशेष्यभूतस्य समवायस्य नित्यतया कुलालव्यापारात्पूर्वं तस्य सत्त्वेऽपि तत्र विशेषणभूतयोः सत्त्वप्रतियोगिकत्व-घटानुयोगिकत्वयोरभावेन देवदत्तस्य विद्यमानतास्थले तद्धस्ते

दण्डस्याविद्यमानतायां दण्डी देवदत्तो नास्तीतिवत् सत्ताप्रतियोगिकघटानुयोगिक-समवायाभावस्य सुवचत्वात्। अतः सत्ताप्रतियोगिको घटानुयोगिकश्च समवाय एव घटोत्पत्तिः। एवंभूतैव घटोत्पत्तिः कुलालव्यापाराव्यवहितोत्तरं भवतीति कुलाल-व्यापारस्य फलं भवति। एवमेव हि पटमठाद्युत्पत्तिस्थलेऽपि बोध्यम्।

यद्यत्रापि पूर्वव्याख्यावत् समवायस्य घटपटादिकार्यानुयोगिकत्वांशं कश्चिदा-क्षिपेत्, तदा पूर्ववदेव व्याख्यायामस्यामपि समवायस्य सत्त्वप्रतियोगिकत्वघटानुयोगि-कत्वे एव घटोत्पत्तिः। सैव च कुलालव्यापाराव्यवहितोत्तरतया कुलालव्यापारफलम्। एवमेवोत्पत्त्यन्तरस्थलेऽपि वेदितव्यमित्युत्तरं वेदितव्यम्।

विहितेनानेन विवेचनेन स्पष्टमिदमवगन्तुं शक्यते यन्न्यायवैशेषिकमते समवायः क्रियानुपयोगीति। एवंभूतस्य समवायपदार्थस्योपरि वेदान्तिनां ताव-द्दार्शनिकानां किन्तु समवलोक्यते वक्रतमा दृष्टिः। सर्वथा खड्गहस्ता दरीदृश्यन्ते ते समवायमुद्दिश्य। आचार्यशङ्करानुयायिनो विवेचकास्तावत् समवायपदार्थस्य खण्डने नन्वेवं वदन्ति यल्लक्षणप्रमाणाभ्यामेव कस्यापि वस्तुनः सत्ता वा स्वरूपं वा शक्यते केनापि निर्धारयितुम्। उभयोरप्येतयोरस्त्यभावः समवायविषये। समवायाभ्युप-गन्तृभिर्न प्रतिपादयितुं शक्यते समवायस्य निर्दोषं लक्षणम्, न चोपस्थापयितुं शक्यते तद्विषये प्रमाणम्। तथा हि—"अयुतसिद्धानामाधार्याधारभूतानामिहप्रत्ययहेतुः सम्बन्धः समवायः" एवं यदि समवायस्य लक्षणमुच्यते, तर्हि 'इह भूतले घटाभावः' इति प्रत्ययविषये विशेषणविशेष्यभावात्मके हि सम्बन्धे प्रोक्तस्य समवायलक्षणस्याति-व्याप्तिर्दुर्वारतां धत्ते। यतो हि 'इह भूतले घटाभावः' इति प्रतीतिस्थले भूतलं भवति विशेषणं घटाभावो भवति विशेष्यः। अतो भूतलनिष्ठविशेषणतानिरूपिता विशेष्यता घटाभावे, घटाभावनिष्ठविशेष्यतानिरूपितविशेषणता च भूतले मन्तव्यैव। तथा च तात‌तनययोर्जन्यजनकभाव इव भूतलघटाभावयोरपि प्रोक्तया प्रतीत्या विषयी-क्रियमाणो विशेष्यविशेषणभावः सम्बन्धः स्वीकार्य एव। वस्तुदृष्ट्या भूतलमाधारः, घटाभाव आधेय इति भूतलघटाभावयोराधार्याधेयभूतता निराबाधैव। अयुत-सिद्धताऽपि भूतलघटाभावयोर्मन्तव्यैव। यतः "ययोर्द्वयोर्मध्ये एकमपराश्रितमेवाव-तिष्ठते तावयुतसिद्धौ" इत्येव हि परिभाषा तावदयुतसिद्धस्य विधीयते समवायाभ्युप-गन्तृभिः। भूतलघटाभावयोर्मध्ये घटाभावो भूतलाश्रित एव भवतीति कथं न

स्याद् भूतलघटाभावयोरयुतसिद्धता ? न खल्विदं शक्यते वक्तुं यद्घटाभावो न भूतलमात्रनिष्ठः, अपि तु जलादावन्यस्मिन्नधिकरणेऽपि तिष्ठत्येव । "अपराश्रितमेवावतिष्ठते" इति प्रोक्तायुतसिद्धपरिभाषायां विद्यते नन्वेवकारः । तेनायुतसिद्धतया विवक्षितयोराधार्याधारयोर्मध्ये आधारिणोऽन्याधारता प्रोक्तैवकारनिषिद्धेति कथं भूतलघटाभावयोरयुतसिद्धता सुवचेति ।

यतो हि प्रोक्तया 'भूतले घटाभावः' इत्येतया हि प्रतीत्या आधारित्वेन विषयीक्रियमाणो घटाभावो न विभिन्नेष्वधिकरणेषु दण्डायमान एकः । अपि तु प्रत्यधिकरणं विभिन्न एव । एवं सति यो हि घटाभावो भूतले तिष्ठति नासावन्यत्र तिष्ठतीति प्रोक्तप्रतीतिविषयस्याधारिणो घटाभावस्य प्रोक्तैवकारबोध्या भूतलान्यानिष्ठता सर्वथा तावदक्षुण्णैव । एवं च समवायलक्षणालक्ष्यभूते 'भूतले घटाभावः' इत्यादिप्रतीतिविषये विशेषणविशेषभावसम्बन्धे प्रोक्तस्य समवायलक्षणस्य गतत्वादलक्ष्ये लक्षणगमनात्मिकाया अतिव्याप्तेर्दुर्वारता "अयुतसिद्धानामाधार्याधारभूतानाम्" इत्यादौ प्रोक्ते समवायलक्षणे सर्वथा स्फुटैव । लक्षणं त्वव्याप्त्यतिव्याप्त्यसम्भवैतद्दोषत्रयरहितोऽत एवासाधारण्यमादधानो धर्म एव भवतीति न समवायस्य प्रोक्तं लक्षणं शक्यं वक्तुम् ।

यद्यथ कश्चिदन्य एवं ब्रूयाद् यत् "अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्नित्यद्रव्यविशेषयोश्चेहप्रत्ययहेतुः सम्बन्धः समवायः" इति समवायलक्षणम् । एवं च न 'भूतले घटाभावः' इत्यादिप्रत्ययविषये प्रोक्तविशेषणविशेष्यभावे सम्बन्धेऽतिव्याप्तिः । यतो हि भूतलघटाभावौ नावयवावयविनौ, न गुणगुणिनौ, न क्रियाक्रियावन्तौ, न जातिव्यक्ती, न वा नित्यद्रव्यविशेषौ, येन तदुभयोः सम्बन्धभूते प्रोक्ते विशेष्यविशेषणभावेऽलक्ष्यभूते समवायलक्षणगमनात्मिकाया अतिव्याप्तेः शङ्कालेशोऽपि स्यादिति ।

तत्रेदं प्रतिवक्तव्यम्—यन्नेदमपि लक्षणं समवायस्य शक्यते वक्तुम् । यतो हि न खल्वौपनिषदे सिद्धान्तेऽवयवावयविभावगुणगुणिभावादीनां मान्यता । येन तद्घटितं प्रोक्तं समवायलक्षणमपि शक्नुयात् स्वस्मिन् मान्यतामाधातुमिति । आस्तां वाऽभ्युपगमसिद्धान्तेन कथञ्चिदवयवावयविभावादीनां तेषां मान्यता, तथापि न युज्यते कथमपि समवायलक्षणं प्रोक्तम् । यतो हि तथा स्वीक्रियमाणे समवायलक्षणे

'इह कपाले घटः', 'इह घटे रूपम्', 'इह शाखायां स्पन्दः', 'इह गवि गोत्वम्', 'इहाकाशे विशेषः' इत्यादिप्रत्ययविषये विशेषणविशेष्यभावे समवायलक्षणातिव्याप्ति-रत्रापि लक्षणे दुर्वारतामेव धत्ते। प्रोक्तप्रत्ययविषयस्य विशेषणविशेष्यभावस्य अवयवावयव्यादिप्रतियोग्यनुयोगिकसम्बन्धत्वं यतः सर्वथाऽक्षुण्णमेव। इह प्रत्यय-हेतुता तु स्फुटैव।

यदि कोऽप्येवमत्र ब्रूयाद् यत् प्रोक्ते 'इह कपाले घटः', 'इह घटे रूपम्' इत्यादिप्रत्ययस्थले समवायस्यैव 'इह'प्रत्ययहेतुता मान्या, न विशेषणविशेष्यभाव-स्येति कथं तत्रातिव्याप्तिः शक्या समापादयितुमिति। तर्हि तत्रेदं वक्तव्यं यत् तथापि तथोक्तौ 'इहाकाशे शब्दः' इति प्रत्ययस्थले इहशब्दाकाशयोः सम्बन्धतया प्रतीयमाने वाच्यवाचकभावे सम्बन्धे समवायलक्षणस्यातिव्याप्तिरापतत्येव। यतो हि इहेतिशब्दस्य गुणत्वेन, आकाशस्य च गुणितया गुणगुणिभावो वाच्यवाचकभाव-सम्बन्धप्रतियोग्यनुयोगिभूतयोर् इहशब्दाकाशयोर्भवत्येव, प्रकृतेहेतिशब्देनाकाशस्यैव तदाश्रयभूतस्याभिधानात् प्रकृतस्य वाच्यवाचकभावस्य इहप्रत्ययहेतुताऽपि सुस्पष्टैव।

यद्धि परवर्त्तिभिः समवायाभ्युपगन्तृभिः "नित्यः सम्बन्धः समवायः" इति समुपस्थाप्यते समवायस्य लक्षणं पुरतो विवेचकानाम्, न तदपि युज्यते कथञ्चित्। यतो हि नित्यत्वे सति सम्बन्धत्वं तादृशे विशेष्यविशेषणभावेऽपि सम्बन्धेऽक्षुण्णम्, यादृशस्य तस्य प्रतियोग्यनुयोगिनौ नित्यतां भजेते। 'आकाशे एकत्वम्' इत्यादि-प्रतीतिस्थले प्रतीयमानो हि विशेषणविशेष्यभावः सम्बन्धो नानित्यः शक्यते वक्तुम्, प्रतियोग्यनुयोगिभूतयोराकाशैकत्वयोरुभयोरपि नित्यत्वेन तत्सम्बन्धभूतस्य तस्यापि सार्वदिकतया नित्यताभ्युपगमस्यैवौचित्यात्। एवं कालाकाशसंयोगादावप्यतिव्याप्तिरस्य समवायलक्षणस्य दुर्वारैव। नहि व्यापकयोराकाशकालयोः कदाचिदपि क्रियोत्पाद-सम्भवो येन क्रियया तया तयोर्विभागे जनिते विभागेन तेनानादेराकाशकालसंयोगस्य नाशो भवितुमर्हेत्। तथा च नित्यसम्बन्धत्वं हि समवायलक्षणतया प्रोच्यमानमति-व्याप्नोत्येव कालाकाशादिव्यापकसंयोगमलक्ष्यभूतम्। अतो न समवायस्य लक्षणं किमपि शक्यते निर्वक्तुं कथञ्चिदपि तदभ्युपगन्तृभिः।

एवं समवायलक्षणासिद्धिमुपस्थाप्य तत्र प्रमाणस्य विषये ते खल्वेवं वदन्ति। यत् प्रमाणमपि किञ्चित् समवायस्यास्तितायां नोपस्थापयितुं शक्यते तदस्तित्वा-

भिमानिभिः। यतः प्रत्यक्षं प्रमाणं तावदितो हेतोर्नोपस्थापनार्हं यत् 'इह तन्तुषु पटः' इति प्रात्यक्षिकी हि विषयता यदि तन्तुपटयोरिव समवायेऽपि प्रोच्यते, तर्हि तत्र प्रत्यक्षे तन्तुपटयोरिव समवायस्यापि जनकता वाच्या स्यात्, बौद्धसिद्धान्त इव न्याय-वैशेषिकसिद्धान्तेऽपि प्रत्यक्षं प्रति विषयस्य कारणतायां मान्यत्वात्। बुद्धिश्च सा तन्तुपटयोराधाराधेयभावख्यापिका। अतस्तत्प्रतीतिविषयस्य आधारबुद्धिजनकता, आधेयबुद्धिजनकता, आधाराधेयोभयबुद्धिजनकता वाऽवश्यमभ्युपगन्तव्या स्यात्। आमित्युक्तावाधारबुद्धिजनकताभ्युपगमे प्रोक्तप्रतीतिस्थले तन्तुपटयोरुभयोराधार-तया प्रतीत्यापत्तिः। आधेयबुद्धिजनकताभ्युपगमे तन्तुपटयोरुभयोरप्याधेयतया प्रतीत्या-पत्तिः। उभयोस्तन्तुपटयोरन्तरालवर्त्तितया तदुभयोः कृते समानतया समवाये यद्युभय-बुद्धिजनकता मन्यते, तर्हि तदुभयोः कृते समानोऽसौ समवायस्तन्तुषु पटे चोभयत्राधार-बुद्धिमाधेयबुद्धिं च नियमतो जनयेदिति कृत्वा तन्तूनामाधारतयाऽऽधेयतया च प्रतीत्या-पत्तिः, पटस्यापि चाधारतयाऽऽधेयतया च प्रतीत्यापत्तिः। परन्तु नास्त्येव खल्वेवं-विधा परिस्थितिः। 'इह तन्तुषु पटः' इति प्रतीतिस्थले तन्तूनां केवलमाधारता, पटे च केवलमाधेयता भवति समधिगता। अतोऽनुभवविरोधाद् न प्रोक्तेषु त्रिष्वपि विकल्पेषु कोऽप्येकः कल्पो विचारसहतामेति। अतस्तन्तुपटयोरिव समवायस्य 'इह तन्तुषु पटः' इति प्रत्यक्षविषयता न शक्या समभ्युपगन्तुं समवायाभ्युपगन्तृभिरपि। सति चैवं कथं प्रत्यक्षात्मकं ज्ञानं तत्करणभूतमिन्द्रियं वा समवाये प्रत्यक्षप्रमाणतया शक्यते कथञ्चिदपि समुपस्थापयितुम्? अतः प्रत्यक्षं प्रमाणं समवाये विषय इति सर्वथा वक्तुमशक्यमेव।

किञ्च 'समवायः प्रत्यक्षीक्रियते' इति यदभ्युपेयते, तत्रेयं जिज्ञासा समुदेति तत् समवायोऽसौ सम्बद्धतया प्रत्यक्षीक्रियते पटाद्याधेयवत्? आहोस्विद् असम्बद्धतया स्वत एव प्रत्यक्षीक्रियते? यदि सम्बद्धतया प्रत्यक्षीक्रियत इत्युच्यते, तदा सम्बद्धतया प्रत्यक्षीक्रियमाणस्य समवायस्य पटाद्याधेयप्रतियोगिकस्य सम्बन्धतया अन्योऽपि समवायः प्रत्यक्षीकर्त्तव्यः स्यात्। तस्यापि च समवायप्रतियोगिकतया प्रत्यक्षीक्रिय-माणस्य द्वितीयस्य समवायस्य सम्बन्धतया तृतीयोऽन्यः समवायः प्रत्यक्षीक्रियमाणो मान्यः स्यादित्येवमनुभवविरुद्धप्रत्यक्षीक्रियमाणानन्तसमवायधाराऽभ्युपगमप्रयुक्ता अनवस्था समापतति। यदि च प्रत्यक्षीक्रियमाणसमवायपरम्पराभ्युपगमप्रयुक्ताया

अनवस्थाया अस्या निराकरणाय समवायप्रतियोगिकस्य कस्यापि समवायस्य समवायान्तराप्रतियोगितयैव प्रत्यक्षं जायत इत्यभ्युपगम्यते, तदा अन्ते रण्डाविवाहानौचित्यन्यायेन पटादेराधेयस्यैव कुतो न सम्बन्धाप्रतियोगितया समवायातिरिक्तसम्बन्धप्रतियोगितया वा प्रत्यक्षीक्रियमाणता मान्यतामावहतीति न 'प्रत्यक्षं प्रमाणं समवाये' इति शक्यं वक्तुम्।

एवं समवाये प्रत्यक्षं प्रमाणं निरस्य नानुमानमपि प्रमाणं समवायविषय इति तात्रदेवं प्रतिपादयन्ति शङ्करानुयायिनो वेदान्तिनः—प्रत्यक्षे हि लिङ्गलिङ्गिनोरव्यभिचरितसामानाधिकरण्यात्मके सम्बन्धे, लिङ्गेन लिङ्गी गम्यत इति वस्तुस्थितिः। सम्बन्धप्रत्यक्षं नियमतः सम्बन्धिद्वयप्रत्यक्षाधीनम्। नहि सम्बन्धिनोरप्रत्यक्षतायां तयोः सम्बन्धस्य प्रत्यक्षता कथमपि शक्या समभ्युपगन्तुम्। एवं सति समवायोऽनुमीयते केनचिल्लिङ्गेनेति समभ्युपगम्यमाने समवायज्ञापकतया समभ्युपगम्ये लिङ्गे तस्मिन् लिङ्गित्वेनाभ्युपगम्यस्य समवायस्याव्यभिचरितसामानाधिकरण्यात्मकः सम्बन्धः प्रत्यक्षीकर्तव्यः स्यात्। सम्बन्धस्य च तस्य प्रत्यक्षीकरणे तत्प्रतियोगिनो लिङ्गिनः समवायस्य प्रत्यक्षता समपेक्षिता स्यात्। समवायस्य तु प्रत्यक्षता विहितेन भूयसा विचारेण सर्वथा खण्डिता। सत्यामेतस्यां परिस्थितौ कथं केनापि केनापि लिङ्गेन समवायोऽनुमीयत इति शक्यते वक्तुम्।

यच्च "विवादाध्यासित इहप्रत्ययः सम्बन्धपुरस्सरः, अबाधितेहप्रत्ययत्वात्, इह कुण्डे बदराणीति प्रत्ययवत्", "जात्यादिगोचरो विशिष्टव्यवहारः सम्बन्धनियतो भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् सघटं भूतलमिति व्यवहारवत्" इत्याद्यनुमानं समवायस्य साधकतया समुपन्यस्तं तत्र तत्र समवायाभ्युपगन्तृभिः, तदपि सर्वं सम्बन्धत्वमात्रपुरस्कारेण सम्बन्धानुमापकतया समवायत्वातिरिक्तपदार्थत्वाभ्यां कमपि सम्बन्धविशेषमननुमापयद् नैव धत्ते किञ्चित्करतां समवायाभ्युपगन्त्रभिप्रेतस्वरूपस्यातिरिक्तपदार्थस्वरूपस्य समवायस्य सिद्धौ। प्रत्युतावयवावयविगुणगुण्यादीनां तादात्म्यस्य सम्बन्धस्य पूर्वत एव स्वीकृततया प्रोक्तस्य तज्जातीयस्यान्यस्य वाऽनुमानस्य सिद्धसाधनदोषग्रस्तत्वम्। द्रव्याद्यतिरिक्तसमवायपदार्थस्थापनाय प्रवृत्तैः समवायाभ्युपगन्तृभिः समुपस्थापितेनैवंविधेनानुमानेन साध्यत्वेनानभिप्रेतं सम्बन्धमात्रं साध्यत्वेनाभिप्रेताद् द्रव्याद्यतिरिक्तत्वसमवायत्वधर्मयुक्तात् समवायादन्यदित्यर्था-

न्तरदोषग्रस्तत्वं वा सर्वथा परिहर्त्तुमशक्यमेवेति नानुमानं प्रमाणीकर्त्तुं शक्यते समवाये विषये ।

उपमानमतिरिक्तं प्रमाणं भवदपि न्यायवैशेषिकसिद्धान्ते पदार्थयोर्वाच्यवाचक-भावस्य ज्ञापन एव प्रामाण्यं भजते । अतो नैव तत् प्रामाण्यं भजते समवाये । समवायव्यवस्थापकेषु तेषु तेषु न्यायवैशेषिकाचार्येषु समवायमनभ्युपगच्छतां हि तेषां तेषां विवेचकानामाप्तत्वनिश्चयः सर्वथा असम्भव एव । नातः शब्दोऽपि समुपस्थापयितुं शक्यते प्रमाणतया समवायाभ्युपगन्तृभिः पुरतस्तदनभ्युपगन्तॄणाम् । अर्थापत्त्यनुपलब्ध्योस्तु प्रत्यक्षानुमानातिरिक्ततया प्रामाण्यमेव नाङ्गीक्रियते नैयायिकैर्वैशेषिकैर्वा । अतः समवायविषये तयोः प्रमाणतया समुपस्थापनसम्भावना सुदूरपराहतैव । एवं लक्षणस्येव प्रमाणस्यापि सर्वथा विरहः समवायस्य । तथा च लक्षणप्रमाणयोरुभयोरप्यभावे क्वावकाशः समवायावकाशसाफल्यस्येति ।

न केवलमाचार्यशङ्करानुयायिन एवैवं समवायस्योन्मूलनाय बद्धपरिकरा दृश्यन्ते । ते रामानुज-निम्बार्क-वल्लभ-मध्वाद्यनुयायिनोऽपि समवायस्यास्यामान्यतायां शङ्करानुयायिन एव समवलोक्यन्ते, ये बहुत्र समवलोक्यन्ते तैः सह, परस्परञ्च कलहायमानाः स्वस्य स्वस्यैव च वेदान्तित्वं मन्यमानाः ।

अथैवं समवाये विषये न्यायवैशेषिकविदां वेदान्तिनां च सर्वेषां स्पष्टीकृते दृष्टिकोणे दार्शनिकं रहस्यमविजानतां हि बहूनां विवेचकानां हृदये जिज्ञासेयं समुज्जृम्भते यत् को नाम महानपकारः क्रियते समवायेनानेन मन्यमानेन वेदान्तिनाम् ? यतो हेतोर्महानेवंविधो विद्वेषः समवाये महात्मनां वेदान्तिनाम् ? "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते" इत्यस्य सर्वानुभवसिद्धतया असति कस्मिंश्चित् प्रयोजने नौचित्यमर्हति कथञ्चिदपि समवायखण्डनप्रवृत्तिर्वेदान्तिनां तेषाम् । अस्ति चेत् प्रयोजनं किं तदिति ।

तत्रेदमवधेयम्—समवायाभ्युपगन्तृभिः समवायोऽसौ परमार्थसन्नित्यः समभ्युपगम्यते । वेदान्तिभिश्च शङ्करानुयायिभिर्ब्रह्मैव केवलं परमार्थसन्नित्यमिति स्वीक्रियते । इति वस्तुस्थितिः । इदानीं वेदान्तिनः समवायमपि नित्यं नित्यसद्ब्रह्मभिन्नं परमार्थसन्तं यदि स्वीकुर्युस्तर्हि नित्यपरमार्थसत्समवायबलिवेद्यां प्रोक्तो ब्रह्मैव परमार्थसन्नित्यमिति तत्सिद्धान्तः सर्वथा बलिपशुत्वं गन्ता स्यात् । किञ्चेदमप्यत्र रहस्यं यत्

समवायाभ्युपगन्तृभिर्द्रव्याद्यतिरिक्ततया स्वीक्रियमाणो हि समवायः सम्बन्धात्मक एव समभ्युपगम्यते। सम्बन्धिद्वयनिष्ठं सत् सम्बद्धप्रतीतिनियामकं वस्तु सम्बन्ध इति गीयते। तथा च कस्यचित्सम्बन्धत्वाय परस्परं सम्बन्धिनोस्तयोः, तयोः सकाशात् सम्बन्धत्वेनाभिमतस्य च भेद आवश्यकतां धत्त एव। घटपटसंयोगस्थले एकः सम्बन्धी घटः सम्बन्धिभूतादपरस्मात् पटाद्भिद्यते। अपरसम्बन्धी पटोऽप्येवं सम्बन्धिनो घटाद्भिद्यते। घटपटयोर्द्वयोः संयुक्तत्वप्रतीतिनियामको द्वयोरन्तरालवर्त्ती संयोगात्मको गुणोऽपि द्रव्यात्मकाभ्यामुभाभ्यां घटपटाभ्यां भिद्यत एव। एवं समवायस्याप्यभ्युपगम्यमानतादशायां गुणादौ गुणयादेर्भेदः, गुणयादौ च गुणादेर्भेदः, ताभ्यां च तयोः सम्बन्धभूतस्य समवायस्य भेदोऽपि मान्यः स्यात्। अद्वैतिनां भयं चेत्कुतश्चिद्भवति, केवलं भेदादेवान्यैः कल्प्यमानाद् वस्तुगतस्य द्वित्वस्य स्थापकात्। द्वैतं चासह्यमेवाद्वैतिनामद्वैतविरोधित्वात्। अत एव हि तत्र तत्र समुत्स्थाप्यते तैः "द्वितीयाद्वै भयं भवति" इति श्रौतं वचनम्। संयोगाश्रिताद् भेदात् समवायाश्रितस्य भेदस्य तावदिदं भीषणत्वं ब्रह्माद्वैतवादिनां वेदान्तिनां कृते भवति यत् संयोगस्यानित्यत्वमेवेति समभ्युपगमपक्षे संयोगाश्रितस्य भेदस्यापि नियमतोऽनित्यतया भेदविनाशे तिष्ठति कथञ्चिदाशाऽपि तावदभेदोदयस्य। समवायाश्रितस्य तु भेदस्य नियमतो नित्यतैव स्यात्। भेदेन च तेन नियमतः सर्वदा द्वैतस्यैव साम्राज्ये तस्याद्वैतस्य सम्भावनाऽपि विलुप्यते, यदर्थमेव सर्वः प्रयासो वेदान्तिनां शङ्करानुयायिनाम्।

अत्रेदानीं प्रश्नोऽयं पुनः खलूत्थातुमर्हति यद् विहितं हीदं नन्वद्वैतवेदान्तिकर्तृकस्य समवायखण्डनस्य रहस्योत्प्रेक्षणं न भाति यौक्तिकम्। यतो हि समवायस्य ब्रह्मवत्पारमार्थिक्यां सत्तायां वेदान्तिभिः समभ्युपेतायां समवायं परमार्थसन्तं द्वितीयत्वेनोपादाय सत्यं द्वैतापत्तिः समापतति शिरसि तेषाम्। किन्तु तत्र व्यावहारिक्यां सत्तायां समभ्युपेतायान्तु न द्वैतापत्तिः। यतो हि परमार्थसदद्वैतमेव वेदान्तिनामिष्टम्। व्यावहारिकं तु द्वैतं न तेषामसह्यम्। अत एव हि प्रोक्तं तदभियुक्तैः—"लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्" इति। अद्वैतात्मविनिश्चयोत्पत्तेः पूर्वं सर्वमिदमनन्तवैभिन्न्यवत्तया परिलक्ष्यमाणं व्यावहारिकं जगत् पारमार्थिकतत्त्वानावेदकप्रमाणसिद्धतया मान्यमेवेत्यस्य वाक्यस्याभिप्रेतार्थः। एवं सति मा मन्यतां वेदान्तिभिः समवाये पारमार्थिकी सत्ता, व्यावहारिकी तु सत्ता कथं नाङ्गीक्रियते तैस्तत्र ?।

कथं वेदान्तिनां समवायविद्वेषः ?

न चेदमत्र वक्तुं शक्यं यद्व्यावहारिकी तु सत्ता तैरपि समवाये मान्यैवेति। यतो हि नैयायिका वैशेषिकाश्च येषु घटरूपादीनां प्रत्यक्षतास्थलेषु संयुक्तसमवायादीन् सन्निकर्षान् प्रत्यक्षव्यवस्थापकानङ्गीकुर्वन्ति तेषु वेदान्तिनस्ताननङ्गीकृत्य संयुक्त-तादात्म्यादीनङ्गीकुर्वन्ति सन्निकर्षतया। एतेन सुस्पष्टमिदमवसातुं शक्यते यत् संयो-गादिवद्व्यावहारिक्यपि सत्ता नाङ्गीक्रियते वेदान्तिभिः समवाये। तत्र च किं नाम बीज-भूतं रहस्यमिति।

तत्र त्विदमवधेयं रहस्यतया यद्वेदान्तसिद्धान्ते विचित्रतया परिदृश्यमानं हीदं जगद् ब्रह्मणो विवर्तभूतं मायायाश्चाज्ञानापरपर्यायायाः परिणामभूतम्। माया हि जगत्तया ब्रह्मणो विवर्तने साचिव्यं धत्ते। अत एव ह्युक्तमाचार्यवाचस्पतिना—

"अनिर्वाच्याऽविद्याद्वितयसचिवस्य प्रभवतो
विवर्ता यस्यैते वियदनिलतेजोऽबवनयः" इति।

तद्धि तस्याः साचिव्यं जगदाकारेण परिणममानत्वरूपम्। परिणामवादः सत्कार्यवादात्मको भवतु सत्कारणवादात्मको वा, उभयत्र कारणेन कार्यस्यैकात्म्यं विवक्षितं भवति। अत एव हि प्रोक्तं श्रुतौ—"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति। एवं च वेदान्तसिद्धान्ते घटकपालयोः, घटरूपयोः, घटस्पन्दयोः, तद्व-दन्ययोरपि तयोस्तयोरुभयोः व्यावहारिककार्यकारणभावाक्रान्तयोस्तादात्म्यमेव स्वीकार्यतामावहति। समवायस्तु सम्बन्धो न तादात्म्यात्मा। तथा सति तस्य भेद-सम्बन्धत्वासिद्ध्या तदभ्युपगन्तृभिर्नैयायिकवैशेषिकैरभ्युपगम्यमानं समवायस्याति-रिक्तपदार्थत्वं भज्येत। न वा तादात्म्यं समवायात्मकं शक्यं स्वीकर्तुम्, तथा सति वेदान्तसिद्धान्तेऽपि गुणगुण्यादेर्भेदाभ्युपगमप्रसङ्गात्। तथा च समवायाभ्युपगमे शङ्करानुयायिनां जगतो मायापरिणामत्वसिद्धान्तो भज्यते। भग्ने च तस्मिन् "जगदाकारेण परिणममानमायाधिष्ठानत्वरूपं हि ब्रह्मणो जगदुपादानत्वं तैः स्वीक्रिय-माणं खण्डितं भवति। खण्डिते च तस्मिन् ब्रह्मैव जगदभिन्ननिमित्तोपादानतया परमार्थसत्, ततश्चान्यत् सर्वं हि प्रतीयमानमात्रमिति वेदान्तसिद्धान्तः सिकता-कूपायितत्वमीयात् सर्वथा। अतो महता हि समारम्भेण समवायखण्डने प्रवृत्ति-र्वेदान्तिनां शङ्करानुयायिनाम्।

अन्येषामपि च रामानुज-निम्बार्क-मध्व-वल्लभादीनां स्वं स्वमेव वेदान्तिनम्मन्यमानानां समवायस्यामान्यतायां या दरीदृश्यते शाङ्करानुगामितैव, तत्रापि रहस्य-जिज्ञासायां तावदेवमवगन्तव्यं यद् रामानुजस्य विशिष्टाद्वैतसिद्धान्ते जगतो ब्रह्मपरिणामत्वमेव। समवायस्याभ्युपगमे क्रियमाणे न परिणामवादः स्वीकारमर्हतीति प्रदर्शितमव्यवहितपूर्वम्। किञ्च विशिष्टाद्वैतमते परमेश्वरस्य सर्वकर्तृत्वमभ्युपेयते। एवं सति यदि समवायः स्वीकृतः स्यात् तर्हि सर्वान्तर्गतं तं प्रत्यपि कर्तृत्वमीश्वरस्य मान्यं स्यात्। सति चैवं समवायस्य जन्यत्वमुपगतं स्यात्। किन्त्वभ्युपगते हि समवाये तस्य जन्यता न शक्यते वक्तुम्, नित्यप्रतियोग्यनुयोगिकस्य तस्य तथात्वासम्भवात्। अस्यां परिस्थितौ विशिष्टाद्वैतिनां पुरतो विकल्पोऽयं समुज्जृम्भते यत् परमेश्वरस्य सर्वकर्त्तृत्वं विसृज्य समवायो मान्यः, समवायं वा परित्यज्य भगवतः सर्वकर्त्तृत्वं मान्यमिति। तत्र भक्तैर्हि विशिष्टाद्वैतिभिः कथं सर्वकर्त्ता भगवान् परित्यक्तुं शक्यते? अतः समवाय एव परित्यज्यते तैः। समवायाभ्युपगन्तॄणां हि नैयायिकानां वैशेषिकाणां च मते क्षित्यादिजन्यपदार्थकर्त्तृतयैवेश्वरसिद्धिर्भवतीति न सर्वकर्त्तृत्वं परमेश्वरस्य। अतो न समवायाभ्युपगमे काचन बाधा समापतति।

निम्बार्कमतेऽपि जगतो ब्रह्मपरिणामत्वमेव। अतः प्रदर्शितया हि पद्धत्या समवायाभ्युपगमो नैव शक्यते कर्त्तुं जगतो ब्रह्मपरिणामत्वे विमुग्धैस्तैरिति परित्यज्यते समवायः। किञ्च सिद्धान्तेऽस्मिन् चिदचितोर्भेदाभेदावुभौ स्वीक्रियेते। तत्राचितां चिदभेदश्चित्सत्ताधीनसत्ताकतया भवति। अचिद्भूतः समवायस्तु स्वतः सत्ताकतया न किञ्चिदन्यसत्ताधीनसत्ताको भवितुमर्हति। फलतः समवायाभ्युपगमे तत्सर्वस्वभूतः चिदचिद्भेदाभेदवाद एव हारितः स्यात्तैरिति महती भीतिस्तेषां समवायात्।

माध्वमतेऽपि गुणगुण्याद्यभेदः सिद्धान्तभूतः। अत एव हि ते "गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात्" इत्यनुमानमुपस्थापयन्ति। समवायाभ्युपगमे तु नासौ गुणगुण्याद्यभेदः सिद्ध्येत्। अतो माध्वा अपि भीताः समवायतः। किञ्च—

ससर्ज भगवानादौ त्रीन् गुणान् प्रकृतेः परः।
भगवत्तन्त्रता यस्यास्तद्भार्यात्वं सुरूपता॥

## कथं वेदान्तिनां समवायविद्वेषः ?

माया सा तु प्रोच्यते श्रीदोषपूता जडा स्मृता।
सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः॥

इत्यादीनि प्रमाणान्युपन्यस्यतां माध्वानामपि मते जगतो गुणपरिणामवादो मान्य एव। नित्यस्य समवायस्याभ्युपगमे सा हि मान्यता नार्हति स्थातुमिति माध्वानामपि समवायभीतिर्युज्यत एव। एवं शुद्धाद्वैताध्वप्रस्थितानां वल्लभीयानां मतमपि हेतोरितः समवायविरुद्धं यत् शुद्धाद्वैतदर्शनेऽपि जगतो मायिकत्वम्। माया च तैश्चतुर्विधाऽभ्युपगम्यते—भगवतः सर्वसम्भवनसामर्थ्यम्, व्यामोहः, ऐन्द्रजालिकविद्या, कापट्यं चेति। परिस्थितावस्यां यदि नित्यसम्बन्धभूतः समवायस्तैरभ्युपेतः स्यात् तर्हि तत्र भगवतः सर्वसम्भवनसामर्थ्याभावेन भगवतो मायात्मिका शक्तिरेव खण्डिता स्यात्, यदधीना तेषां सर्वसमर्पणात्मिका सर्वस्वभूता भक्तिः। अतो भक्तानां तेषामपि समवायविरोधः। इदं सर्वेषां वेदान्तिनां शाङ्करप्रमुखानां समवायविद्वेषे रहस्यम्। किञ्च, प्रमुखशत्रुनिरासे भूयान् प्रयत्नो लोकसिद्धः। समवायनिरासे विहिते समवायाधीना अवयवावयविभाव-गुणगुणिभाव-सामान्यविशेषादयो बहवोऽनभिमताः स्वतो भवन्ति निरस्ताः। अतोऽपि हेतोस्तेषां समवाये भूयान् विद्वेष इत्यास्तामिदानीमेतावदेव।

———

# न्यायसांख्याभिमतपाकपरिणामविवेकः

श्रीआशुतोषन्यायाचार्यः, नवद्वीपस्थः ।

नामं नामं गुरोः पादं स्मारं स्मारं तु तद्वचः ।
ध्यायं ध्यायं च शास्त्रोक्तं निबन्धोऽयं विरच्यते ।।

तत्र पाकवादिनो नैयायिकादयः परिणामवादिनश्च सांख्यादय इति प्रसिद्धमेव । पाको नाम रूपादिपरावृत्तिफलकतेजःसंयोगः । केचित्तु तादृशतेजःसंयोगे वैजात्यं निवेशयन्ति जलादितेजःसंयोगे पाकत्ववारणाय, तन्न युक्तिसहम्, तस्य रूपादिपरावर्त्तकत्वाभावादेव तत्रातिव्याप्त्यसम्भवात् । वैजात्यमपि तत्र रूपादिपरावृत्तिजनकतयैव सिद्ध्येत् । एवं च तत्साधकरूपादिपरावृत्तिघटितलक्षणमेव साधीयः ।

स च पाकोऽवयवे परमाणवन्ते तथा अवयविनि च घटादौ भवतीति नैयायिकाः । तेषामयमाशयः–सच्छिद्राः किलावयविनस्तच्छिद्रद्वारेणान्तःप्रविष्टानि तेजांसि बहिःस्थानि च मिलित्वाऽन्तःपरमाणवादिषु घटादौ च स्वसंयोगेन पूर्वरूपं विनाश्य रूपान्तरं तथा पूर्वरसादिकं विनाश्य रसान्तरादिकं जनयन्ति । सोऽयं घटस्तदेवेदमाम्रमित्यादिप्रत्यभिज्ञाऽप्येवं घटते । घटादिद्व्यणुकपर्यन्तावयविनां नाशाकल्पनेन च एतत्कल्पे लाघवं कदाचिच्च पाकानन्तरं यत्र घटादीनामवयववैकल्यं दृश्यते तत्रावयविनां नाशोऽगत्या स्वीकार्यः । अन्यच्च परमाणुमात्रपाकवादिनां मते घटाद्यारम्भकाणां सर्वेषां संख्यादिद्व्यणुकपर्यन्तावयविगुणानां नाशस्तथोत्पादश्च कल्पनीयः, अस्मन्मते च न तथेति लाघवञ्चेति ।

अत्र रूपोत्पत्तौ भिन्नस्तेजस्संयोगो गन्धाद्युत्पत्तौ च भिन्नस्तेजस्संयोगः कारणमिति केचित् । वस्तुतस्तु गन्धाद्युत्पत्तौ एक एव तेजस्संयोगः कारणमिति ।

परमाणुपाकवादिनो वैशेषिकाश्चैवं कथयन्ति यद् घटादिष्वन्तस्तेजस्संयोगं विना अन्तः परमाणुषु पाको न सम्भवति, अतस्तत्र तेजोऽनुप्रवेश आवश्यकः, तथा च तेजोऽनुप्रवेशे सर्वेषामवयविनां नाशोऽभ्युपेयः । अत एवोक्तमुपस्कारे—"आमपाके वह्निज्वाला जालाभिहतानां द्रव्याणामवस्थानमिति महती प्रत्याशा" इति ।

भगवता प्रशस्तपादेन च इत्थमभिहितं पार्थिवपरमाणुरूपादीनां पाकजोत्पत्तिविधानम्—घटादेरामद्रव्यस्याग्निना सम्बद्धस्याग्न्यभिघातान्नोदनाद् वा तदारम्भकेषु अणुषु कर्माणि उत्पद्यन्ते, तेभ्यो विभागाविभागेभ्यः संयोग-विनाशाः संयोगविनाशेभ्यश्च कार्यद्रव्यं विनश्यति। तस्मिंश्च विनष्टे स्वतन्त्रेषु परमाणुषु अग्निसंयोगादौष्ण्यापेक्षात् श्यामादीनां विनाशः, पुनरन्यस्माद् अग्निसंयोगादौष्ण्यापेक्षात् पाकजा रूपादयो जायन्ते, तदनन्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेषु अणुषु कर्मोत्पत्तौ तेषां परस्पर-संयोगाद् द्व्यणुकादिप्रक्रमेण कार्यद्रव्यमुत्पद्यते, तत्र च कारणगुणप्रक्रमेण रूपा-द्युत्पत्तिः। न च कार्यद्रव्य एव रूपाद्युत्पत्तिर्विनाशो वा सम्भवतः, सर्वावयवेषु अन्तर्बहिश्च वर्त्तमानस्याग्निना व्याप्त्यभावात्। अनुप्रवेशादपि च व्याप्तिर्न सम्भवति, कार्यद्रव्यविनाशादिति। एतद्व्याख्यानावसरे नैयायिककुलचूडामणिना उदयनाचार्येणोक्तम्—'ईदृशो हि तेजसो लाघवाद् वेगातिशयः स्पर्शातिशयश्च, तज्जन्यं कर्म कार्यद्रव्यं पूर्वव्यूहात् प्रच्यावयति तदवयवांश्च व्यूहान्तरं प्रापयति" इति।

अनयोर्न्यायवैशेषिकमतयोर्वैशेषिकमतमेव अनुभवपथमवलम्बते। यत आम-पाकनिक्षिप्ते द्रव्ये द्रवत्वं न्यूनाधिकतया उत्पद्यत एव, तदुत्पादे च अवयवविश्लेषोऽपि अवश्यम्भवत्येव, तत्र च द्रवत्वानुत्पत्तौ पक्वानां घटादीनां कठिनतरत्वं नोपपद्येत। एवञ्च सर्वावयवविनाशोऽपि तत्र स्वीकार्य इति।

परिणामो नाम सत्येव धर्मिणि पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पादः। अत्र निवृत्त्युत्पादौ आविर्भावतिरोभावरूपौ, सांख्यमते सत्कार्याभ्युपगमेन कस्याप्युत्पत्ति-विनाशासम्भवात्। तथा हि पूर्वमसता कार्येण कारणस्य सम्बन्धाभावेन कार्य-कारणभावो न सम्भवति। अत एवोक्तं वाचस्पतिमिश्रैः सत्कार्यनिरूपणावसरे तत्त्वकौमुद्याम्—

असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥ इति।

ननु कार्यस्य सत्त्वे कारणव्यापारापेक्षा निरर्थिकेति चेत्? न, पटादिकार्यं पूर्वं सूत्ररूपेणासदपि प्रावरणादिकार्यकारणसमर्थातानवितानविशिष्टविलक्षणस्वरूपप्राकट्यार्थं कारणव्यापारमपेक्षत इति।

## न्यायसांख्याभिमतपाकपरिणामविवेकः

स च परिणामस्त्रिविधो धर्मलक्षणावस्थाभेदात्। तत्र धर्मपरिणामो धर्मिणः स्थितस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पादो यथा कनकस्य कटककेयूरादिपरिणामः। कनकस्य हि पिण्डाकारताधर्मनिवृत्तौ कटकादिरूपतोत्पत्तिर्भवति। लक्षणपरिणामश्च स्थितस्य धर्मस्यैकलक्षणतिरोभावेऽन्यलक्षणप्रादुर्भावो यथा कटकत्वधर्मस्य अनागतत्वतिरोभावे वर्त्तमानत्वलक्षणप्रादुर्भावः। अवस्थापरिणामश्च अवस्थितस्यैव लक्षणस्य एकामवस्थां विहाय अवस्थान्तरेण परिणामो यथा कनकस्य कटकतादशायां कटकतायाः स्फुटत्वमिति, कटकस्य च नूतनपुरातनत्वादिकमिति।

इदानीं पाकपरिणामयोर्विशेषो विविच्यते—पाकस्तु तत्रैव स्वीक्रियते यत्र स्थिते धर्मिणि पूर्वगुणनाशो गुणान्तराधानं च भवति, यथा स्थितस्यैव घटादेर्नित्यानां परमाणूनां वा पाकेन पूर्वगुणरूपादिनाशो रूपाद्यन्तरोत्पादश्च भवति।

परिणामस्तु सांख्यादिमते न तेजःसंयोगं नियमतोऽपेक्षते, विनापि तेजःसंयोगं सांख्यैः परिणामाभ्युपगमात्, प्रतिक्षणपरिणामस्वाभाव्यादेव परिणामस्वीकारात्, "प्रतिक्षणं हि परिणामिनो भावा ऋते चितिशक्तेः" इति पञ्चशिखाचार्यसूत्रानुसारेण तथा सिद्धान्ताभ्युपगमेन तेजःसंयोगस्य नियमानपेक्षणात्। कदाचित्तु विरूपपरिणामे तेजःसंयोगस्य सहकारित्वमभ्युपगम्यते।

ननु किं सर्वत्र धर्मिणि सत्येव धर्मान्तरमुत्पद्यते, उतस्विद् धर्मिणि तिरोहितेऽपि। तत्र यथा कनकमृदादौ धर्मिणि सत्येव कटककलशादय उत्पद्यन्ते, न तथा दुग्धे दुग्धरूपेण सत्येव तस्य दधिरूपेण परिणामो भवति। अतस्तयोर्विशेषो वाच्यः। स च कीदृश इति चेत्? इत्थम्—परिणामो हि द्विविधः—सरूपपरिणामो विरूपपरिणामश्च। पूर्वरूपे सत्येव यः परिणामः समानाकारः स सरूपपरिणामः, पूर्वरूपं विहाय योऽन्याकारेण परिणामः स विरूपपरिणाम इति विशेष इति।

नन्वेवं च यद्यपि सरूपपरिणामस्थले सर्वत्र पाको न भवति, यथा मृदादेर्घटादिरूपतायाम्, कार्यान्तरोत्पत्तिस्तु भवति। कटकाद्युत्पत्तिस्थले च द्रवीभावार्थं पाकोऽपेक्षितोऽपि न कटकादौ कारणम्। उभयत्रैव बहूनामवयवात्मकावयविनां नाशस्तथानुत्पादश्च भवति। एवं सर्वत्र पाकस्थले तादृशावयविनां नाशस्तथा उत्पादश्च अपेक्षितः, तथापि स्थिराणां पार्थिववस्तूनां तथा जलादीनां च परिणामानभ्युपगमेना-

पाततो लाघवं न्यायवैशेषिकमते दृश्यते। एवं दुग्धादेर्दध्यादिपरिणामस्थले न केवलं दुग्धस्यैव दध्यादिभावेन परिणामोऽपि तु तदवयवतदुपादानतन्मात्राहङ्कारमहत्तत्त्व-सत्त्वरजस्तमोगुणात्मकप्रकृतिपर्यन्तानां परिणामोऽभ्युपेय इति महद् गौरवं च सांख्यादिमते दृश्यत इति चेत्? न, सांख्यमते सर्वकार्यकारणवस्त्वात्मिका एकैव त्रिगुणरूपा प्रकृतिः, सा च स्वभावेन प्रतिक्षणपरिणामिनी स्वस्या एककार्यसहयोगे न कार्यान्तररूपेण परिणमत इति न एकादशक्षणादिपञ्चक्षणान्तक्षणप्रक्रियादि-कल्पनम्, न वानन्तविभिन्नकार्यादिकल्पनमिति महल्लाघवम्। न च सांख्यमतेऽपि कार्यकारणभावोऽस्त्येव, स च भेदं विना न सम्भवतीति वाच्यम्? कार्यकारणयोः कथञ्चिद् भेदस्य व्यवहारोपयोगितया स्वीकारेऽप्यात्यन्तिकभेदानुपगमात्। सांख्य-मते च प्रकृतेर्गुणवैषम्यमात्रेण कार्यस्य तदुपादानपतितकारणप्रवाहस्य च गुणवैषम्य-मिति न तत्र गुणाद्युत्पादनाशकल्पनेति च लाघवम्, प्रकृतेरेकस्या एव कार्यकारण-रूपतया सर्वत्र विद्यमानत्वात्।

अन्यच्च न्यायवैशेषिकमते परमाणौ द्रवत्वं स्वीक्रियते, द्रवत्वं च अवयव-शिथिलसंयोगसहभावि। एवञ्च परमाणोर्द्रवत्वे तत्रावयवाः स्वीकार्याः। परमाणोश्च सावयवत्वे नित्यत्वव्याघात इति परमाणोरपि सूक्ष्मं वस्तु आस्थेयम्। यत् किल द्रवत्वरहितं यस्य घनीभावे द्रवत्वम्। एवञ्च न्यायवैशेषिकाभिमतपाकवादस्य स्थूलानुभवपथाधिरूढत्वेऽपि सांख्याभिमतप्रकृतिपरिणामवाद एव सूक्ष्मानुभवपथ-मारोहतीति शम्॥

---

# अपूर्वविचारः

श्रीरामचन्द्रशास्त्री खनङ्गः, वा० सं० वि० वि० वाराणसी।

तत्र तावद् विहितक्रियाजन्यं यावत्फलोत्पत्त्यवस्थायि अपूर्वं नाम किञ्चिद्वस्तु स्वीकुर्वन्ति मीमांसका गौतमीयाः काणादाश्च। तदेवेदानीं चिन्त्यते किं तदभ्युपगमो युक्तियुक्तो न वेति। तत्र—

फलाय विहितं कर्म क्षणिकं चिरभाविने।
तत्सिद्धिर्नान्यथेत्येवमपूर्वं प्रतिगम्यते॥

तस्मादस्त्यपूर्वमिति। अत्रापरे प्रत्यवतिष्ठन्ते। प्रमाणाभावान्नापूर्वसिद्धिः। तथा हि—न तावदत्र प्रत्यक्षादिकं प्रवर्तते, रूपाद्यनात्मकत्वेन चक्षुरादिभिरसंबन्धात्। नाप्यनुमानम्, केनचिल्लिङ्गेन सहादृष्टसङ्गतित्वात्। अपि च स्वतन्त्रस्य वापूर्वस्यानुमेयत्वम्? अस्त्यपूर्वमिति, अन्यविशेषणस्य वा? न तावत् स्वतन्त्रस्य, सत्तायां हि साध्यमानायां भावधर्मस्य हेतुत्वं स्यात्? अभावधर्मस्य वा? उभयधर्मस्य वा? तत्र भावधर्मस्यासिद्धत्वम्, अभावधर्मस्य विरुद्धत्वम्, उभयधर्मस्यानैकान्तिकत्वम्। एतदभिप्रेत्यैव प्रत्यक्षसूत्रे वार्त्तिककारा आहुः—

सत्ता च नानुमानेन कस्यचित् प्रतिपद्यते।
धर्मेणान्यद्विशेष्यं चेत् पक्षोऽसिद्धविशेषणः॥
तस्माददृष्टपूर्वत्वात् केनचिद्वस्तुना सह।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत्॥ इति।

तस्माद् यागस्वर्गसाध्यसाधनभाव इवाऽपूर्वेऽपि न प्रत्यक्षानुमानयोः प्रवृत्तिः। नाऽपि शब्दः, तदनुपलम्भात्। यदाह वार्त्तिककारः—

पदवाक्ये न चैतस्य वाचके शृणुमः क्वचित्।
शब्दगम्यत्वमप्यस्य तेन नैवोपपद्यते॥

तत्र पदं तावन्न किञ्चित्साक्षादेतस्य वाचकमस्ति। यत्त्वपूर्वमिति पदं तत्—

प्रमाणपञ्चकाज्ञानादपूर्वं षष्ठगोचरः।
तस्मादन्वर्थनामैतन्न वस्तुत्वेन गम्यते॥

इति रीत्या अन्वर्थत्वात् सुतरामस्तित्वं बाधते। वाक्यस्य त्ववाचकत्वादेवाप्रामाण्यम्। येऽपि शब्दान्तरादयः श्रुतिलिङ्गादयश्च शब्दप्रकारास्तेऽपि च स्वभावसिद्धे वस्तुनि भेदे विनियोगे वा कारणं न सद्भावे कस्यचिदित्यपूर्वं प्रत्यप्रमाणम्। विधिप्रतिषेधविषयत्वाच्च समस्तस्य वेदस्य न क्वचिद्वस्तुस्वरूपप्रतिपादनार्थत्वं भवतीति नागमगम्यमपूर्वम्। उपमानगम्यमपि काममनुपलभ्यमानशशविषाणादिसारूप्यादसद्रूपमेवोपमेयं भवेत्। न च श्रुतयागस्वर्गसाध्यसाधनभावान्यथानुपपत्तिरेव तत्साधिका। नह्यन्यथा क्षणिकयागस्य कालान्तरभाविस्वर्गसाधनत्वमुपपद्यते। अतः प्रमाणान्तराभावेऽपि श्रुतार्थापत्तिरेवाऽपूर्वसद्भावे प्रमाणमिति वाच्यम्, साध्यसाधनभावस्यान्यथानुपपत्तावप्यपूर्वस्य तदुपपादकत्वाभावात् कल्पनानुपपत्तेः। नह्यपूर्वे कल्पिते तेनैव स्वर्गजननादपूर्वोत्पत्ति प्रत्यन्यथासिद्धस्य यागस्य स्वर्गजनकता सम्भवति। न चापूर्वस्य शक्तिरूपत्वादवान्तरव्यापारत्वाद्वा ज्वालादिभिरिव न तेन यागस्यान्यथासिद्धिः, शक्तिव्यापारयोः शक्तिमद्व्यापारवन्निष्ठत्वनियमेन शक्तिमति व्यापारवति च यागे नष्टे शक्तिव्यापारयोरवस्थानानुपपत्तेः। यदि च फलबलकल्प्यस्यापूर्वस्यात्मनिष्ठत्वं कल्प्यते तदा नोक्तानुपपत्तिः। यथोक्तम्—

यदि स्वसमवेतैव शक्तिरिष्येत कर्मणाम्।
तद्विनाशे ततो न स्यात्कर्तृस्था तु न नश्यति॥
शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते।
तद्गतैवाभ्युपेतव्या स्वाश्रयान्याश्रयाऽपि वा॥ इति।

तदाऽपि—

अर्थापत्त्याऽपि नैवैतदस्तीत्येवं प्रतीयते।
अन्यथाप्युपपन्नत्वात् फलयागादिसंगतेः॥

यदि यागस्य विनाशित्वादन्येन तत्संबन्धिना फलं साध्यमानं यागेन साधितं भवति तदा यागध्वंस एव फलजनकत्वं कल्प्यताम्। ध्वंसे यागजन्यत्वं स्थायित्वं च क्लृप्तमेव केवलं फलजनकत्वं कल्पनीयमिति लाघवम्। अपूर्वकल्पनायां तत्सद्भावस्तस्य स्थायित्वं यागजन्यत्वं स्वर्गजनकत्वमिति बहुतरं कल्पनीयमापतति। किञ्च, विनाशिनि हि कर्मणि चोदिते विनाशस्योपस्थितत्वात्तस्यैव व्यापारत्वं युक्तम्। यथाह वार्त्तिककारः—

यद्वा कर्मविनाशोऽयं फलं नः साधयिष्यति ।
भङ्ग्यियागविधानाद्धि तदयत्नेन कल्प्यते ।। इति ।

एतेन तृप्त एवैनमिद्रः प्रजया पशुभिश्च तर्पयतीत्यर्थवादोपात्तदेवताप्रसादस्यैव रात्रिसत्रन्यायेन द्वारत्वोपपत्तेर्नानुपस्थितापूर्वकल्पनं युक्तमिति वेदान्तिमतमप्यपास्तम् । उपस्थितध्वंसद्वारकत्वेनैव नैराकाङ्क्ष्ये रात्रिसत्रन्यायानवतारात् । देवताप्रसादस्याऽपि इच्छाविशेषरूपस्य क्षणिकत्वेन यागतुल्ययोगक्षेमत्वाच्च । न च ध्वंसस्य कारणत्वे कारणीभूताभावप्रतियोगित्वेन यागस्य प्रतिबन्धकत्वापत्तिरिति वाच्यम्, यस्मिन्नभावे संसर्गाभावत्वेन कारणता तत्प्रतियोगित्वस्यैव प्रतिबन्धकत्वपदार्थत्वात् । प्रकृते तु ध्वंसत्वेन कारणता न संसर्गाभावत्वेनेत्यदोषः । यत्तु ध्वंसस्याभावरूपत्वादभावस्य केवलस्य कुत्रापि न कारणत्वं दृष्टम्, अत एव वार्त्तिककारा आहुः—"न च लोकेऽपि क्वचिदभावः कारणत्वेन दृष्टः, यदि तु क्वचिदुदाह्रियेत, शक्यं तत्र भावान्तरं दर्शयितु न त्वत्रापूर्वादृते तादृक् किञ्चिदस्तीति" । यथा भट्टसोमेश्वरोऽपि—"अत एवाचार्यैः—

स्वकाले यदकुर्वंस्तत्करोत्यन्यदचेतनः ।
प्रत्यवायोऽपि तेनैव नाभावेन स जन्यते ।।

इति विहितमकुर्वन्यदन्यत्करोतीति वदद्भिर्विहिताकरणनिमित्तस्यान्यकरणस्य प्रत्यवायनिमित्तत्वाभिधानादवज्ञायामेव वा करणस्य निमित्तत्वोपपत्तेर्विहितावज्ञानमेव प्रत्यवायहेतुत्वेनोक्तम् । 'नाभावेनैव जन्यते' इत्येव शब्दोत्कर्षेण केवलस्य हेतुत्वं निरस्तम् । एवं च विहितस्याननुष्ठानान्नरः पतनमृच्छतीति स्मृतिरनुगृहीता भवति । निमिषितादेस्तु हेतुत्वे विहिताकरणस्य किञ्चित् करणत्वाभावात् स्मृतिबाधापत्तिः । एवं वाव स देवतामपरुणद्धि योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोतीति वाऽपरोद्धशब्देन अवज्ञाभिधानात् सैव प्रत्यवायहेतुर्वेदादवसीयते । निमिषितादेस्तु हेतुत्वं निष्प्रमाणकमेव । तस्मादवज्ञारूपाशयविशेषरूपस्य भावान्तरस्य तत्र संभवान्न शुद्धस्य क्वचिद् हेतुता दृष्टेति ग्रन्थार्थः" इति । तदतिशयमात्रम्, शुद्धस्याऽभावस्याऽपि कारणत्वाङ्गीकारे बाधकाभावात् । अत एवानुपलब्धेरभावरूपाया एव घटाद्यभावग्राहकत्वमङ्गीकृतम् ।

ननु ध्वंसस्यैव व्यापारत्वे तस्याविनाशित्वेन कीर्तनप्रायश्चित्तादिना नाशानुपपत्तेः, "धर्मः क्षरति कीर्तनात्", "प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि"

इत्यादिशास्त्रविरोधः। नह्यनयोः शुभाशुभकर्मनाशकत्वम्, तयोराशुतरविनाशित्वेन नाशकारणानपेक्षणात्। अतः कीर्तनप्रायश्चित्तादिनाश्यं यागादिजन्यमपूर्वमावश्यकमिति चेत् ? न, क्लृप्तध्वंसस्यैव व्यापारत्वेऽवधारिते कीर्तनादीनां फलोत्पत्तिप्रतिबन्धकत्वमात्रकल्पनात्। सर्वथा नास्त्यपूर्वमिति प्राप्ते ब्रूमः—फलं तावत्प्रधानकालान्तरभावीति निर्विवादम्। नहि निरतिशयसुखदुःखरूपयोः स्वर्गनरकयोरस्मिञ्जन्मनि उपभोगः सम्भवति। ऐहिकस्याऽपि वृष्टिपश्वादेः साङ्गप्रधानजन्यस्य न प्रधानमात्रानुष्ठानादुत्पत्तिः। अतः कालान्तरभाविफलोत्पत्तिर्न क्षणिकात् कर्मणो व्यापारमन्तरेण संभवतीति मध्ये कश्चन व्यापारः कल्पनीयो यः श्रुताविरोधी भवेत्। "धर्मः क्षरति कीर्तनात्", "प्रायश्चित्तेन नश्यन्ति पापानि सुबहून्यपि" इति कीर्तनप्रायश्चित्तादिनाश्यमपूर्वमेव व्यापारत्वेन कल्पयितुं युक्तम्। न ध्वंसः, तस्याऽविनाशित्वात्। नाशशब्दस्य फलोत्पत्तिप्रतिबन्ध इत्यर्थकरणे लक्षणैव दोषः। अतो ध्वंसं परित्यज्यापूर्वकल्पनायां गौरवेऽपि तस्य फलमुखत्वाददोषत्वम्। यथा एतया निषादस्थपतिं याजयेदित्यत्र निषादानां स्थपतिरिति षष्ठीतत्पुरुषाङ्गीकारेऽधीतविद्येन त्रैवर्णिकेनैव क्रत्वनुष्ठानोपपत्तौ न विधेर्विद्याक्षेपकत्वम्, कर्मधारयाङ्गीकारे तु भवति विधेर्विद्याक्षेपगौरवम्, तथाऽपि श्रुतिलक्षणाविषये श्रुतेर्न्याय्यत्वात् कर्मधारयं स्वीकृत्य विद्याक्षेपगौरवस्य फलमुखत्वाददोषत्वं तद्वदत्रापि श्रौतनश्यतिपदानुरोधादपूर्वमेव व्यापारत्वेन कल्पनीयम्। कल्पनागौरवस्य फलमुखत्वाददोषत्वम्। किञ्च, ध्वंसस्य प्रधानव्यापारत्वे तुल्यन्यायत्वादङ्गेष्वपि स एव व्यापारोऽङ्गीकर्तव्यः। ततश्च तस्याविनाशित्वाद् विकृतिप्रयोगवेलायामपि सत्त्वात् पशुपुरोडाशवत् प्रासङ्गिकत्वोपपत्तेर्न पृथगङ्गानि कर्त्तव्यानि स्युः। तथा च प्रयाजे प्रयाजे कृष्णलानि जुहोतीति प्रयाजकरणदर्शनमनुपपन्नं स्यात्।

अस्मन्मते त्वङ्गापूर्वाणां प्रधानापूर्वोत्पत्त्यनन्तरं नाशाद्विकृत्यपूर्वसिध्यर्थं पुनः प्रयाजकरणोपपत्तिरतः सर्वथा सिद्धमपूर्वम्। तत्राऽयं विवेकः—सन्निपातिनां श्रुत्याद्यवगतव्रीह्याद्यङ्गभावानां प्रोक्षणादीनां तण्डुलादिपरम्परया प्रधानगामिनां प्रधानगतोत्पत्त्यपूर्वजननयोग्यतोत्पादने व्यापारः। तावत्पर्यन्तमेव सन्निपातिजन्यापूर्वस्यावस्थानम्। आरादुपकारकाणां तूत्पत्त्यपूर्वगतपरमापूर्वजननयोग्यताजनने व्यापारः। प्रयोगबहिर्भूतानान्तु परमापूर्वोपस्थिताविति। अधिकमाकरे स्पष्टमिति शम्॥

# अदृष्टवादः

श्रीकिशोरनाथझा, मिथिलानुसन्धानसंस्थानम्, दरभङ्गा।

उदयनाचार्यमहोदयाः स्वकीयकुसुमाञ्जलौ प्रथमे स्तबके—"तदिह संक्षेपतः पञ्चतयी विप्रतिपत्तिः" इत्याद्युक्त्वा प्रत्येकविप्रतिपत्तिमधिकृत्य प्रत्येकं स्तबकमुपनिबध्नन्ति स्म। तत्र प्रथमायाः विप्रतिपत्तेरियमाकृतिः—"अलौकिकस्य परलोकसाधनस्याभावात्" इति। अनयैव प्रसाध्यते तावददृष्टम्। अत एवास्यां विप्रतिपत्तौ विधिकोटिर्नैयायिकानां निषेधकोटिश्च चार्वाकप्रभृतीनाम्।

इह खलु जगति कार्यमात्रं कारणेन जन्यते। अन्यथा सर्वदा सर्वेषां कार्याणामुपलब्धिरनुपलब्धिर्वापद्येत, नियामकस्य कस्यचिद् विरहात्। तस्मात् किञ्चित्कालासम्बन्धित्वे सति किञ्चित्कालसम्बन्धित्वरूपकादाचित्कत्वं कार्यमात्रेषु प्रेक्ष्य कार्यं सापेक्षम् (कारणजन्यम्), कादाचित्कत्वात्, यन्नैवं तन्नैवं यथा नभ इति रूपेण सापेक्षत्वं तत्रानुमाय यदपेक्ष्यते तत्र कारणत्वं निश्चीयते।

एवञ्च संक्षेपतः सिद्धे कार्यकारणभावे, इह संसारे सुखिनं दुःखिनञ्च जनमवलोक्य प्रतीयते यदत्रापि केनापि कारणेनावश्यं भाव्यम्। तयोश्च सुखदुःखयोर्दृष्टं कमपि हेतुं नैवावलोकमानो जनः सुखदुःखकार्यकारणत्वेन जीवात्मनिष्ठं धर्माधर्मात्मकमदृष्टं परिकल्पयति।

तथा हि—यस्मिन्नात्मनि समवायेन धर्मः सन्तिष्ठते तस्मिन् समवायेन सुखम् (अनुकूलवेदनीयम्) उत्पद्यते। यत्र च समवायेनाधर्मस्तिष्ठति तत्र समवायेन दुःखम् (प्रतिकूलवेदनीयम्) उत्पद्यते। नहि केवलेन दृष्टेन हेतुना दुःखसुखादिवैचित्र्योपपत्तिः संभवति। एकस्मिन्नेव परिवारे दृष्टहेतूनां समेषां समानत्वेऽपि प्राक्तनजन्मकृतकर्मजन्यादृष्टवशेन तत्परिवारस्थजनेषु कश्चित्सुखी कश्चित् पुनर्दुःखी लोचनगोचरो भवति। तत्र सुखदुःखादिभोगवैचित्र्यं नैवादृष्टेन विना केनाऽप्युपायेन साधयितुं बृहस्पतिरपि क्षमः। यद्युच्यते तावद् यथैकेन दीपेन वर्तिविकारकारितया तमसोऽपहारकारितया च साकं रूपान्तरव्यवहारकारित्वं संपाद्यते, तथैवा-

विचित्रादप्येकस्माद् ब्रह्मणो विचित्रं कार्यजातं स्यादिति नैव सुखादिकार्यकारणतया-ऽदृष्टस्य सिद्धिः, तेषां (सुखादीनाम्) ब्रह्मणैव सम्पादितत्वादिति। तदोत्तर-मिदमत्रास्ति नैयायिकानाम्—भवतां ब्रह्मणः सर्वदा वर्तमानतया एककालावच्छेदेनैव समेषां कार्याणामुत्पत्तिरापद्येत। न च तथा भवति, किन्तु क्रमिकमेव कार्यं जायते। तस्मान्नैव भवद्वचस्सु केषामपि प्रेक्षावतां श्रद्धा भवितुमर्हति।

नापि सांख्याभिमतैकजातीयादेव महत्तत्त्वप्रभृतेर्विचित्रं कार्यजातं भवितु-मर्हति। एवं चानेनापि विनिगमेन नैवादृष्टखण्डनं संभवति। यतो ह्यन्यूनानतिरिक्तो वह्निहेतुर्यद्यवह्नेरपि हेतुः स्यात्तदा दहनोऽप्यदहनं संपादयेत्। अथवा विनिगमना-विरहाद् अदहनोऽपि दहनं संपादयेत्। अथवा दहनत्वादहनत्वयोर्विरोधे दहनत्वा-वच्छिन्नजनकस्यादहनत्वावच्छिन्नजनकत्वमिति विरुद्धधर्मावच्छिन्नकार्याजनकत्व-नियमेनोभयमपि न स्यात्। तस्मात् कारणवैचित्र्यप्रयुक्तमेव कार्ये वैचित्र्यमभ्युप-गन्तव्यम्। एवञ्च निरुक्तरीत्यादृष्टं सिद्ध्यति।

न चाद्वैतवेदान्तिनोऽदृष्टं नैव मन्यमाना एकस्मादपि ब्रह्मणः शक्तिभेदसहकारेण विचित्रं कार्यजातमुत्पत्स्यत इति वदन्तीति वाच्यम्, तदा ते प्रष्टव्याः—किं सा शक्तिः शक्तिमतोर्भिन्नाऽभिन्ना वा? नाद्यः कल्पः, अद्वैतवादिनो द्वैतापत्तेः। प्रतिज्ञातैक-कारणत्वव्याघातश्च। नान्त्यः कल्पः, तथा सति धर्मिणोऽभिन्नतया तदभिन्नस्य शक्ति-रूपधर्मस्य भेदानुपपत्त्या सर्वदा विद्यमानतया कार्येषु क्रमिकत्वव्याघातात्। न च धर्मिणो भिन्नाऽभिन्ना वा शक्तिः, उभयोः परस्परं विरुद्धतया वैयधिकरण्येनैकत्र समावेशविरहात्।

किञ्च, प्रेक्षावतां परलोकार्थितया यागादौ प्रवृत्तिदर्शनेनाप्यनुमीयतेऽदृष्टम्। तथा हि–यागादौ प्रेक्षावत्प्रवृत्तिः सफला, प्रवृत्तित्वात्, अस्मदादिप्रवृत्तिवत्। यागादेः कर्मतयाऽत एवाशुविनाशितया च न स्यात् सफलत्वमृते तज्जन्यफलजनकादृष्टकल्पनात्। उक्तमप्यस्ति—"प्रयोजनमनादृत्य मन्दोऽपि न प्रवर्तते" इति। अत्र तु पुनः प्रेक्षावतां प्रवृत्तिर्द् कुपथमवतरति।

न च यथा शास्त्रार्थादेर्विजयपुरस्कारादि फलं तथा यागस्यापि किमपि दृष्टं फलं स्यादित्यपि वक्तुमशक्यम्, तदा जनः स्वोपकारपरायणानेवाहूय दानं दद्यात्, न तु ऋत्विग्भ्यः। यागादौ न तथा दृश्यते लोकव्यवहृतिः, तस्मात् स्वर्गादिकं तत्फलतया

सिद्धयति। तस्य च प्राप्तिर्विना द्वारेण न संभवति, अतस्तत्र द्वारतयाऽदृष्टं सिद्धयति।

न च यथा वेदविहितसन्ध्यावन्दनादिकमफलमपि नित्यकर्म जना अनुतिष्ठन्ति तथैव लोके विहितं यागादिकमपि निष्फलमेवानुष्ठीयत इति वाच्यम्, मीमांसकप्रवर-प्रभाकरमते सन्ध्यावन्दनादेरफलत्वेऽपि नैयायिकैस्तत्साफल्यस्य सयुक्तिकमभ्युपगमात्। अत एव स्मृतिर्वदति—दिवाकृतस्य पापस्य सायं सन्ध्यावन्दनतो रात्रि-विहितपापस्य प्रातःसन्ध्यावन्दनतश्च नाशो भवतीति।

तथा च चिरविनष्टं यागादिकं कर्म स्वजन्यादृष्टरूपव्यापारवत्त्वसम्बन्धेन फलजनकं साक्षात्सम्बन्धेन फलोत्पत्तिप्राक्क्षणावृत्तित्वे सति फलजनकत्वात्, स्मृति-जनकसंस्कारद्वारकानुभववदित्यनुमानेनादृष्टं निर्विवादं सिद्धमिति।

एतच्चादृष्टं जीवात्मनिष्ठमेव न तु भोग्यनिष्ठम्। अन्यथा प्रत्यात्मनियत-भोगस्यानुपपत्तिः स्यात्। तथा हि—आत्मनः सर्वमूर्तसंयोगानुयोगितया शरीरादीनां सर्वात्मभिः सह संयोगः स्यादेव। अथ चाधुनाऽदृष्टस्य भोग्यनिष्ठत्वे भोग्यं प्रति स्वाश्रयसंयुक्तत्वसम्बन्धेनादृष्टस्य हेतुत्वेन पुरुषान्तरकर्मजन्यादृष्टेन पुरुषान्तरस्योप-भोगः स्यात्। न चैष इष्टः। तस्माज्जीवात्मनिष्ठमेवादृष्टमभ्युगन्तव्यम्।

एतस्य चादृष्टस्य सिद्धावनुमानं तु दर्शितम्, न्यायकोशटिप्पण्यामागम-प्रमाणमत्याकलितमस्ति—

पौरुषं दैवसंपत्त्या काले फलति पार्थिव।
त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलावहम्॥ इति।

मीमांसकास्तत्त्वदपूर्वमाश्रित्यैवं विचारयन्ति—स्वर्गकामोऽश्वमेधेन यजेदिति हि श्रुतिः। अत्राश्वमेधयागस्य क्रियात्मकतया विनाशित्वम्। स्वर्गस्य च तत्फलस्य मृत्योरनन्तरं भावितया मध्ये बहुकालव्यवधानेन कार्यकारणभावः कथमुभयोः संपद्येत। श्रुतिवाक्येन प्रसाधितोऽपि हेतुहेतुमद्भाव उपपत्तिभिरापाततो न सिद्धयति। तस्माद-त्रैकस्य व्यापारस्यापूर्वात्मकस्य परिकल्पना क्रियते। व्यापारत्वञ्च तज्जन्यत्वे सति तज्जन्यजनकत्वमिति घटतेऽत्र। अपूर्वस्य यागजत्वमस्त्येव, यागजस्वर्गादिजनकत्व-मप्यस्ति। तथा चोपपन्नं जन्यजनकत्वमुभयोः। न चोपकारकेणोपकारिणो-रन्यथासिद्धिरिति नीत्या यागस्य स्वर्गसाधनत्वं नैव व्याहन्यतेऽपूर्वेण। यागे

कारणत्वसंपादनार्थमेवापूर्वं कल्प्यते। अन्यथाऽपूर्वस्य वैयर्थ्यापत्तिः। तस्मात् कारणकोटावङ्गित्वं यागादेरङ्गत्वञ्चापूर्वस्येत्युपपद्यते।

एवञ्च संस्कारविशेषोऽपूर्वम्। तच्च यथाऽऽत्मनिष्ठं तथा भोग्यनिष्ठमपि। कुत्रचिद् यागोपकरणे व्रीह्यादावपि तिष्ठति, "व्रीहीन् प्रोक्षति" इति वाक्येन प्रोक्षादिना व्रीह्यादावेव संस्काराधानस्य दृष्टचरत्वात्। अत एवाप्रोक्षितव्रीह्यादिना यागकरणे फलं न लभते यजमानः। अत एव "यदुद्देशेन यत्क्रियते यत्तत्र किञ्चित्कम्" इति नियमः। "व्रीहीन् प्रोक्षति" इति वाक्येन व्रीहौ प्रोक्षणं विधीयते। तस्मात्तत्रैव संस्काराधानं भवति।

भाट्टमते तु भोग्यवस्तु स्रक्चन्दनादिमात्रनिष्ठाधिकरणतानिरूपिताधेयतावदपूर्वमतिशयपदेनापि व्यवह्रियते। तथा च श्लोकवार्त्तिकम्—

तस्मात्फले प्रवृत्तस्य यागादेः शक्तिमात्रकम्।
उत्पत्तौ वाऽपि पश्वादेरपूर्वन्न ततः पृथक्॥

अधिकरणमालायां तु प्रतिपाद्यते तावदेवमपूर्वम्—चतुर्विधमेतद् भवति—फलापूर्वम्, समुदायापूर्वम्, उत्पत्त्यपूर्वम्, अङ्गापूर्वञ्च। येन स्वर्ग आरभ्यते तत्फलापूर्वम् (१)। अमावास्यायां त्रयाणां यागानामेकः समुदायः, पौर्णमास्यामपरः, तयोर्भिन्नकालवर्तिनोः संहत्य फलापूर्वारम्भायोगात्तदारम्भाय समुदायद्वयजन्यमपूर्वद्वयं कल्प्यम् (२)। तयोरेकैकस्यारम्भायैकैकसमुदायवर्तिनां त्रयाणां यागानां भिन्नक्षणवर्तित्वेन संधानोत्पत्त्यभावाद् यागत्रयजन्यानि त्रीण्युत्पत्त्यपूर्वाणि कल्पनीयानि (३)। तेषाञ्चाङ्गोपकारमन्तरेणानिष्पत्तेरङ्गानाञ्चानेकक्षणवर्तिनां संघातासंभवादङ्गापूर्वाणि (४) कल्पनीयानि। परमापूर्वमादाय तु पञ्चधाऽस्य विभागः। परमापूर्वं साक्षात् स्वर्गद्वारमङ्गापूर्वादिकन्तु तत्राप्युपकारकमित्यनयोर्विशेषः।

अत्रेदं विभावनीयम्—आपाततो यद्यप्यदृष्टापूर्वयोर्नैव लक्ष्यते भेदः। अत एव बहुत्र पर्यायत्वमुभयोरभ्युपगतम्। यथाऽपूर्वमधिकृत्य शब्दकल्पद्रुमे—"कर्मजन्यमदृष्टं तत्पर्यायः", तथाप्यस्ति भेदो योऽत्र निर्दिश्यते। नैयायिका अपूर्वमदृष्टपदेन व्यवहरन्ति, परमपूर्वाद् व्यापकमदृष्टमिति। अदृष्टं कार्यमात्रं प्रति निमित्तं कारणं भवति, न त्वपूर्वम्। अत एव दृष्टसकलसामग्रीसत्त्वेऽपि यदि कार्याभावस्तदाऽदृष्टवैगुण्यं

कल्प्यते। यागजन्यता चोभयत्र साम्यं स्थापयति। परमदृष्टं वासनयाऽपि जन्यते, नापूर्वम्, तस्य यागमात्रनिष्ठजनकतानिरूपितजन्यतावत्त्वात्।

अदृष्टं प्रायश्चित्तादिना तत्त्वज्ञानेनाऽपि च नाश्यत्वमेति, न चापूर्वम्। एतत्तु भोगेनैव केवलेन नश्यति। भोगनाश्यं पुनरदृष्टमपि। अदृष्टं जीवात्मनिष्ठमेव, अपूर्वन्तु यागोपकरणनिष्ठं क्वचिद् भोग्यादिनिष्ठमपि। अधर्मात्मकेनादृष्टेन, कस्यचिद्वध-कामनया विहितयागजन्यापूर्वेण च पापं जन्यत इत्युभयोः पुण्यपापजनने साम्यम्। पुण्यजनकत्वञ्च प्रसाधितपूर्वम्। सिद्धिप्रकारश्चोभयोः साम्यमावहति। जातिश्चा-पूर्वत्वम् अदृष्टत्वं वा न भवति। अपूर्वस्यात्मनिष्ठतया व्रीहिनिष्ठतया च परस्परं वैधर्म्यशालिनोऽपूर्वत्वमनुगतधर्मः कथं भवेत्? सुखदुःखसमवायिकारणतावच्छेदकतया धर्मत्वाधर्मत्वयोः सिद्धावपि किं कारणतावच्छेदकतयाऽदृष्टत्वस्य सिद्धिः स्यात्? किञ्च तस्य जातित्वे गुणानां चतुर्विंशतिसंख्या व्याहन्येतेति शुभम्॥

——

# कणादो नास्तिको न वा

श्रीअनन्तलालठक्कुरः, मिथिलानुसन्धानसंस्थानम्, दरभंगा।

दार्शनिकप्रस्थानेषु कानिचनास्तिकानि कानिचन पुनर्नास्तिकानि। तत्रास्तिक्य-नास्तिक्ययोर्बीजं तावदनन्तरं परीक्षणीयम्। साम्प्रतं तु लोकायतिकानां बौद्धानां जैनानां च दर्शनानि नास्तिकान्युच्यन्ते, पूर्वोत्तरमीमांसासांख्यपातञ्जलन्यायवैशेषिक-प्रस्थानानि पुनरास्तिकानीति। एतदनुसारं तावद् वैशेषिकदर्शनमास्तिकमेव। समान-तन्त्रत्वमेतस्य न्यायदर्शनेनेति सर्ववादिविदितम्। तथापि वैशेषिकाणां कृते नास्तिक्य-प्रवादाः प्रत्ना नूत्नाश्च श्रूयन्ते। तथा हि बौद्धा वैशेषिका जैनाश्च सन्मतिविप्लावका इत्यादित्यपुराणवचनम्[१]। कणादस्तामसः, तस्य शास्त्रं च व्यामोहकमिति पद्मपुराण-वचनम्[२]। कणादोक्तौ श्रुतिविरुद्धोऽशस्त्याज्य इति पराशरोपपुराणम्[३]। शङ्कर-भगवत्पादेन तु वैशेषिकराद्धान्तो (१) दुर्युक्तियोगात्, (२) वेदविरोधात्, (३) शिष्टापरि-ग्रहाच्च नापेक्षितव्यः...। सोऽर्धवैनाशिक इति शारीरकमीमांसाभाष्ये प्रोक्तम्[४]। वाचस्पतिना च वैशेषिकाः खल्वर्धवैनाशिकाः। ते हि परमाणवाकाशदिक्कालात्म-मनसां च सामान्यविशेषसमवायानां च गुणानां च केषाञ्चिन्नित्यत्वमभ्युपेत्य शेषाणां निरन्वयविनाशमुपयन्ति। तेन तेऽर्धवैनाशिका इति भामत्यां तद्व्याख्यानं विहितम्[५]।

---

१. बौद्धा वैशेषिका जैना भविष्यन्ति कलौ युगे।

२. कणादो गौतमः शक्तिरुपमन्युश्च जैमिनिः।
ऋषयस्तामसा एते तेषां शास्त्रं विमोहनम्॥

३. अक्षपादप्रणीते च काणादे सांख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धोऽशः श्रुत्यैकशरणैर्नृभिः॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन।

४. शारीरकभाष्यम्, २ २।१८

५. भामती, २।२।१८

आधुनिकेनापि केनचिद् ब्रह्मवित्प्रकाण्डेन वेदप्रामाण्यं तु नास्माकमपि संमतम् । न ह्यनुमानातिरिक्तं शब्दं नाम प्रमाणं वयमुररीकुर्मः । एवं चार्थकाममोक्षास्त्रयः पुरुषार्थाः, न तु द्वावेवेति वैशेषिका अभिप्रयन्ति । ईश्वरसत्त्वं स्वीकुर्वन्तोऽपीमे वेदप्रामाण्याद्यनङ्गीकाराद् नास्तिका एवेति निष्टङ्कितम्[१] ।

सन्त्यन्यान्यपीदृशानि वैशेषिकाक्षेपकवाक्यानि । एतावन्त्येवालमिति कृत्वास्माभिरुदाहरणप्रगुणीकरणाद् विरम्यते ।

नास्तिकास्तिकशब्दयोश्चार्थनिर्णयविधौ दृश्यते विमतिः पण्डितेषु । "अस्तिनास्तिदिष्टं मतिः"[२] इति सूत्रेण भगवता पाणिनिना निर्वचनमनयोः प्रदर्शितम् । अर्थनिर्देशस्तु न कात्यायनेन न वा पतञ्जलिना पूर्णतया विहितः । कैयटवामनादिभिः पुनः परलोकोऽस्तीति यस्य मतिरस्ति स आस्तिकः, तद्विपरीतो नास्तिक इति व्याख्यातम्[३] । श्रीमद्भगवद्गीताव्याख्यासु तु आस्तिकशब्दस्यार्थनिर्णये न दृश्यते मतैक्यम्[४] । महाभारते वनपर्वणि

---

१. ब्रह्मसूत्रशाङ्करभाष्यम्-निर्णयसागर १९१७, भूमिका पृ० १

२. अष्टाध्यायी, ४।४।६०

३. काशिकावृत्तिः, ४।४।६०; द्रष्ट० परलोककर्तृका च सत्ता विज्ञेया, महाभाष्यप्रदीपः ४।४।६०

४. (क) आस्तिक्यम् अस्तिभाव इति शङ्कराचार्यः ।

(ख) आस्तिक्यं वैदिकार्थस्य कृत्स्नस्य सत्यतानिश्चयः प्रकृष्टः केनापि हेतुना चालयितुमशक्य इत्यर्थ इति रामानुजः ।

(ग) आस्तिक्यं पदार्थेषु अस्तिताबुद्धिरिति हनुमान् ।

(घ) आस्तिक्यम् अस्ति परलोक इति निश्चय इति श्रीधरः ।

(ङ) आस्तिक्यं सर्ववेदवेद्यो हरिर्निखिलैककारणं स्वविहितैः कर्मभिराराधितः केवलया भक्त्या च सन्तोषितः स्वपर्यन्तं समर्पयतीति शास्त्राधिगतेऽर्थे सत्यत्वनिश्चय इति बलदेवः ।

(च) आस्तिक्यं सात्त्विकी श्रद्धेति मधुसूदनः ।

(छ) आस्तिक्यं श्रद्धेति नीलकण्ठः ।

त्रिंशत्तमेऽध्याये द्रौपद्या युधिष्ठिरस्य बुद्धिं धर्ममीश्वरीयन्यायं प्रति चाक्षेपः समायाति। अनन्तरे चाध्याये युधिष्ठिरस्य प्रतिवचनम्। तत्र 'नास्तिक्यं तु प्रभाषसे' इति प्रारम्भः। अन्ते च—

न फलादर्शनाद् धर्मः शङ्कितव्यो न देवताः।
यष्टव्यं च प्रयत्नेन दातव्यं चानसूयता॥
कर्मणां फलमस्तीह तथैतद् धर्मशासनम्।
× × ×
तस्मात् ते संशयः कृष्णे नीहार इव नश्यतु।
व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज॥
ईश्वरं चापि भूतानां धातारं मा च वै क्षिप।

इत्यनुशासनम्[१]। आर्षरामायणे[२] श्रीमद्भागवते महापुराणेऽपि[३] शब्दाविमौ दृश्येते। मानवधर्मसंहितानुसारं तु श्रुतिस्मृतिनिन्दको नास्तिकः[४]।

---

(ज) आस्तिक्यं शास्त्रार्थे दृढविश्वास इति विश्वनाथः।

(झ) आस्तिक्यं प्रमाणोक्तफलोत्कर्षेऽस्तीति निश्चयबुद्धिरिति पुरुषोत्तमः।

१. महाभारतम्, ३।३१।३८–४१

२. सुनास्तिकं धर्मपथादपेतम्–रा० २।१०६।३३; तथागतं नास्तिकमत्र विद्धि-२।१०६। ३४; उवाच पथ्यं पुनरास्तिकं च-२।१०६।३७, न नास्तिकानां वचनं ब्रवीमि-२।१०६।३८; यथा मया नास्तिकवागुदीरिता–२।१०६।३९।

३. (क) आस्तिक्यं दाननिष्ठा च (११।१७।१८), आस्तिक्यं शास्त्रार्थे सत्यतानिश्चय इति वीरराघवः।

(ख) आस्तिक्यं ब्रह्मचर्यं च (११।१९।३३), आस्तिक्यं धर्मे विश्वास इति श्रीधरः। आस्तिक्यं शास्त्रार्थविश्वास इति वीरराघवः।

(ग) आस्तिक्यमुद्यमः (७।११।२३), आस्तिक्यमस्ति परलोक इति मतिर्यस्य स आस्तिकः। तस्य भाव आस्तिक्यमिति वीरराघवः। आस्तिक्यं श्रद्धेति शुकदेवः।

४. श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः। × ×
योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः॥

३८

एतेभ्यस्तावत् सङ्कलितप्राचीनप्रवादेभ्यः परलोकस्य कर्मफलस्य ईश्वरस्य वेदस्य च प्रामाण्ये श्रद्धा आस्तिक्यम्, तद्विपरीतं च नास्तिक्यमित्यायाति।

एवं स्थिते कणादस्य महर्षेरास्तिक्यनास्तिक्यविमर्शार्थं तत्प्रणीतानि वैशेषिकसूत्राण्येव प्राक् परीक्षामर्हन्ति। ततश्च तद्व्याख्यानानि तदर्थसंग्राहकाश्च ग्रन्थाः।

अत्रेदमवधेयम्—काणादसूत्राणामतिप्राचीनानां मौला व्याख्याग्रन्था बहवो विलुप्ताः। आसीद् वैशेषिकसूत्रानुसारि वैशेषिकवाक्यमिति व्याख्यानम्। आसीद् वैशेषिककटन्दी। आस्तां रावणात्रेयनिर्मिते वैशेषिकसूत्रभाष्ये। आसीच्च प्रशस्तपादकृता भाष्यव्याख्या[१]। एतस्या भाष्यटीकायाः सारसंग्रहरूपः पदार्थधर्मसंग्रहाख्यः प्रशस्तपादग्रन्थोऽधुना वरीवर्ति। अवान्तरवैशेषिकग्रन्थास्तु भूयसा प्रशस्तपादप्रभाविता दृश्यन्त इति।

अथ परलोकं कर्मफलं चादाय काणादमतसमीक्षायाम्—अस्ति कर्म, अस्ति कर्मफलम्, सन्ति च तत्फलभोक्तारो नित्या आत्मानः। कृते कर्मणि तत्फलमवश्यं भोक्तव्यम्। नाभुक्तं कर्म कदापि क्षीयते। कुत्रचित् कर्मफलं दृष्टम्, कुत्रचिच्चादृष्टम्। यद्यस्मिन्नेव जन्मनि कर्मफलभोगो नावसितः, तर्हि तत्सम्पादनाय जन्मान्तरमपि स्वीकर्तव्यमिति सुविदितो वैशेषिकराद्धान्तः। नात्र कस्यापि वैशेषिकविरोधिनोऽपि विमतिः।

ईश्वरः कणादस्वीकृतो न वेत्यत्र वादिषु न मतैक्यम्। प्रशस्तपादेन पदार्थधर्मसंग्रहसमाप्तौ—

योगाचारविभूत्या यस्तोषयित्वा महेश्वरम्।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः॥

इत्यनेन सूत्रकारस्य महेश्वरस्वीकारः प्रतिपादितः। स्वयमप्यसावाचार्यो हेतुमीश्वरं ग्रन्थारम्भे प्रणमति, सृष्टिसंहारप्रकरणे च विशिष्य परमेश्वरचर्चां विदधाति। सूत्रव्याख्यातृषु शङ्करमिश्रो वैशेषिकसूत्रोपस्कारे[२], भट्टवादीन्द्रः कणाद-

---

१. गायकवाड़ग्रन्थमालायां प्रकाशितस्य वैशेषिकदर्शनस्य भूमिका द्रष्टव्या।

२. (क) तदित्यनुपक्रान्तमपि प्रसिद्धिसिद्धतयेश्वरं परामृशति। × × यद्वा तदिति सन्निहितं धर्ममेव परामृशति (कलिकातासं, पृ० ८)।

(ख) यदि तु तत्त्वं ज्ञायतेऽनेनेति तत्त्वज्ञानं शास्त्रमुच्यते, तदा धर्मविशेष ईश्वरनियोग-

सूत्रनिबन्धे ( तत्सारभूतायां वैशेषिकसूत्रव्याख्यायां च[1] ), चन्द्रानन्दश्च स्वकृत-वैशेषिकसूत्रवृत्तौ[2] ईश्वरं कण्ठतः स्वीकुर्वन्ति।

अत्र तद्वचनादाम्नायस्य प्रामाण्यमित्येतत् सूत्रं विशेषोल्लेखमर्हति। सूत्रेऽस्मिन् तच्छब्द ईश्वरं धर्मं वा परामृशतीति शङ्करमिश्रः, धर्ममेवेति भट्टवादीन्द्रः, ईश्वरमेवेति चन्द्रानन्दः। एतेभ्यः सर्वेभ्यः प्राचीनो वैशेषिकाचार्य उदयनस्तु किरणावलौ तदित्यनेन चास्मद्बुद्धिभ्यो लिङ्गमृषेरिति सूत्रे अभिप्रायोक्तस्य चास्मद्विशिष्टस्य वक्तुः

---

प्रसादरूपो वक्तव्यः। श्रूयते हीश्वरनियोगप्रसादावधिगम्य कणादो महर्षिः शास्त्रं प्रणीतवानिति। ( तत्रैव, पृ० १८ )।

(ग) सुवर्णादीनामीश्वरस्य चात्रैव ( द्रव्येषु ) अन्तर्भावात्। ( तत्रैव, पृ० १९ )। इत्यादिः।

१. (क) अस्येयं संज्ञेश्वरस्याभिप्रेतेति ज्ञानं संज्ञाकर्म। × × सृष्ट्यादौ मन्वादिभिः परमेश्वराभिप्रायव्याप्तलिङ्गानवगमात्। तस्मान्महादेवप्रसादासादितयोगजधर्मसध्रीचीनमनसा वाय्वादयो वाय्वादिपदैर्बोद्धव्या इतीश्वराभिमतमिति मन्वादिभिर्निश्चीयते। ( व्याख्या, मिथिलाविद्यापीठसं०, पृ० २२ )

(ख) अस्मदादिबुद्धेर्वाक्यजनकत्वस्य बाधितत्वात् तदतिरिक्तपुरुषबुद्धौ वेदवाक्य-[ जनकत्वमिति वेदकर्ता ] भगवानृषिरीश्वरः। ( तत्रैव, पृ० ५८ )।

(ग) उक्तमिति भगवतोलूकवेशधारिणा महादेवेनेत्यर्थः। ( तत्रैव, पृ० २० )।

२. (क) तद्वचनादिति। तदिति हिरण्यगर्भपरामर्शः। हिरण्यं रेतोऽस्येति कृत्वा भगवान् महेश्वर एवोच्यते। × × ईश्वरश्च साधितः, तनुभुवनादीनां कार्यतया घटादिवद् बुद्धिमत्कर्तृकत्वात्। ( बड़ोदासं०, पृ० २ )।

(ख) अस्मदादीनां सकाशाद् यो भगवान् विज्ञानादिभिर्विशिष्टो महेश्वरस्तदीयं संज्ञाप्रणयनं नवानामेव द्रव्याणां भावे लिङ्गम्। ( तत्रैव, पृ० १३–१४ )।

(ग) अस्ति भगवानस्मद्विशिष्टो योऽस्मदादिपरोक्षाणामपि भावानां प्रत्यक्षदर्शी येनेदं संज्ञादि प्रणीतमिति। ( तत्रैव, पृ० १४ )।

अस्माकं चन्द्रानन्दवृत्तिचर्चा तत्सम्पादकस्य जैनमुनिश्रीजम्बूविजयमहाराजस्यानुग्रहमूलिकेति तेभ्यो धन्यवादा वितीर्यन्ते।

परमेश्वरस्य परामर्शः। तद्वचनात् तेन प्रणयनाद् आम्नायस्य वेदस्य प्रामाण्यम्[1] इति सूत्रमिदं व्याख्यातवान्।

तथापि काणादसूत्रेषु कुत्रचिदपि स्वशब्देनेश्वरस्यानुपादानात् प्राचीनसूत्र-व्याख्याग्रन्थानामनुपलम्भाच्च प्रशस्तपादसमये ततः पूर्वं वा शास्त्रान्तरप्रभावादत्र प्रस्थाने परमेश्वरः समागतो न वेति संशयो जायते। दृढीकृतश्चासौ युक्तिदीपिकाकारेण सप्रमाणोपन्यासम्। तथा हि—अस्त्येवमीश्वर इति पाशुपतवैशेषिकाः। कस्मात्? कार्यविशेषस्यातिशयबुद्धिपूर्वकत्वात्। × × × किञ्चान्यत्—चेतनाचेतनयोरभि-सम्बन्धस्य चेतनकृतत्वात्। × × × अस्ति चायं चेतनाचेतनयोः शरीरशरीरिणो-रभिसम्बन्धः, तस्मादनेनापि चेतनकृतेन भवितव्यम्। यत्कृतोऽयं स ईश्वरः। तस्माद-स्तीश्वरः कारणम्[2]। एतस्मिन् पूर्वपक्षे पाशुपतवैशेषिकमतेषु सामान्यतोऽनुपपत्ति प्रदर्श्य वैशेषिकपक्षे विशेषमाह—द्रव्यादिपदार्थान्तरभावाभावपरिकल्पनाऽनुपपत्तिश्च। तैरीश्वरो द्रव्यगुणकर्मसामान्यविशेषसमवायभूतो वा परिकल्प्यमानः परिकल्प्यते, पदार्थान्तरभूतो वा? किञ्चातः—तत्र तावद् द्रव्यादिभूतः। कस्मात्? द्विविधं हि द्रव्यम्—अनेकद्रव्यमद्रव्यं च। तत्र नानेकद्रव्यमीश्वरः, कृतकत्वादिदोषप्रसङ्गात्। नाद्रव्यम्, परिसंख्यानात्। पृथिव्यादीनि मनःपर्यन्तानि नवैव द्रव्याणीति वः सिद्धान्तः, इतिकरणस्य परिसमाप्त्यर्थत्वात्। किञ्च, गुणकर्मनिर्देशात्। सति चास्य द्रव्यत्वे वैशेषिकगुणनिर्देश आचार्येण कृतः स्यात्। कारणान्तरप्रयोगसमर्थस्य च कर्म निर्दिष्टं स्यात्। न तु तथा, तस्मान्न द्रव्य[म्। नापि] गुणादयः। आश्रयपरतन्त्रा हि गुणादयः परा(?दा)र्थाः। एवं न द्रव्यादिभूतो नापि पदार्थान्तरभूतः। पदार्थत्वे हि सति द्रव्यादि-वल्लक्षणमुक्तमभविष्यत्। आचार्येण तु नोक्तम्। तस्मात् सूत्रकारमते नास्तीश्वरः। लिङ्गादिति चेत्, स्यान्मतम्—संज्ञाकर्मत्वमस्मद्विशिष्टानां लिङ्गम्। प्रत्यक्षपूर्वकत्वाद् वा संज्ञाकर्मण इत्येतस्माल्लिङ्गादीश्वरपरिग्रह आचार्यस्य सिद्ध इति। तदप्ययुक्तम्। कस्मात्? अभिप्रेतासिद्धेः। सत्यमनेन लिङ्गेनास्मदादिभ्यो विशिष्टशक्तेः कस्य-

१. किरणावली, कलिकातासं० पृ० ५७८

२. युक्तिदीपिका, पृ० ८४–८५। द्रष्ट०—माहेश्वरास्तु × × × पशुपतिरीश्वरो निमित्तकारणमिति वर्णयन्ति। तथा वैशेषिकादयोऽपि केचित् स्वप्रक्रियानु-सारेण निमित्तकारणमीश्वर इति वर्णयन्ति, शारीरकसूत्रशाङ्करभाष्यम्, २।२।३७

चिदेव माहात्म्यशरीरस्यान्यस्य वा प्रतिपत्तिः स्यात्। संज्ञामात्रं तु (?) यथा भवद्भिः सर्वकारणानां सृष्ट्युपसंहारप्रवृत्तिहेतुरेकः स्वतन्त्र इष्यते, तथा चा(?ना)स्माल्लिङ्गात् प्रतिपत्तिः। किञ्चान्यत्—प्रागनुपदेशे[ऽ]कौशलप्रसङ्गात्। ईश्वरपरतन्त्रे चेदणूनां प्रवृत्तिनिवृत्ती स्यातां तमेव प्रागुपदिशेत्, धर्मवत्। प्रधानपदार्थस्य वा प्रागनुपदेशादकुशलः सूत्रकार इत्यापद्यते। न चैतदिष्टमुभयम्। किञ्चान्यत्—असङ्कीर्तनात्। शास्त्रप्रदेशे चायमीश्वरो न कस्मिंश्चिदप्याचार्येण संकीर्तितः। न चास्य वध्वा इव श्वशुरनामसंकीर्तने दोषोपपत्तिः स्यात्। दोषसंविभागार्थमिदमाचार्यस्यानिष्टमध्यारोप्यते। न तु मतमस्यैतत्। एवं काणादानामीश्वरोऽस्तीति पाशुपतोपज्ञमेतत्।[१]

युक्तिदीपिकायुक्तिरियं चेतसश्चमत्कारविधायिनी, न तु सिद्धान्तप्रकाशिका। अत्रेदमवधेयम्। काणाददर्शने ईश्वराभावे सति परमाणूनामाद्यं कर्म कथं निष्पद्येत इति चिन्त्यं स्यात्। मीमांसकवत् सर्गप्रलयास्वीकारे चाद्यकर्माभावः। अतो नायं दोष इति चेत्, तर्हि सूत्रविरोधः। अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणूनां मनसश्चाद्यं कर्मादृष्टकारितमिति हि कणादसूत्रम्[२]। अत्र धर्माधर्मस्वरूपं चेददृष्टमभिप्रेतम्, तर्हि तदचेतनमेव। तस्मिन्निरुक्ताद्यकर्मप्रयोजके स्वीकृतेऽपि तत्प्रयोजकस्येश्वरस्य प्रयोजनं बाढं वर्तते। अयमेव चार्थः—

स्वातन्त्र्ये जडताहानिर्नादृष्टं दृष्टघातकम्[३]।

इत्यादावुदयनेन प्रपञ्चितम्। किरणावलावाचार्येण—अपरा च व्यवस्था कश्चिदीश्वरः, कश्चिदनीश्वर इति। न चेश्वरो नाम जगति नास्ति, तत्सद्भावे यत्नस्य कृतत्वात्। नाप्यस्मदादयः स्वात्मनि सार्वज्ञ्यं सर्वकर्तृत्वं चावगच्छन्ति, उपदेशाद्यपेक्षत्वादिच्छाविघाताच्चेति[४]—इत्येवं द्रव्यपदार्थ एव परमात्मजीवात्मनोरन्तर्भावः प्रदर्शितः। अनूदितश्च स एवार्थो लक्षणावलौ—स द्विविध ईश्वरानीश्वरभेदादिति[५]।

---

१. युक्तिदीपिका, पृ० ८७–८८।

२. वैशेषिकदर्शनम्, कलिकातासं० ५।२।१३

३. न्यायकुसुमाञ्जलिः, ५।४

४. किरणावलिः, कलिकातासं० पृ० २८६–८७

५. लक्षणावलिः, काशीसं० पृ० ७

युक्तिदीपिकायां तु निरीश्वरस्य वैशेषिकप्रस्थानस्य कस्यापि परम्परा नोपस्थापिता। सांख्यमतप्रतिपादनोन्मुखस्य त्वत्र स्वसम्बन्धिगवेषणामात्रमिदमित्येवावभाति।

श्रूयते वैशेषिकाणामवान्तरभेदा अष्टादश आसन्निति[1]। तेषु निरीश्वरा अपि केचन भवितुमर्हन्ति। उपलभ्यमानेषु वैशेषिकग्रन्थेषु केवलं चन्द्रमतिकृता चैनिकादिषु लब्धप्रसरा दशपदार्थी दृश्यते, यत्रेश्वरस्योल्लेखो नास्ति। नातिप्राचीनायास्तस्याः सूत्रसिद्धान्तानुसरणं सन्दिग्धमेव।

प्रसङ्गप्राप्तश्चात्र पाशुपतवैशेषिकयोः सम्बन्धः। स च प्रमाणान्तरेणापि सिद्धो भवति। [2]वैशेषिकाचार्यो व्योमशिव पाशुपत आसीदिति श्रूयते। गुणरत्नमतानुसारेण तु वैशेषिकाः पाशुपता एव[3]। नैयायिकेष्वपि पाशुपताचार्यावुद्योतकरभासर्वज्ञौ प्रसिद्धौ।

अस्तु प्रकृतमनुसरामः। प्रस्तुतप्रमाणवैमुख्येन यदि कणादस्य महर्षेरीश्वरस्वीकारपक्षो नैवाङ्गीक्रियेत, तथापि तस्य नास्तिकत्वं नायाति। आस्तिकप्रस्थानेषु पूर्वमीमांसकैरीश्वरो न स्वीकृतः। कापिलैरपि तथा। नैयायिकानामपि सूत्रेषु प्रावादुकमतानुरोधेनैवेश्वरचर्चेति विशेषविदः[4]। वेदप्रामाण्यमुररीकुर्वतामेतेषामास्तिक्यं यदि वादिभिः स्वीक्रियते, तर्हि समानयुक्त्या वैशेषिकाणामपि तत् समर्थितं जायते। कणादसूत्रेष्वेव वेदानां[5] ब्राह्मणग्रन्थानाम्[6] अभिषेचनादीनां[7] वैदिककर्मणां

---

१. दशपदार्थीभूमिका, पृ० ८

२. मिथिलाविद्यापीठप्रकाशितवैशेषिकदर्शनभूमिका द्रष्टव्या।

३. षड्दर्शनसमुच्चयवृत्तिः, कलिकातासं० पृ० ५१

४. न्यायसूत्रभाष्यभूमिका गङ्गानाथझालिखिता (पुण्यपत्तनसं०) १९३९, पृ० ६

५. तस्मादागमिकम्, २।१।१७, ३।२।८; वेदलिङ्गाच्च ४।२।११, बुद्धिपूर्वा वाक्यकृतिर्वेदे ६।१।१, वैदिकं च ५।२।१०

६. प्रथमाशब्दात् २।२।३४, ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ६।१।२

७. अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ६।२।२

चतुर्णामाश्रमाणां[1] च स्पष्टतया समुल्लेखो दृश्यते। वैशेषिका वेदप्रामाण्यं नाङ्गीकुर्वन्तीति भ्रम एव। शब्दादिकं तु तैः समानविधित्वादनुमानादावन्तर्भुक्तम्[2]। तद्वचनादाम्नायस्य प्रामाण्यमिति[3] सूत्रे तदित्यनेन भवतु यस्य कस्यापि परामर्शः, आम्नायशब्देन तु वेदस्यैव ग्रहणम्। नात्र कस्यापि विमतिः। व्योमशिवाचार्यमते नानुमानात् शब्दोऽतिरिच्यते[4]। सर्वसिद्धान्तसंग्रहे तत्त्वप्रकाशटीकायां च श्रीकुमारकृतायां प्रमाणत्रितयवादिनो वैशेषिकाः समुल्लिखिताः[5]। अतः शब्दप्रामाण्यं वैशेषिकाननुमतमिति न प्रामाणिकं वचः।

आस्तिकदर्शनेषु वेदप्रामाण्यस्वीकारस्य नैका गतिः सर्वत्र। केषाञ्चिद् विधिवाक्येष्वेवाग्रहातिशय्यम्, अन्येषां पञ्चमहावाक्येषु, इतरेषां चेतरत्र। वैशेषिकाणां तु देवतायज्ञपरमात्मादिपदार्थधर्मप्रतिपादकत्वान्न वेदेषु प्रामाण्यं प्रदेशनियतमिति द्रष्टव्यम्।

स्वसिद्धान्तस्थापनव्यग्रेण शङ्करभगवत्पादेन वैशेषिकयुक्तयः खण्डिताः। खण्डिताश्च मायावादयुक्तयो वैशेषिकादिभिः। एतेन खण्डनेन कस्यापि दर्शनत्वं न परिहीयते। एकस्मिन् प्रस्थाने या अनुत्तमा युक्तिः सैव प्रस्थानान्तरे दुर्युक्तिरिति कथ्यते। सुप्राचीनेषु दर्शनेषु मीमांसादिषु वर्तन्तेऽविच्छिन्नाः सम्प्रदायाः। प्रचलति चाध्यात्मसाधनं भारते वर्षे दर्शननिर्दिष्टेन मार्गेण। वर्तन्ते वैशेषिकानुसारिणो विशिष्टा दार्शनिकाः। वर्तते च काणादतन्त्रस्य पाणिनीयतन्त्रवत् सर्वशास्त्रोपयोगित्वस्वीकारः[6]। कणाददिष्टनयेन साधर्म्यवैधर्म्याभ्यां पदार्थतत्त्वज्ञाने सञ्जाते भवति जनोऽद्वैतवर्त्माधिकारी। अन्यथा शङ्करप्रोक्तनित्यानित्यवस्तुविवेकोऽपि सुदुःसाधः स्यात्।

---

१. चातुराश्रम्यमुपधा अनुपधाश्च ६।२।२

२. एतेन शाब्दं व्याख्यातम् ६।२।३ इति सूत्रमप्येतदनुगुणमेव।

३. वै० सू० १।१।३; १०।२।९

४. व्योमवती, काशीसं० पृ० ५७७–५८६

५. तत्त्वप्रकाशटीका, तृणभद्रम्; पृ० १२६

६. द्रष्ट० काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्।

आक्षेपमात्रेणैव कस्यापि दर्शनस्य नास्तिकत्वमास्तिकत्वं वा न सिद्धं भवति। तथा सति—

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव तत्।

इत्याक्षेपेण शाङ्करदर्शनस्य, तथा—

गुरुर्धियमभावस्य स्थाने स्थानेऽभिषिक्तवान्।
प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः॥

इत्याभाणकबलेन प्राभाकरमीमांसायाश्च वैनाशिकत्वमापतेत्।

——

# कणादो नास्तिक आस्तिको वा ?

श्रीवासुदेवशास्त्री बागेवाडीकरः, शोलापुरम् ।

सुखं वा दुःखं वा न केवलं वस्तुतन्त्रम्, किन्तु भोक्तृपुरुषतन्त्रमपि । अत एव सुखोत्पादकं दुःखोत्पादकं वा किञ्चिद्विशेषस्वरूपं भोक्तृपुरुषेष्वावश्यकम् । तच्चानादिकालत एव वर्तते, उत मध्य एव केनचिन्निमित्तेन जातमिति निर्णयार्थं मुमुक्षुणा वस्तुन इव स्वस्यापि मूलस्वरूपमीदृशमित्यवश्यं ज्ञातव्यम् । एवं च मुमुक्षुभिस्तत्त्वजिज्ञासाऽवश्यं कार्येति सिद्धम् । तत्त्वं च जडस्य चेतनस्य च वस्तुनो मूलस्वरूपमिति सामान्यतो द्विविधं वर्तते । तेन हि जडस्य चेतनस्य च वस्तुनो भावो मूलस्वरूपं वा तत्त्वमिति व्युत्पत्तिः । तज्ज्ञानं च मोक्षोपयोगि । तथा च यज्ज्ञानं मोक्षोपयोगि भवति तत् तत्त्वमिति तत्त्वलक्षणं पर्यवसितम् ।

कृपालुभिस्तत्तद्दर्शनकारैः प्राणिनामुपकारार्थं प्रवृत्तैः प्रतिदर्शनं तानि च तत्त्वानि स्वस्वप्रतिपत्त्यनुसारेण भिन्नानि प्रदर्शितानि । तेषु सम्प्रति वैशेषिकदर्शनमत्र संक्षेपेण प्रथमतो विचार्यते । तेन हि तद्दर्शनकारः कणादो नास्तिक आस्तिको वा इति विचार्यमाणो विषयः सहज एव प्रतिपन्नः स्यात् । इदं वैशेषिकदर्शनं कणाददर्शनमिति व्यपदिश्यते । कणाद ऋषिः कापोतीं वृत्तिमाश्रित्य रथ्यासु निपतितांस्तण्डुलकणानादाय प्रत्यहमाहारं निर्वर्तयामास । अतः स कणादः कणभक्षक इति वा नाम्ना प्रसिद्धः । अयमेवौलूक्यः । उलूकस्यर्षेरपत्यमौलूक्यः । काश्यपगोत्रोत्पन्नाय तपस्विने कणादमुनये स्वयं परमेश्वर उलूकरूपधरः प्रत्यक्षीभूय पदार्थषट्कमुपदिदेशेति इतिहासविद आहुः । ततोऽस्य दर्शनस्य औलूक्यदर्शनमित्यपि प्रसिद्धिः ।

न्यायशास्त्रे गौतमेन मुनिना प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्मोक्षप्राप्तिरित्युक्तम् । तच्चु कणादस्य संमतमेव । परन्तु जगत्यस्मिन् विद्यमानानां मध्ये के धर्मिणः, कतिविधाश्च ते धर्माः, के कियन्तश्च ते इत्येवं मिथोऽसंकीर्णरूपेण यावन्न पदार्थज्ञानं भवति तावत् साधर्म्यवैधर्म्यज्ञानाभावेन साहचर्यनियमरूपव्याप्ति-

ज्ञानं न सुलभम्। एवं व्याप्तिज्ञानं पदार्थविवेकसापेक्षमित्यतः प्रथमं पदार्थषट्क-निरूपणार्थम्—"अथातो धर्मं व्याख्यास्यामः" (१-१-१ क० सू०) इति प्रतिज्ञाय ततः—"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" (१-१-२ क० सू०) इति सूत्रेण धर्मस्वरूपं प्रतिपादितम्। पूर्वं "द्रव्यगुणकर्मसामान्यविशेषसमवायाः" इति षडेव पदार्था उद्दिष्टाः। ततोऽभावस्तु निषेधमुखप्रमाणगम्यत्वेन सप्तमो निरूपितः। द्रव्यादिषण्णां पदार्थानां तत्त्वज्ञानान्मोक्ष इति विवेचनं यथा पुरुषार्थोपयुक्तं तथा न अभावस्येति शङ्कायां स समाधत्ते—अभावस्य दुःखात्यन्तोच्छेदापरपर्यायनिःश्रेयस-रूपत्वेन परमपुरुषार्थत्वादिति।

पदार्थानां साधर्म्यवैधर्म्यज्ञानावश्यंभावित्वादस्य द्रव्यस्येदं स्वरूपम्, एत एव च तस्य गुणा इत्यादि सर्वं सुव्यवस्थितं प्रत्यपादयत् कणादः। एवमीदृशं विशेष-मुद्दिश्य प्रवृत्तत्वादिदं वैशेषिकं शास्त्रमिति संकीर्त्यते। अस्मिन् शास्त्रे प्रत्यक्षमनुमानं चेति प्रमाणद्वयमेव। शब्दोपमानयोर्नैव पृथक् प्रामाण्यम्। तदुक्तं भाषापरिच्छेदे—

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते।
अनुमानगतार्थत्वादिति वैशेषिकं मतम्॥ इति।

(भा० प० १४०)

प्रत्यक्षमनुमानं शब्दश्चेति केचित्। इतरेषां प्रमाणानामनुमानेऽन्तर्भावः। अनुपलब्धेस्तु प्रत्यक्षेऽन्तर्भावः।

विधिवदधीतवेदवेदाङ्गा अनभ्यसूयका जिज्ञासवः संपन्नश्रवणा मननार्थं भग-वन्तं परमकारुणिकं कणादमहर्षिमुपतस्थुः। स च मुनिः सूत्राणां दशाध्यायीं विरचय्य तानुपदिदेश।

इदानीं तस्यैव वैशेषिकदर्शनस्य रचयिता महर्षिः कणादो नास्तिको वा आस्तिको वेति विविच्यते। दर्शनकाराः श्रौतास्तार्किकाश्चेति द्विविधाः। येषां मते मूलतत्त्वान्वेषणे श्रुतिरेव मुख्यतया साधनम्, तामन्तरेण मूलतत्त्वान्वेषण-मशक्यमिति मन्वानाः श्रुत्यैकशरणाः श्रौता इति व्यपदिश्यन्ते। अतिपरोक्ष-भूतेष्वर्थेषु ते श्रुत्यनुसारेणैवार्थं निश्चिन्वन्ति। श्रुतिविरुद्धोऽर्थोऽनुमानेन स्मृत्या वाऽपि कथञ्चित् केनापि प्रतिपादितश्चेत् तदनुमानं सा स्मृतिर्न तेषां प्रमाणम्, किन्तु प्रमाणाभामेव।

## कणादो नास्तिक आस्तिको वा ?

केचन दर्शनकारास्तार्किका इति व्यपदेशभाजो भवन्ति। तत्त्वान्वेषणे येषां मतेन तर्क एव प्रधानं साधनं न तं विना तत्त्वान्वेषणं सुशकमिति मन्यमानास्तर्कैकशरणास्ते सन्ति। तर्को नामानुमानम्। तेषां श्रुतिः प्रमाणत्वेन संमताऽपि तदपेक्षयाऽनुमानस्य प्रामाण्यं मन्यन्ते ते। अनुमानानुसारिणी श्रुतिस्तेषां स्वीकरणार्हा। अनुमानाननुसारिणी तु श्रुतिः कथमपि गौणार्थकत्वेन योजनीया भवति, न तु मुख्यार्थकत्वेन संग्राह्या। सांख्यसूत्रकारः कपिलः, योगसूत्रप्रणेता पतञ्जलिः, गौतमसूत्रकारानुयायिनो नैयायिकास्तार्किका भवन्ति। वैशेषिकाश्चापि तार्किका एवेत्यत्र न संशीतिलेशोऽपि। तैः श्रुतेः पृथक् प्रामाण्यं न स्वीक्रियते। उक्तं च—

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते।
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥ इति।

(भा० प० १४०)

प्रमाणद्वयवादिन एते वैशेषिकाः शब्दस्य प्रमाणान्तरत्वं न स्वीकुर्वन्ति, तथापि न ते नास्तिकाः। ये च तार्किकविशेषाः श्रुतिप्रामाण्याविरोधिनस्ते सर्वे आस्तिका एव, ये च वेदविरोधिनस्ते नास्तिका इति व्यपदेशमर्हन्ति, "नास्तिको वेदनिन्दकः" इत्युक्तत्वात्। अपि च अस्ति ईश्वरः स्वर्गादिपरलोक इति येषां मतिस्ते आस्तिकाः, नास्ति ईश्वरः स्वर्गादिपरलोक इति येषां मतिस्ते नास्तिका इत्यास्तिकनास्तिकयोर्निर्वचनत्वात्। सांख्याः पातञ्जला नैयायिका वैशेषिकाश्च यद्यपि तर्केणैव मूलं तत्त्वमन्विष्यन्ति, तथापि ते सर्वे आस्तिका एव। तत्त्वान्वेषणे ते प्रधानतया न श्रुतिप्रामाण्यमपेक्षन्ते। वेदः पौरुषेय इति ते प्रतिपद्यन्ते। पुरुषश्चेश्वरः। सांख्यमते तु कपिल एव वेदद्रष्टेति। ईश्वरेण प्रमाणान्तरेणार्थमुपलभ्य वेदो रचित इति तेषां मतम्। यद्येवं तथापि न ते वेदविरोधिनः। तेषां तार्किकाणां मध्ये वैशेषिकाः शब्दं प्रमाणान्तरत्वेन अनङ्गीकुर्वाणा अपि श्रुतेरनुमानद्वारा प्रामाण्यं स्वीकुर्वन्त्येव। अत एव ते तेषां मध्ये जघन्यतमाः।

एवं च तार्किकाणां मध्ये जघन्यतमा अपि वैशेषिकाः श्रुतौ विश्वासतारतम्यतया आस्तिका एव। अनेनैतादृशस्य वैशेषिकदर्शनस्याचार्यः कणादमहर्षिः स्वर्गः, अपवर्ग इत्यादयः परलोकाः सन्ति, ईश्वरोऽस्तीत्येवं मन्वान आस्तिक एवेत्यत्र न संशयो लेशतोऽपि ॥

---

# न्यायवैशेषिकयोर्भेदकतत्त्वानि

श्रीसुखेश्वरझा, मिथिलाविद्यापीठः, दरभंगास्थः ।

न्यायवैशेषिकदर्शने समानतन्त्रे । साम्यं सादृश्यं वा भेदघटितमेव भवतीति समानतन्त्रयोरप्यनयोः कियन्ति सन्ति भेदकतत्त्वानि । अधस्तनेषु विषयेषु कियत्सु वर्तते मतानैक्यमुभयोः—

(१) प्रमाणम्, (२) प्रत्यक्षम्, (३) समवायः, (४) पाकप्रक्रिया, (५) कर्मस्थितिः, (६) मुक्तौ सुखसंवेदनम्, (७) हेत्वाभासः, (८) वेगाख्यसंस्कारः, (९) सखण्डोपाधिः, (१०) विभागजविभागः, (११) द्वित्वम्, (१२) विभुद्वयसंयोगः, (१३) धर्मः, (१४) जीवत्वादः, (१५) स्वप्रप्रत्यक्षम्, (१६) संशय इत्यादिषु ।

(१) परमाणुवादः, (२) असत्कार्यवादः, (३) मनस इन्द्रियत्वम्, (४) ज्ञानान्मुक्तिः, (५) ईश्वरवादः, (६) मोक्षस्वरूपम्, (७) शब्दानित्यत्वम्, (८) अवयवाः, (९) प्रमेयाणि, (१०) पदार्था इत्येतेषु कियत्सु भेदोऽनयोः परिलक्ष्यते यद्यपि, तथापि सम्यगनुशीलनं 'भेदोऽवास्तवः' इत्यवगमयति । तत्र प्रथमं भेदकतत्त्वानि मुख्यतः प्रतिपाद्य विषयतया कियन्ति सन्निरूप्य पश्चात् साम्यान्यपि कियन्ति निरूपयिष्यन्ते ।

## मौलिको भेदः

महर्षिगौतमपादप्रणीतं न्यायदर्शनमिदं प्रमाणव्युत्पादकत्वात् प्रमाणशास्त्रम् । एतद्धि षोडशपदार्थनिरूपकगौतमीयप्रथमसूत्रादेव प्रमाणशब्दस्य प्राधान्यसूचकादिप्रयोगात् सम्बुद्ध्यते । न्यायदर्शनोन्नायकः प्रथमः श्रीवात्स्यायनो मुनिरपि स्वकीये भाष्ये प्रमाणनिरूपणमेव प्रथमं कुर्वाणो भाष्योल्लिखनायोपक्रमते । तदीयभाष्यीयप्रथमापङ्क्तिरेव—"प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्" इत्यवबोधयति । कणादपादप्रणीतं वैशेषिकदर्शनञ्च पदार्थविवेचकशास्त्रमित्यपि तदीयं चतुर्थं सूत्रमेव— "धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" इत्यदः प्रत्याययति । तद्भाष्यप्रणेतुः प्रशस्तपादस्येयं प्रथमा

पङ्क्तिः---"द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः" काणादचतुर्थसूत्रसंवादिन्येव ।

## प्रमाणम्

नैयायिकाः सूत्रसिद्धान्येव प्रमाणानि चत्वारि सम्मन्यन्ते। तथा च सूत्रम्—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" (न्याय० सू० ३।१।१) इति। परन्तु आचार्याः केचन भासर्वज्ञादय उपमानस्य प्रामाण्यमस्वीकुर्वाणाः संदृश्यन्ते।

वैशेषिका द्वे एव प्रत्यक्षानुमाने प्रमाणे स्वीकुर्वते। तदाह उपस्कारकारः शङ्करः—"प्रमाणं द्विविधं प्रत्यक्षं लैङ्गिकञ्च" (६।२।१ सूत्रव्याख्यायाम्), परन्तु व्योमशिवाभिप्रायेण शाब्दमपि स्वतन्त्रं प्रमाणं वैशेषिकाणामपि। भवतु यत्तत् परन्तु प्रमाणविषयेऽपि विमतिस्तयोः स्पष्टैव।

## प्रत्यक्षम्

प्रत्यक्षविषयेऽपि मतद्वैतं नैयायिकवैशेषिकयोः। नैयायिकानां मते कियन्तः प्रत्यक्षभेदाः—चाक्षुषम्, घ्राणजम्, रासनम्, स्पार्शनम्, श्रावणं च। परन्तु वैशेषिकाणां कृते तार्किकरक्षानुसारं प्रत्यक्षं चाक्षुषमेव केवलम्। तदाह मल्लिनाथस्तार्किकरक्षायाम्—"अप्रत्यक्षस्यापि वायोः स्पर्शशब्दधृतिकम्पलिङ्गैः सिद्धिः" इति। प्रशस्तपादरीत्या पुनरिहाविरोधो भवति तयोः। तथा च प्रशस्तपादः—"तत्राक्षमक्षं प्रतीत्योत्पद्यत इति प्रत्यक्षम्। अक्षाणि इन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षट्। तद्धि द्रव्यादिषु पदार्थेषूत्पद्यते" इति। एतेन सर्वाणि तानि सभेदप्रत्यक्षाण्यभिमतान्येव वैशेषिकाणां मन्तव्यानि।

## समवायः

समवायविषयेऽपि परिलक्ष्यते भेदोऽनयोः। नैयायिकाः समवायः प्रत्यक्ष इति स्वीकुर्वते। न च तथोररीकुर्वन्ति वैशेषिकाः। तदाह उपस्कारे शङ्करः—"प्रत्यक्षः समवाय इति नैयायिकाः। तदप्यनुपपन्नम्, समवायोऽतीन्द्रियः, आत्मान्यत्वे सति असमवेतभाववत्वात्, मनोवत्, कालादिवद् वा" इति।

## पाकप्रक्रिया

पाकजप्रक्रियामधिकृत्य तु नैयायिकवैशेषिकयोर्महदन्तरं वर्तते। पीलुपाक-वादिनो वैशेषिकाः, पिठरपाकवादिनश्च नैयायिकाः। तत्र परमाणव एव स्वतन्त्राः पच्यन्ते, तत्रैव पूर्वरूपनाशाग्रिमरूपाद्युत्पत्ती, ततश्च कारणगुणप्रक्रमेण पुनरवयविनि रूपाद्युत्पद्यत इति पीलुपाकवादिनः। सम्पूर्ण एव घटः पच्यत इति नैयायिकाः पिठरपाकवादिनः।

अयमभिप्रायो वैशेषिकाणाम्—आपाके निक्षिप्तस्याऽऽमघटस्य भास्वरया तीव्रया वेगवत्या च वह्निज्वालया नोदनादभिघाताद् वा घटारम्भकेषु परमाणुषु कर्म। ततोऽवयवानां परस्परं विभागः, ततश्च स्वतन्त्राः परमाणव एव पच्यन्ते। अव-लोक्यते हि स्थाल्यामाहितानां चापि तण्डुलानामधःसन्तापनमात्रेण भर्जनात् तत्समय एव विनाशः, क्षीरनीरादीनाञ्च अत्यन्तमुल्बणता। किञ्च, यद्यवयविद्रव्यानाशस्तदा मध्यभागे पाकानुपपत्तिः, नहि दृढतरावयवारुद्धे मध्यभागे सम्भवति तेजःसंयोगः, यतस्तत्र श्यामादिनिवृत्तिः स्यात्। तथा च कृष्णा अवयवाः, अवयवी च रक्त इति कथं सम्भावनापि। तस्माद् विभक्ताः सन्तः पच्यन्ते परमाणव एव। पुना रक्तैस्तै-र्द्व्यणुकादिप्रक्रमेण रक्तघटोत्पत्तिरिति पीलुपाकवादित्वं तेषां विश्वनाथोऽपि समाम्नाति—

एतेषां पाकजत्वं हि क्षितौ नान्यत्र कुत्रचित्।
तथापि परमाणौ स्यात् पाको वैशेषिके मते॥ इति।

पिठरपाकवादिनो नैयायिकास्तु—समुत्पद्यमानान्यवयविद्रव्याणि सच्छिद्राण्येव जायन्ते। अतो घटादयोऽपि सच्छिद्रा एव समुत्पद्यन्ते। कथमन्यथाऽन्तःस्थितानां तैल-घृतादीनां स्यन्दनं श्रपणं च जायते? तस्मात् तेजःसंयोगोऽपि मध्यभागे भवेदेव। यदि ह्यवयविनो घटस्य नाशः सम्पद्येत कथं तदा स एवायं घट इति स्यात् प्रत्यभिज्ञा? कथन्तरां सर्वास्ववस्थासु आपाकादौ तस्यैव घटादेः स्याद्दर्शनम्? कथन्तमां च घटादीनामुपरि स्थितानां शरावादीनां यथापूर्वमवस्थितिः? घटादीनां स्फुटने हि तेषां पतनं स्यात्। अत एव यावन्त एव घटा आपाके निक्षिप्तास्तावन्त एव पुनः समुपलभ्यन्ते, नाश-पक्षे तु द्व्यणुकादिप्रक्रमेण न्यूनानामधिकानां वा आरम्भसम्भवात्। अत एव

पाकोत्तीर्णस्य घटस्य तावदेव परिमाणमुपलभ्यते। अत एव घटस्थपूर्वरेखोपरेखादीनां न भवति विलोपः। किञ्च, पक्वेऽपि घटे निषिक्तानां जलानां बहिः शीतस्पर्शग्रहणं दृश्यते। अतश्च यदि पाककाले ज्वलदग्निशिखाकलानुप्रवेशकृतो घटनाशः स्यात्, कथं न शिशिरतरनीरकणनिकरानुप्रवेशकृतोऽपि घटस्य नाशः प्रसज्येत ? क्वचित्तु घटाद्याकृतिपरिवर्तनं काष्ठाद्यभिघातकृतमुपपद्यते। तस्मादविशिष्टा एव घटादयः पच्यन्ते।

## हेत्वाभासाः

पञ्च हेत्वाभासा नैयायिकानां सन्ति—अनैकान्तिकः, विरुद्धः, प्रकरणसमः, साध्यसमः, कालातीतश्च। तथा च न्यायसूत्रम्—"सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीताः पञ्च हेत्वाभासाः" (१।२।५) इति। एवमेव सद्धेतूनां पञ्चप्रकारकत्वेऽपि तेषामाग्रहः। ते च प्रकाराः—पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्व-असत्प्रतिपक्षत्व-अबाधितत्वानि। परन्तु वैशेषिकाणां त्रय एव हेत्वाभासाः। तेषां प्रसिद्धेयमुक्तिः—"विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत्" इति। एवं सद्धेतूनां कृतेऽपि त्रित्वमेव समपेक्ष्यते, न तु नैयायिकानामिव पञ्चत्वम्। त्रित्वञ्च पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्वानि। कदाचिदनध्यवसितनामा चतुर्थोऽपि हेत्वाभासोऽङ्गीक्रियते तैः।

## वेगाख्यसंस्कारः

अत्रापि नैयायिकवैशेषिका विप्रतिपद्यमाना दृश्यन्ते। नैयायिका मन्यन्ते यत् प्रक्षिप्तानां नाराचानां पतनात् पूर्वमन्तः कियन्तो वेगाः समुत्पद्यन्ते कियन्ति च कर्माणि भवन्ति। प्रथमं प्रक्षेपणव्यापारात् प्रथमो वेगो व्यापारेण जन्यते। वेगात् तस्मात् पुनः कर्म, तस्मात् पुनर्वेग इत्येवं क्रमेण पतनं यावद् विविधा व्यापारा बोभुवति। कर्मणो वेगो वेगात् पुनः कर्म इति।

एककालावच्छेदेन प्रक्षिप्तयोर्बाणयोः कदाचित् समकालिकमेव पतनं न भवति। तच्चाशुपतनं विलम्बेन पतनञ्च कर्मणो वेगस्य तीव्रत्वमन्दत्वाभ्यां विना न संभाव्यते। अल्पीयोदेशावच्छेदेन किञ्चित् कर्म अधिकदेशावच्छेदेन च किञ्चिदिति बाणपतनासमकालिकत्वं संगच्छते। तादृशं च कर्मवैचित्र्यं वेगादीनामिति

तद्गते एव तीव्रत्वमन्दत्वे। स चासावेक एव वेगः शरादौ पतनं यावदनुवर्तत इति मतं काणादानाम्।

## द्वित्वम्

को वैशेषिक इति जिज्ञासायां स्पष्टमुच्यते यत्—

द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे।
यस्य न स्खलिता बुद्धिर्ज्ञेयो वैशेषिकस्तु सः॥ इति।

द्वित्वोत्पत्तितद्विनाशप्रक्रिया वैशेषिकाणां विचित्रास्ति। वास्तविको वैशेषिक एव तदवबोद्धुं समर्थः। तदाह—

आदाविन्द्रियसन्निकर्षघटनादेकत्वसामान्यधी-
रेकत्वोभयगोचरामतिरतो द्वित्वं ततो जायते।
द्वित्वत्वप्रमितिस्ततोऽनुपरतो द्वित्वप्रमानन्तरं
द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रिया॥

प्रथममिन्द्रियार्थसन्निकर्षः; द्वितीयक्षणे एकत्वत्वजातिज्ञानम्, तृतीयक्षणेऽयमेकोऽयमेक इत्यपेक्षाबुद्धिः, चतुर्थक्षणे द्वित्वसंख्योत्पत्तिः, पञ्चमे द्वित्वत्वजातिज्ञानं निर्विकल्पकम्, षष्ठे द्वित्वत्वविशिष्टं द्वित्वज्ञानम्, सप्तमे इमौ द्वौ घटाविति द्वित्वत्वसंख्याविशिष्टद्रव्यज्ञानम्, अष्टमे च तादृशज्ञानादात्मनि संस्कार उत्पद्यते।

अपेक्षाबुद्धिनाशाच्च द्वित्वस्यापि नाशो भवति। तथाहि—

आदावपेक्षाबुद्ध्या हि नश्येदेकत्वजातिधीः।
द्वित्वोदयसमं पश्चात् सा च तज्जातिबुद्धितः॥
द्वित्वाख्यगुणधीकाले ततो द्वित्वं निवर्तते।
अपेक्षाबुद्धिनाशेन द्रव्यधीजन्मकालतः॥
गुणबुद्धिर्द्रव्यबुद्ध्या संस्कारोत्पत्तिकालतः।
द्रव्यबुद्धिश्च संस्काराद् इति नाशक्रमो मतः॥

सचेतसां मनांसि चमत्करोति वैशेषिकाणां प्रक्रियेयं द्वित्वोत्पत्तितन्नाशयोः। नैनं सिद्धान्तं न्यायविदो विरुन्धन्ति यद्यपि, तथापि विशेषतो नाभिनिवेशस्तेषां तत्र। वैशेषिकाणां तु तत्राग्रहो महानित्येतदपि भेदकतत्त्वमेव।

## संशयः

संशयविषयेऽपि ते किञ्चित् प्रतीपगामिप्रवृत्तयो दृश्यन्ते। तदाहोपस्कारे शङ्करः "सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षाद् विशेषस्मृतेश्च संशयः" (२।२।१७) इतिसूत्रव्याख्यायाम्—"समानतन्त्रे गौतमीयेऽनध्यवसायज्ञानस्यानभ्युपगमाद् असाधारणो धर्मः संशयकारणत्वेनोक्तः। विप्रतिपत्तेर्विरुद्धवाक्यद्वयस्य अन्वयव्यतिरेकशालितया संशयकारणत्वमुक्तम्" इति। न्यायभाष्ये चोपलभ्यमानत्वं यत् संशयकारणमुक्तम्—सदप्युपलभ्यते, असदप्युपलभ्यत इतीदमुपलभ्यमानं सदसदेवेति, यश्चानुपलभ्यमानत्वं सदपि नोपलभ्यते मूलकीलकोदकाद्यसदपि नोपलभ्यते गगनारविन्दादि, तथा च पञ्चविधः संशय इति। तदेतत् सामान्यमेवेति सामान्यप्रत्यक्षादेव गतार्थम्। न्यायवार्त्तिकेऽपि यत् कारणभेदेन संशये त्रित्वमुक्तम्, तदपि न सम्भवति, व्यभिचारेण समानधर्मादीनां त्रयाणां कारणत्वस्यैवासम्भवात्। नहि तृणारणिमणिजन्यवह्नौ वैजात्यमिवात्रापि वैजात्यं कल्पनीयम्, संशयत्वावच्छिन्नकार्यं प्रति समानधर्मत्वेनैव कारणतायाः कल्पनात्। यच्च प्रधानविधिकोटित्वप्रधाननिषेधकोटित्वादिवैजात्यमुक्तं तदननुगतत्वान्नावच्छेदकम्। तथा च संशयो न त्रिविधो न वा पञ्चविधः, किन्त्वेकविध एव, प्रकारान्तरेण तु द्वैविध्यं सूत्रकृदेव दर्शयिष्यतीति।

## विभागजो विभागः

विभागजविभागविषयेऽपि नैयायिकवैशेषिकयोर्मतद्वैतम्। तत्र वैशेषिकनये विभागस्त्रिविधः—(१) अन्यतरकर्मजः, (२) उभयकर्मजः, (३) विभागजश्चेति। विभागजो विभागो द्विविधो भवति—कारणमात्रविभागजः कारणाकारणविभाग एको यथा–कपालद्वयविभागात् कपालाकाशविभागः। कारणाकारणविभागजश्च कार्याकार्यविभागो द्वितीयो यथा—अङ्गुलितरुविभागाद् हस्ततरुविभाग इति। नैयायिकास्तु—विभागाज्जायमानं विभागान्तरं न मन्यन्ते। नहि कपालद्वयविभागो भिन्नो भिन्नश्च कपालाकाशविभागः। एकस्मिन्नेव देशे कपालाकाशयोरवस्थितत्वेन एकस्यैव विभागस्य आश्रयभेदेन भेदात्। मूर्तानामेव समानदेशवृत्तित्वं विरुद्ध्यते। आकाशस्य तु सर्वव्यापकस्यामूर्तस्य सर्वदेशवृत्तित्वं न व्याहन्यते। अत एवाकाशकपालयोरेकदेशवृत्तित्वाद् यत् कर्म कपालद्वयविभागजनकं तदेव कपालाकाशविभागजनकमपीति

विभागजविभागाङ्गीकारो व्यर्थः स्यादिति। विस्तरभिया भेदकान्यवशिष्टान्यन्यानि तत्त्वानि कतिपयानि परिहाय किञ्चिदेव साम्यं विचार्यते।

## उभयोः साम्यम्

शास्त्राणां तदेव शास्त्रत्वं यद् अन्याप्रतिपादितप्रतिपादकत्वम्, किञ्चिदपूर्वकथनम्। अन्यथा शास्त्ररचनावैफल्यम्। अतो विभिन्नमुनिप्रवर्तकत्वाद् वैभिन्न्यानि कियन्ति परमावश्यकसत्त्वानि प्रादर्शिषतामुयोः। परन्तु सती चापि परस्परं भिन्ने अमू प्रागास्तां समानतन्त्रतया प्रसिद्धिं गते। प्रतितन्त्रसिद्धान्तं लक्षयतः सूत्रस्य भाष्ये वात्स्यायनः प्रतिपादयाञ्चक्रे—"पुरुषकर्मादिनिमित्तो भूतसर्गः, कर्महेतवो दोषाः प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते उत्पन्नं निरुद्ध्यत इति योगानाम्" इति। अनेनाभिप्रैति यदमी सिद्धान्ता नैयायिकानां वैशेषिकाणां चाप्यभिमता एवेति।

षट्पदार्थाः सप्तपदार्था वा वैशेषिकाणां षोडशपदार्थाश्च नैयायिकानामिति तत्कृतो विरोधोऽपि न मन्तव्यः, षट्सु एव तेषां नव्यैरन्तर्भावस्य बहुत्र प्रदर्शनात्। शब्दानित्यत्ववादोऽपि समान एवोभयोः। पञ्चानां न्यायावयवानामेव—"प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः" (१।१।३२ न्या० सू०) इति सूत्रप्रतिपादितानां पर्यायसंज्ञका वैशेषिकाणामपि प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायाः पञ्चावयवाः।

आत्मनो लिङ्गानि—इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गानि (न्या. सू.)। प्राणापाननिमेषोन्मेषजीवनमनोगतेन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि (वै० सू० ३।२।४) समानानि। जयन्तभट्टोक्त्या—

> ज्ञातं सम्यगसम्यग् वा यन्मोक्षाय भवाय वा।
> तत्प्रमेयमिहादिष्टं न प्रमाणार्थमात्रकम्॥ (न्या०प्रमे०पृ० २)

अमुया बुद्ध्यते यद् विशिष्टमेव प्रमेयं न्यायेऽभिलक्ष्यते, न तु प्रमाणविषयमात्रमित्यतो द्वादशप्रमेयनिरूपकत्वेऽपि न्यायस्य सप्तपदार्थानुक्रमं तदवान्तरविशेषैः प्रमेयबाहुल्यनिरूपकेण वैशेषिकेण साकं न परिलक्ष्यते विरोधः कोऽपि प्रमेयकृतोऽपि।

> तदत्यन्तविमोक्षोऽपवर्गः (न्या० सू०)।
> तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः (वै० सू०)।

इत्यमूभ्यां मोक्षस्वरूपेऽपि समानं मानं तयोः। केचनैकदेशिनो भासर्वज्ञादयो मुक्तावपि सुखसंवेदनं स्वीकुर्वते न तु वैशेषिकाः। किन्तु वात्स्यायनानुसारं वैशेषिकैरेकवाक्यत्वमेवास्मिन् विषयेऽपि।

"ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्" इत्यादिसूत्रैर्नैयायिकानामीश्वराभ्युपगन्तृत्वं तु निर्विवादमेव, परन्त्वधुनोपलभ्यमानासु पदार्थधर्मसंग्रह–किरणावली–न्यायकन्दली–लीलावती–व्योमवती–सूक्ति–सेतुनाम्नीषु अपरास्वपि च व्याख्यासु तत्तत्प्रकरणे भूयस्या युक्त्या ईश्वरप्रसाधनात् तदुपजीव्यभूतस्य महर्षिकणादस्य अनीश्वरवादित्वं स्वप्नेऽपि न वाच्यमिति कृत्वा 'तद्वचनात्' इति सूत्रेऽनुपक्रान्तोऽपीश्वर एव ततो परामर्शयितव्य इति ईश्वरवादेऽप्युभयोः साम्यमेवेति बहुत्र मतैक्यात् समानतन्त्रत्वमप्येनयोर्निरवद्यमिति विभावनीयं सुधीवरैरित्यलं पल्लवितेन॥

---

# आयुर्वेदवैशेषिकयोः पदार्थविज्ञानम्

श्रीगोमतीप्रसादमिश्रः, सरस्वतीभवनस्थः।

पदार्थविमर्शे विविधा विचाराः प्रचरन्ति लोके। तत्रायुर्वेदवैशेषिकयोः पदार्थ-सामञ्जस्यमीमांसा संक्षेपत उपस्थाप्यते—

तत्र वैशेषिकानुसार्येवायुर्वेदस्य षट्पदार्थीवादः। तथाहि—"द्रव्यगुणकर्म-सामान्यविशेषसमवायानां षण्णां पदार्थानां तत्त्वज्ञानान्निःश्रेयससिद्धिः" इति प्रशस्त-पादभाष्ये स्वीकृतम्। तथा—

महर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा।
सामान्यं च विशेषं च गुणान् द्रव्याणि कर्म च॥
समवायं च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः।
लेभिरे परमं शर्म जीवितं चाप्यनीश्वरम्॥

इत्यायुर्वेदेऽपि त एव पदार्था अङ्गीकृताः। लक्षणाभेदात् फलाभेदाच्च वैशेषिकानुसारित्वमायुर्वेदस्य। अभावस्तु न स्वीकृतः, भावान्तररूपत्वात्तथा चिकित्सायां तदनुपयोगाच्च।

काणादा गौतमीयाश्च "नित्यमेकमनेकानुगतं सामान्यम्" इति सामान्यलक्षणं स्वीकुर्वन्ति। आयुर्वेदे तु—

सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम्।
ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु॥
सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत्।
तुल्यार्थता हि सामान्यं विशेषस्तु विपर्ययः॥

इत्येवं तयोर्लक्षणे विहिते।

वैशेषिके परमपरञ्चेति द्विविधं सामान्यमिति व्याप्यव्यापकभेदेन सामान्य-विभागः कृतः, किन्त्वायुर्वेदे न तथा कृतोऽनुपयोगात्। नित्यद्रव्यवृत्तयो विशेषा अनन्ता इति वैशेषिके उक्तम्, आयुर्वेदे तेषामनुपयोगान्न प्रतिपादनम्। चिकित्सायां

तेषां विरोधिविशेषा अविरोधिविशेषाश्चेति द्वैविध्यं दर्शितम्। विरोधिविशेषा ह्रासहेतवः। द्विविधाश्चाविरोधिविशेषाः— अनुकूला उदासीनाश्च। तत्रानुकूलाः प्रभावव्यपदेश्या घृतत्वादयः, यथा घृतमग्निकारणमित्यादि। उदासीनास्तु न वृद्धिकारणानि नापि ह्रासकारणानि, यथा पृथ्व्या अनुष्णाशीतस्पर्शगतो विशेषो न वा तस्य शैत्यं वर्द्धयति न वा ह्रासयतीत्यादि।

"निर्गुणा निष्क्रिया गुणाः" इति वैशेषिके गुणलक्षणमुक्तम्, चरकेऽपि— "समवायी तु निश्चेष्टः कारणं गुणः" इति गुणलक्षणमभिहितम्। समवायीति समवायाधेयः।

वैशेषिके द्रव्यस्य लक्षणत्रयमभिहितम्—क्रियाश्रयत्वम्, गुणवत्त्वम्, समवायिकारणत्वञ्च। चरकेऽपि—"यत्राश्रिताः कर्मगुणाः कारणं समवायि यत्तद् द्रव्यम्" इति द्रव्यलक्षणम्।

वैशेषिके कर्मलक्षणम्—संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्मेति। चरकेऽपि—"संयोगे च विभागे च कारणं द्रव्यमाश्रितम्। कर्तव्यस्य क्रिया कर्म··· नान्यदपेक्षते॥" इति। अत्र चकारद्वयेन संयोगविभागयोर्युगपत्कारणत्वमुक्तम्, तेन संयोगजनकसंयोगे तथा विभागजनकविभागे च नातिव्याप्तिः। आद्यस्य विभागाकारणत्वादन्त्यस्य तु संयोगाकारणत्वात्। अत्रेदं व्याख्येयम्—संयोगे विभागे च जननीये कर्म स्वपश्चाद्भावि कारणान्तरं नापेक्षते, स्वपूर्वभावि द्रव्यं त्वाश्रयतयाऽपेक्षत एवेति।

वैशेषिके समवायलक्षणं तु—"अयुतसिद्धयोर्द्वयोर्नित्यः संबन्धः समवायः" इति। चरकेऽपि—

समवायोऽपृथग्भावो भूम्यादीनां गुणैर्मतः।
स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः॥

अत्रापृथग्भावोऽयुतसिद्धिः सहैवावस्थानरूपा। स नित्य इत्यनेन नित्यत्वमुक्तम्।

वैशेषिके न्याये च–द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्था इत्युद्देशक्रमः। आयुर्वेदे चरके–'सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म च। समवायञ्च (तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः॥) इति षण्णामेव पदार्थानामुपपादनम्।

अत्र पदार्थनिर्देशक्रमभेदे को हेतुरिति विचार्यते। तत्र वैशेषिके न्याये च तावत् पूर्वं भावपदार्था एव निरूपिताः, यतो हि भावज्ञानसापेक्षमभावज्ञानम्। अत एव भाष्ये प्रशस्तपादकारैरेतावदेवोक्तं षण्णां पदार्थानां तत्त्वज्ञानान्निःश्रेयससिद्धिरित्यादि। तत्र द्रव्यगुणकर्मणामाधारत्वात्प्राङ्निर्देशः, तदाश्रितानां सामान्यविशेषसमवायानां पश्चान्निर्देशः, तथा द्रव्यस्य गुणकर्मणोरप्याधारत्वात् प्रथमं निर्देशः। गुणानां कर्मापेक्षया बाहुल्येन प्राङ्निर्देशः। सामान्यविशेषसमवायेष्वपि विशेषापेक्षया सामान्यस्याधिकदेशवृत्तित्वात् प्राङ्निर्देशः, समवायापेक्षया तु निरूपकत्वेन प्राधान्याद् विशेषस्य प्राङ्निर्देशः।

चरकस्वीकृतपदार्थक्रमभेदे हेतव उपन्यस्यन्ते—यतो ह्यायुर्वेदस्य परमं प्रयोजनं धातुसाम्यरूपा क्रिया (धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्), धातुसाम्यञ्च युगपदुपयुज्यमानाभ्यां सामान्यविशेषाभ्यां भवतीति सर्वप्रथमं सामान्यविशेषयोर्निर्देशः। तत्रापि सामान्यं पोष्यपोषकोभयवृत्ति, विशेष एकवृत्तिरिति व्यापकत्वात् सामान्यस्य पूर्वं निर्देशः।

गुणद्रव्यकर्मसमवायेष्वपि गुणानां रसादीनां द्रव्याद्यपेक्षया चिकित्सायामुपकारकत्वातिशयप्रदर्शनेन पूर्वं गुणानां निर्देशः। किञ्च, शरीरेन्द्रियसत्वात्मसंयोगो धारि जीवितमिति सर्वप्रधानं यज्जीवितं तत्संयोगगुणरूपमेवेत्यतोऽपि गुणस्य प्राङ्निर्देशः। द्रव्यकर्मसमवायाधारतया प्राङ्निर्देशः। किन्त्वग्रे चरके उद्देशक्रमप्राप्तं गुणाभिधानमुल्लङ्घ्य पूर्वं द्रव्याभिधानं कृतं दृश्यते, तत्तु गुणाधारतया द्रव्यस्य प्राधान्येन ज्ञेयम्। कर्मणस्तु सम्बन्धित्वेन समवायसम्बन्धनिरूपकतया पूर्वं निर्देशः।

गुणसंख्याने महद्वैषम्यं प्रतीयते। तस्य विचार ईदृशः—वैशेषिके रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिगुणाः। आयुर्वेदे (चरके) सार्था गुर्वादयो बुद्धिः प्रयत्नान्ताः परादयः गुणाः प्रोक्ता इति (४१) गुणाः। तद्यथा—अर्थाः = शब्दस्पर्शरूपरसगन्धाः पञ्च असाधारणगुणाः। यत आकाशस्यैव शब्दः प्राधान्येन, वायोरेव स्पर्श इत्यादि। गुर्वादयः = गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः। गुणाः ससूक्ष्मविशदाः विंशतिः सविपर्ययाः॥ (गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरस्थूलसूक्ष्मसान्द्रद्रवा विंशतिः सामान्यगुणाः)। बुद्धि-

ज्ञानम्। अनेन च स्मृतिचेतनाधृत्यहङ्कारादीनां बुद्धिविशेषाणां ग्रहणम्। प्रयत्नान्ताः = प्रयत्नोऽन्तो येषां निर्देशे ते प्रयत्नान्ताः पञ्च, एतेन—

इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः।
बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः॥

एतेभ्य इच्छाद्वेषसुखदुःखप्रयत्नानां ग्रहणम्। परादयः—

परापरत्वे युक्तिश्च संख्या संयोग एव च।
विभागश्च पृथक्त्वञ्च परिमाणमथापि च॥
संस्कारोऽभ्यास इत्येते गुणाः प्रोक्ताः परादयः।

इति सामान्यगुणा दश। इत्थं सङ्कलनेनैकचत्वारिंशद्गुणाः। आयुर्वेदेऽत्युपयुक्तत्वात्तेषां तथा संख्यानमतीवोचितम्। चरकस्य यज्जःपुरुषीयेऽध्यायेऽन्येष्वध्यायेषु च गुणानामुपकारिता स्पष्टत उपवर्णिता, विस्तरभयान्नेह प्रदर्श्यते। वैशेषिकविचारात् सम्भवति हि चतुर्विंशतावेवान्तर्भावस्तेषाम्। तथाहि—लघुत्वं गुरुत्वाभावरूपम्। शीतोष्णौ स्पर्शान्तर्गते। स्निग्धत्वं स्नेहः। रूक्षत्वं तदभावरूपम्। तीक्ष्णत्वं तु रसादिगतोऽतिशयविशेषः, मन्दत्वं तु तदभावरूपम्। सरत्वं क्रियारूपम्, स्थिरत्वं तु तदभावरूपम्। काठिन्यं सान्द्रावयवसंयोगः, मृदुत्वं तु तद्विपरीतः संयोग एव। पिच्छिलत्वं पतनहेतुः स्नेहविशेष एव, विशदत्वं तु तदभावः। श्लक्ष्णत्वमपि स्नेहविशेष एव घृतादिनिष्ठः, यदाश्रयद्रव्यसम्बन्धेन हस्तादौ चिक्कणत्वव्यवहारः, खरत्वं तु तदभावरूपम्। सूक्ष्मत्वमणुत्वव्याप्यं परिमाणविशेषरूपम्, स्थूलत्वं तु तदभावरूपम्। द्रवत्वमधःस्यन्दनसमवायिकारणरूपम्, सान्द्रत्वं तु तदभावरूपम्। एते गुरुमन्दादयो गुणाः परस्परविरोधिनो द्वन्द्वशो निर्दिष्टाः।

वैशेषिके—पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव द्रव्याणीति प्रतिपादितम्। आयुर्वेदे च—"खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः" इति प्रतिपादितम्। तस्य भेदश्च "सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्" इति कृतः। तत्र खादीनि = पञ्चमहाभूतानि "खं वायुरग्निरापः क्षितिस्तथा"। अयं हि क्रमः सूक्ष्मत्वतारतम्यहेतुको वैशेषिकोक्तक्रमविपरीतः। (मम विचारे त्वयं क्रमो वेदानुकूलो युक्तिसङ्गतश्च, यतो हि "......आकाशाद्वायुर्वायोरग्निरग्नेरापो अद्भ्यः पृथिवीति तैत्तिरीये प्रतिपादित्वात्तथास्मिन् विज्ञानयुगे चास्य क्रमस्यैवादरबाहुल्यात्)।

खादीनां प्राङ्निर्देशेऽयं हेतुः। तथा हि-शरीरं व्याध्यारोग्याधिकरणतया प्रधानं तदारम्भकाश्च खादयोऽतस्तेषां प्राङ्निर्देशः, आत्मनस्तु निर्विकारत्वात्पश्चान्निर्देशः। आत्मा मनसोऽधिष्ठाता मनश्च तत्करणमिति प्राधान्येन पूर्वमात्मनिर्देशः। ज्ञानव्यवहारे करणत्वेनाथवा मानसव्याध्याश्रयत्वेन मनसो दिक्कालाद्यपेक्षया प्राङ्निर्देशः। दिगपेक्षया चिकित्सायां कालस्योपयोगातिशयः, अतोऽस्य पूर्वं निर्देशः। यतो हि कफ-पित्त-वातानां प्रातर्मध्याह्नसायंक्रमेण वृद्धिर्ह्रासश्चेत्यादि चिकित्साविज्ञैः कल्प्यते।

वैशेषिके—द्रव्यक्रमस्य भूतेषु स्थौल्यक्रमेण प्राङ्निर्देशः, मनोऽपेक्षया कालदिगात्मनां विभुत्वात्प्राङ्निर्देशः, विभुष्वपि—"जन्यानां जनकः कालो जगतामाश्रयो मतः" इति प्राक्कालस्य निर्देशः; आत्मनामनन्तत्वात् तथा तेषां निर्णये गौरवाच्च दिशः (औपाधिकभेदसत्त्वेऽपि) सूचीकटाहन्यायेन प्राङ्निर्देशः। आत्मा मनसोऽधिष्ठाता तत्करणञ्च मन इति कृत्वात्मनः प्राङ् निर्देश इति प्रागप्युक्तम्।

वैशेषिके—"उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि" इति प्रतिपादितम्, तत्रानुक्तकर्मणामपि गमनेऽन्तर्भावः। आयुर्वेदे "प्रयत्नादि कर्म चेष्टितमुच्यते"। अत्र प्रयत्नादीत्यत्रादिशब्दः प्रकारे, तेनात्मकर्मणः प्रयत्नस्य शरीरक्रियायाश्चेष्टाया गुरुत्वद्रवत्ववेगजन्मनामन्येषां च कर्मणां सङ्ग्रहः, यद्वा आदिपदेन कारणं गृह्यते, प्रयत्न आदिः कारणं यस्येति बहुव्रीहिः। चेष्टितपदेनायुर्वेदे हिताहितप्राप्तिपरिहारानुकूला शरीरक्रियैव, तथा चात्मकर्मप्रयत्नः शरीरकर्म च चेष्टेति कर्मद्वयमेव विभज्य दर्शितम्, चिकित्सायामुपयोगात्। न त्वितरकर्माणि न सन्तीति बुद्ध्या, दृष्टविरोधात्। विशेषकर्मविचारे तु पञ्चकर्मपदेनायुर्वेदे—वमन-विरेचन-शिरोविरेचन-अनुवासन-स्थापनानि तथा पूर्वकर्म-प्रधानकर्म-पश्चात्कर्मादिकञ्च बहु वक्तव्यमस्ति, तदत्र विस्तरभयान्न लिख्यते॥

———

# प्राचीनन्यायेषु व्याप्तिविस्तारः

श्रीजगन्नाथ उपाध्यायः, वा० सं० विश्वविद्यालये बौद्धदर्शनव्याख्याता ।

भारतीयदर्शनेषु नाप्रत्यक्षं प्रमाणमिति वदद्भिश्चार्वाकैर्विशेषेऽनुगमाभावः, सामान्ययोरवस्तुभूतत्वेन न प्रतिबन्धसिद्धिः, दृष्टसाम्येन च न प्रत्यक्षस्य प्रामाण्यमित्याद्यनेकाभिर्विधाभिरनुमानोपजीव्यभूता व्याप्तिः खण्डिता ।

सामान्यमामनद्भिरनामनद्भिरन्यैश्च दार्शनिकैर्बहिर्व्याप्तिः साकल्यव्याप्तिरन्तर्व्याप्तिर्वेति स्वस्वदर्शनप्रस्थानानुरोधेन व्यवस्थापिता । एतत्सर्वं 'रोधोपघातसादृश्येभ्यो व्यभिचारदर्शनादनुमानमप्रमाणम्', 'तत्पूर्वकं त्रिविधमनुमानम्' इत्यादिन्यायसूत्रव्याख्यानप्रसङ्गेन वार्त्तिक-तात्पर्यकृद्भिरन्यैश्च न्यायमञ्जरी-न्यायलीलावती-प्रमाणसमुच्चय-प्रमाणवार्त्तिक-प्रमेयकमलमार्तण्डकर्तृभिर्वैदिक-बौद्ध - जैनविद्वद्भिर्विहित-व्याप्त्युपबृंहणेन प्रतीयते[1] ।

भारतीयदर्शनेषु कस्मिन् प्रस्थानविशेषे सव्याप्तिकोऽनुमानप्रयोगः सर्वप्रथमं सम्यग् विवृत इत्यस्य बौद्धानां वैशेषिकाणाञ्च प्राचीनग्रन्थानामनुपलम्भाद् याथातथ्येन निश्चयो दुःशकस्तथापि समुपलब्धपुस्तकेषु वैशेषिकसूत्रे प्रशस्तपाद-शावरभाष्ययोश्च साम्प्रतं प्रवहतो निर्धारितानुमानस्वरूपनदस्य उत्सः प्रतीयते । तत्र प्रशस्तदेवपादाः—'लिङ्गदर्शनात् सञ्जायमानं लैङ्गिकम्' (पृ०९९)इति प्राक् प्रतिपाद्य "यदनुमेयेन सम्बद्धम्" इत्यादिकाश्यपवचनानुरोधेन, अपदेशप्रकरणे "लिङ्गं पुनर्यदनुमेयेन सहचरितं तत्समानजातीयं सर्वत्र सामान्येन प्रसिद्धं तद्विपरीते च सर्वस्मिन्नसदेव तल्लिङ्गम्" (पृ० ११६) इत्यनेन च तदेव व्याप्तिगर्भं लक्षणं विशदीकुर्वन्ति । सूत्रकारैश्च "अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लिङ्गम्" इति सूत्रे लिङ्गं चतुर्भिः सम्बन्धप्रकारैर्युक्तमेव व्याप्यं भवतीत्यनभिव्यक्तमुक्तम् । शबरस्वामिना च "अनुमानमेकदेशदर्शनाद् एकदेशान्तरेऽसन्निकृष्टार्थबुद्धिः" (पृ० ३६) इत्यनुमानलक्षणेन वैशे-

---

१—न्यायदर्शनम् १।१।५, २।१।३७, तत्रत्यवार्त्तिकतात्पर्यटीकादिषु । न्यायम० पृ० १०८, न्या० ली० पृ० ४८९, प्र० क० मा० ३६६९ ।

षिकाभिमतं लिङ्गलिङ्गिनोः सम्बन्धजातं क्रोडीकृत्य प्रत्यक्षतोदृष्टसम्बन्ध–सामान्यतोदृष्टसम्बन्धाभ्यामेव हेतुभ्यामनुमानमिति च स्वीकृत्याऽनुमायाः प्रत्यक्षपूर्वकत्वं व्यवस्थापितम्। शबरप्रशस्तपादाभ्यामभिव्यञ्जितमेतत्सर्वं पूर्वोक्तमक्षपादैः—"अथ तत्पूर्वकम्" इत्यादिसूत्रे त्रिविधानुमानस्य प्रत्यक्षपूर्वकत्वं गर्भीकृतम्। यद्यपि शावरभाष्यस्य हेतुविषये 'ज्ञातसम्बन्ध' इति, प्रशस्तपादस्य च 'लिङ्गदर्शनम्' इति च वचनाभ्यां हेतोः साध्येन सहाविनाभावो व्यज्यते, अन्यत्र च प्रशस्तदेवेन 'सर्वत्र देशकालाविनाभूतमितरस्य लिङ्गम्'इत्यनेन तदेव शब्दतोऽप्युक्तम्, तथाप्यविनाभावसम्बन्धस्य किं विनिगमकमित्यस्य न सुस्पष्टं निर्णयो जातः। अत एव प्रशस्तदेव-वाचस्पति-जयन्तादिभिर्वैशेषिकसूत्रनिर्दिष्टं कार्यं कारणं संयोगि विरोधि समवायीत्यादि निमित्तं निदर्शनमात्रम्, उपलक्षणमात्रं वेत्युक्तम् (प्रश० १०४, तात्पर्य० १३८, न्या० मं० १३८ पृ०)। शाबरभाष्येऽपि (पृ० ३६) प्रत्यक्षतोदृष्ट-सामान्यतोदृष्टसम्बन्धाभ्यामनुमानस्य द्वैविध्यप्रतिपादनेन सामान्यतोदृष्टेन अप्रत्यक्षयोरपि सम्बन्धिनोर्व्याप्तिः पर्यवस्यति, यथा आदित्यगतिस्मरणविषये। अत्रापि व्याप्तेर्नियामकः सम्बन्धो नोक्तः। एवमेव वात्स्यायनभाष्ये—"अप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते" (पृ० १५६) इत्युक्तम्। एतदेवाधिकृत्यानुमानस्य लिङ्गलिङ्गिपूर्वकत्वमधिगम्य पूर्ववतः शेषवतश्च व्यतिरेच्य सामान्यतोदृष्टानुमानेन अतीन्द्रियाणां प्रतीतिरिति सांख्यकारिकायामप्युक्तम् (५-६)। एतया प्रत्यक्षाप्रत्यक्षयोरनियततया व्याप्त्याऽनुमानस्याव्यवस्थितिमालोच्य पश्चाद्वर्तिभिराचार्यैर्बहुधा व्याप्तिस्वरूपं परिष्कृतम्।

आचार्योद्द्योतकरैर्न्यायभाष्यवार्त्तिके लिङ्गलिङ्गिनोः सम्बन्धोऽप्रत्यक्ष (पृ० १५६) इत्यत्र "किं यदाऽनुमीयते तदा अप्रत्यक्षः, आहो न कदाचित् प्रत्यक्ष इति विकल्प्य, यदि न कदाचित्प्रत्यक्षः कथन्तर्हि अनुमानमत्र प्रवर्तते" इत्यादियुक्तिभिः सम्बन्धाप्रत्यक्षवादं निरस्य "यदितरधर्मदर्शनाद् धर्मिणोऽधिगतसाधनं तत्सामान्यतोदृष्टम्" इति व्याख्यानेन लक्षणं परिष्कृतम्। न्यायदर्शनेऽनुमानसूत्रस्य मुख्यव्याख्यानभाष्यालोचनप्रसङ्गे उद्द्योतकरैर्वात्स्यायन-शाबरभाष्ययोरादित्यगत्युदाहरणं "नैवेदमादित्यगत्यनुमानं साक्षात्" (पृ० १४६) इत्युक्त्वा प्रत्यक्षदृष्टदेशान्तरप्राप्त्या गत्यनुमानं भवतीति विधया अदुष्टमित्यापादितम्। व्याप्त्युपजीविन्या अनु-

मितेरेतामव्यवस्थामालोच्यैव श्लोकवार्त्तिककृता तदवलम्बिभिरन्यैश्च विद्वद्भिः शाबरभाष्यीयमुभयमप्यनुमानं विव्रियते। तेषामयमभिसन्धिः—यत्र विशेषयोरेव प्रत्यक्षेण सम्बन्धो गृह्यते तद्विशेषविषयं प्रत्यक्षतोदृष्टसम्बन्धमित्युच्यते, यत्र सामान्ययोरेव प्रत्यक्षेण सम्बन्धो गृह्यते तत्सामान्यतोदृष्टसम्बन्धमनुमानमिति। एवंविधव्याख्यानेन सामान्यतोदृष्टे निविष्टा दोषा अंशतो यद्यप्युत्सारितास्तथापि विशेषयोर्व्याप्तिविषये विमतिरेवासीत्।

वस्तुतो बौद्धनैयायिकानामेवैष प्रभावो यद् विशेषयोर्व्याप्तिः स्वीक्रियत इति। एवं न्याय-वैशेषिक-जैमिनीयसूत्र तद्भाष्यालोचनेनेदं पर्यवस्यति यत्तदानीं लिङ्गलिङ्गिनोः सम्बन्धस्य नियामको न स्पष्टं ज्ञातः, सामान्यत एव तैर्व्याप्तिस्मृतिः पक्षधर्मता च स्वीकृता। पश्चात्तैस्तु हेतुसाध्ययोः सम्बन्धविषये नियामकं विना चार्वाकप्रतिक्षिप्तानुमानप्रामाण्यमनाकुलितमेव सिध्येदित्यालोच्य ससंरम्भं व्याप्तिसम्बन्धस्वरूपं चर्चितम्। तत्र दिङ्नाग-धर्मकीर्ति-ज्ञानश्री-रत्नकीर्त्तिप्रभृतिबौद्धनैयायिकानामनुमानतत्त्वव्यवस्थापनेन तदुपपादकतर्कपाटवेन तद्विरोधिनाञ्च कुमारिलोद्द्योतकर-वाचस्पति—उदयन—गङ्गेशप्रभृतिमीमांसकगौतमीयनैयायिकानां च प्रतिविधानेन भारतीयं न्यायशास्त्रं व्याप्तिविषये यथा व्यकसत् तथात्र लेशेन लिख्यते।

साध्यसाधनयोः सम्बन्धविषये बौद्धैः प्रतिबन्धवादः स्वीक्रियते। अत एव ते नियमवादिनः, अन्ये चानियमवादिनः। बौद्धेषु हेतोः प्रतिबन्धस्तु साध्यस्वभावलक्षणस्तदुत्पत्तिलक्षणो वा नियतः। अयञ्च स्वभावप्रतिबन्धोऽविनाभावाख्यो नियमः साधर्म्यवैधर्म्यदृष्टान्ताभ्यां प्रदर्श्यते। (कर्णगोमी पृ॰ ७६) असति प्रतिबन्धे हेतोर्विपक्षाद् व्यतिरेकपक्षे चान्वयो न शक्यनिश्चय इति कृत्वा दिङ्नागेन प्रतिबन्धवादः स्थापितः। तदुक्तं धर्मकीर्तिना—

हेतोस्त्रिष्वपि रूपेषु निश्चयस्तेन वर्णितः।
असिद्धविपरीतार्थव्यभिचारिविपक्षतः ॥३।१४॥ (प्र॰ वा॰।)

एवं दिङ्नागेन हेतोरसिद्धत्वविपक्षेण पक्षधर्मत्वम्, विपरीतार्थविरोधेनान्वयत्वम्, व्यभिचारिविपक्षेण व्यतिरेकनिश्चयो वर्णितः। दिङ्नागीयोऽयं प्रतिबन्धनियमः कार्यकारणभावादेव स्वभावादेव वा पर्यवस्यति। उक्तं च प्रमाणवार्त्तिके—

तस्मात् तन्मात्रसम्बन्धः स्वभावो भावमेव वा।
निवर्तयेत् कारणं वा कार्यमव्यभिचारतः ॥३।२९॥

एवमविनाभावनियमाच्च बौद्धमते हेतोस्त्रित्वमेव सिध्यति, अविनाभावस्य साध्याव्यभिचरितत्वस्य त्रिविधे एव हेतौ नियमात्। 'पक्षधर्मस्तदंशेन व्याप्तो हेतुः' (३।१) इति प्रमाणवार्त्तिकवचनं स्फुटीकुर्वता मनोरथनन्दिनोक्तम्—"तत्र व्याप्ये सति व्यापकस्य अवश्यम्भावः, तस्य व्याप्तिः। व्याप्यस्य च व्यापके एव सति भावो नाम तस्य व्याप्तिः"इति। आभ्यां च यथाक्रममन्वयव्यतिरेकावुक्तौ, व्याप्यसद्भावे व्यापकस्य सत्त्वनियमस्यान्वयरूपत्वात्, व्यापकाभावे व्याप्याभावस्य व्यतिरेकरूपत्वादिति। एवमविनाभावे सिद्धे हेतुस्त्रिप्रकार एव सिध्यति—कार्यं स्वभावोऽनुपलब्धिश्चेति। एतेन तादात्म्यतदुत्पत्त्युपजीविना अविनाभावनियमेन हेतोः साधर्म्यदृष्टान्ते वैधर्म्यदृष्टान्ते च सत्त्वमावश्यकम्, न केवलं साधर्म्ये दर्शनाद् वैधर्म्ये वाऽदर्शनादिति। अत एव व्याप्तेः केवलव्यतिरेकित्वं केवलान्वयित्वं वा न स्वीक्रियते बौद्धैः।

एवं बौद्धमते व्याप्तेरविनाभावित्वं स्वभावेन प्रतिबद्धम्, स्वभावप्रतिबन्धश्च तादात्म्यतदुत्पत्तिभ्यां नियतः, तादात्म्यतदुत्पत्तिभ्यां च हेतुत्रयं नियतम्, तेषां हेतुत्वं च साधर्म्यसत्त्ववैधर्म्यासत्त्वाभ्यां व्याप्तमिति सर्वथा व्याप्तिविषये बौद्धेषु नियमवादः सम्मतः। बौद्धमतानुसारं यदि व्याप्तिप्रतिबन्धः कार्यकारणस्वभावाभ्यां नियन्त्रितो न स्यात्तदाऽन्वयव्यतिरेकनिश्चयो न भवेद् अनुमानेन निःशङ्कप्रवृत्तिश्च न स्यात्। इत्थमेव कर्णगोमिनोक्तं स्वव्याख्याने(पृ० ८८) कार्यकारणादिसम्बन्धाभावे नियम एव न स्यात्, अप्रतिबद्धानां सहभावनियमाभावात्। नियमो हि तदायत्ततैव, सा च तादात्म्यतदुत्पत्तिस्वभावेनैव। तेन तादात्म्यतदुत्पत्तिनिश्चय एव नियमनिश्चयो न पुनर्दर्शनादर्शनाभ्यां नियमनिश्चयो व्यभिचारादिति। अत्र बौद्धानामभिप्रायः—साध्याभावे हेतोरदर्शनमात्रात्, साध्यवति च सहभावदर्शनमात्राद् यथा व्यभिचारो न तथा कार्यकारणभावनिश्चयादिति। कार्यकारणनिश्चयोऽपि तेषां मते विशिष्टाभ्यामेव दर्शनादर्शनाभ्यां न सामान्याभ्यामिति विवेचयिष्यते।

गौतमीया एतत्सर्वं बौद्धनियमवादं न सहन्ते। यद्यपि न्यायसूत्रभाष्ययोः पूर्ववच्छेषवदनुमानाभ्यां कारणेन कार्येण च लिङ्गेन कार्यकारणयोरनुमानस्वीकृत्या कार्य-

कारणव्याप्तिकमनुमानं सम्मतमेव, तथापि तादात्म्यतदुत्पत्तिनिबन्धनां व्याप्तिमसहमानाः पश्चाद्वर्तिन उद्द्योतकर-वाचस्पतिप्रभृतयः सूत्रस्थपूर्ववच्छेषवत्सामान्यतोदृष्टशब्दैरन्वयि-व्यतिरेकि-अन्वयव्यतिरेकिभेदेनानुमानस्य त्रित्वं व्यवस्थाप्य व्याप्तौ कार्यकारणभावस्य नैयत्यं प्रतिषेधयन्ति। एतदनुरोधेनैव वाचस्पतिना तत्त्वकौमुद्यां त्रिविधमनुमानमाख्यातमिति(५) कारिकांशस्यापि व्याख्यानं कृतम्। इत्थं व्याप्तौ कार्यकारणतादात्म्यनिबन्धनं नियमवादमनङ्गीकृत्यापि वाचस्पत्यादिभिर्गम्यगमकभावनिबन्धनो नियमः स्वीकृत एव। उक्तं च तात्पर्ये—"यत् किञ्चित्क्वचिद् दृष्टं तस्य यत्र प्रतिबन्धस्तद्विदस्तस्य तद्गमकमिति, स एव तु प्रतिबन्धो न तदुत्पत्त्या सम्भवतीति" (पृ० १२५), "यत्र गम्यगमकभावो न तत्र तादात्म्यं यत्र तादात्म्यं तत्र न गम्यगमकभावः" इति च। कार्यात् कारणानुमाने व्यभिचारं निःशङ्कप्रवृत्त्यभावं कार्यकालात् प्राक् पश्चात् समानकाले च कारणानुमितेरसम्भाव्यत्वं तादात्म्यनिबन्धनानुमानेऽप्येकस्मिन्नेव कर्तृत्वकर्मत्वादिदोषजातमारोप्य तादात्म्यतदुत्पत्तिभ्यां प्रतिबन्धो मनोरथमात्रं बौद्धानामिति प्रतिक्षिप्य नैयायिकाः स्वाभाविको नियतश्च सम्बन्धो गम्यगमकभावनिबन्धन इति निर्धारयन्ति। सम्बन्धस्य स्वाभाविकत्वमुपाधेरनुपलभ्यमानत्वेन व्यभिचारादर्शनपूर्वकं सहचारदर्शनेन पर्यवस्यति। वाचस्पतिमिश्राणामस्मिन् व्याप्तिलक्षणे यद्यपि सहचारदर्शनांशः कुमारिलपादानां "भूयोदर्शनगम्या च व्याप्तिः सामान्यधर्मयोः" (पृ० ३५०) इति लक्षणस्थभूयोदर्शनगम्यत्वेन समानः तथापि तत्र निरुपाधिकत्वं विशेषः।

अत्र बौद्धैस्त्वनौपाधिकत्वेन सहचारदर्शनेन वा कथमपि व्याप्तिर्नाङ्गीक्रियते, भूयसा प्रवृत्तेऽपि दर्शनादर्शने घटकुलटादौ पार्थिवत्वलौहलेख्यत्वादौ च व्यभिचारोपलब्धेरदर्शनमात्राच्चोपाध्यभावसिद्धेः सत्यपि व्यभिचारे सहचारदर्शनसामग्र्यभावादुपाधेरदर्शनाच्च। यतो हि यस्योपाधेर्दर्शनात् स्वाभाविकः सम्बन्धो व्यवस्थाप्यते स हेतुतोऽर्थान्तरम्, अर्थान्तरञ्च देशकालस्वभावविप्रकृष्टं न सदैव दृश्यतानियतम्। एवंसत्यप्यदृश्योपाधौ उपलब्ध्यभावाद् उपाधिमात्रानुपलब्धिर्न सम्बन्धस्य स्वाभाविकत्वं ख्यापयति। व्यभिचारादर्शनमपि सन्दिग्धासिद्धमेव, प्रत्ययान्तरवैकल्येन आहत्य व्यभिचारादर्शनेऽपि सर्वत्र निषेद्धुमशक्यत्वात्। किञ्च, सम्बन्धस्य स्वाभाविकत्वमपि न युक्तिसहम्। उक्तं च मोक्षाकरेण—"स्वाभाविकसम्बन्ध इति कोऽर्थः? किं स्वतो भूतः? स्वहेतोर्वा भूतः? अहेतुको वा? इति त्रयो विकल्पाः। न तावदाद्यः पक्षः,

स्वात्मनि क्रियाविरोधात्। नापि द्वितीयः, तदुत्पत्तिसम्बन्धस्वीकारप्रसङ्गात्। अथाहेतुकस्तदा देशकालनियमाभावादतीवासङ्गतः स्वाभाविकसम्बन्धवादः" (तर्कभाषा १.४२.)। एवं भेदे कार्यकारणभावसम्बन्ध एव व्याप्तेर्नियामक इत्यायाति। तदुक्तं धर्मकीर्तिना—"कार्यकारणभावादिसम्बन्धाभावे नियम एव न स्यात्। अप्रतिबद्धानां सहभावनियमाभावात् पाण्डुत्वादिमात्रस्य चान्यकार्यत्वात्" (पृ० ८८ प्र० स्ववृत्ति) इति। अर्चटेन चोक्तम्—"रूपादिनाऽपि हि रसादेरविनाभावो न स्वतः, किन्तु स्वकारणाव्यभिचारद्वारक इति तत्कारणोत्पत्तिरेवाविनाभावनिबन्धनम्" (हे० वि० टी० पृ० ८) इति।

व्याप्तिसम्बन्धमधिकृत्य सर्वोऽप्ययं विवादो व्याप्त्यधिगमस्वरूपनिर्भरः, व्याप्त्यधिगमस्वरूपञ्च स्व-स्व-तन्त्राधिगतपदार्थानुकूलम्। अस्ति वस्तुस्वरूपविषये महदन्तरं क्षणभङ्गवादि-स्थिरवादिनोर्बौद्धतदितरयोः। बौद्धेषु वस्तुसत्त्वं क्षणिकत्वाविनाभावि तादात्म्यभूतम्, अतस्तादात्म्यप्रतिबद्धादेव सत्त्वात् तस्य क्षणिकत्वमनुमीयते। क्षणभङ्गिनो कार्यकारणयोः सम्बन्धोऽपि संकेतमात्रभूतोऽस्मिन् सति इदं भवतीति। व्यवहारप्रामाण्यमनेनैव सङ्केतविकल्पेन पर्यवस्यति। उक्तं च धर्मकीर्तिना—"अनुमानस्य तु भ्रान्तत्वे सत्यपि प्रतिबन्धवशात् प्रामाण्यम्" (प्र० वा० स्ववृत्ति)। एवं सत्यस्थिरेणासंहतेन कारणेन तद्वतः कार्यस्य व्याप्त्याऽनुमानं सिध्यति। अत एव बौद्धेषु विशेषयोरेव व्याप्त्या सर्वोपसंहारः। अन्ये तु वस्तुनोऽस्थिरत्वं दूरतः परिवर्जनाकाङ्क्षया क्षणभङ्गनिरसनानुकूलमनुमानप्रकारं विस्तारयन्ति। अत एव तैर्वस्तुजातं स्थिरं तत्र चानुगतं नित्यं सामान्यमाकलय्य सामान्ययोर्वस्तुसतोर्व्याप्तिं सर्वोपसंहारवतीं साधयन्ति। बौद्धमते न वस्तुसत् प्रमाणसिद्धं सामान्यं क्वचिद् दृष्टम्, येन सामान्यव्याप्तिः पर्यवस्येत्। बौद्धमते यद्यपि गौतमीयादिपरिकल्पितं सामान्यं नास्ति, किन्तु व्यवहारप्रसिद्धमन्यव्यावृत्तिलक्षणमपोहाख्यं तदस्त्येव। उक्तं च दिङ्नागेन—

अतद्रूपपरावृत्तवस्तुमात्रप्रसाधनात्।
सामान्यविषयं प्रोक्तं लिङ्गं भेदाप्रतिष्ठितेः॥

(प्र० वा० स्ववृत्ति पृ० ७७)

स्ववृत्तौ च—"स्वलक्षणानां सम्बन्धग्रह एव सामान्यानां सम्बन्धग्रहो न त्वन्यः" इति। अत एव टीकाकारैः शाबरभाष्यीयप्रत्यक्षतोदृष्टसम्बन्धं व्याख्यातवद्भिर्विशेष-

योरपि व्याप्तिः स्वीकृता यस्मिन्नेव धर्मिणि गोमयेन्धनादिविशेषतज्जन्यधूमविशेषयोः सम्बन्धग्रहणं प्रत्यक्षेण जातं तस्मिन्नेव धर्मिणि कालान्तरे तस्यैव धूमविशेषस्य दर्शनेन तस्यैव सन्दिह्यमानसद्भावस्याग्निविशेषस्य यदनुमानं तत् प्रत्यक्षतोदृष्टसम्बन्धात्मकमिति। धूमाकृतिदर्शनादन्याकृतिविज्ञानमिति शाबरीयलक्षणस्थाकृतिशब्देन च आकृत्योरेवेतरव्यवच्छेदकत्वेन साध्यसाधनभावः स्वीक्रियते। एवं मीमांसकैः सामान्यं स्वीकुर्वद्भिरपि व्याप्तेर्भूयोदर्शनगम्यत्वं स्वीकृत्यापि क्वचिद् विशेषयोर्व्याप्तिः स्वीक्रियत एव। उक्तं च श्लोकवार्तिके—

भूयोदर्शनगम्या च व्याप्तिः सामान्यधर्मयोः।
ज्ञायते भेदहानेन क्वचिच्चापि विशेषयोः॥ ५।१२॥ इति।

उक्तमन्यत्र पार्थसारथिना—"पूर्वदृष्टमहानसादिसपक्षगतैव व्याप्तिरनुमानाङ्गं न तु सकलदेशव्याप्तिः" (श्लो० व्या० पृ० ३५०) इति। बौद्धास्तु भूयोदर्शनमपि न सहन्ते।

वस्तुतो बौद्धमते वस्तुनः क्षणिकत्वात् सामान्यस्य द्रव्यसत्त्वाभावाद् धूमाग्न्योरेकैकव्यक्त्योः स्वलक्षणयोः प्रत्यक्षेण ग्रहणम्। एवं क्षणव्यक्तेर्ग्रहणेऽपि प्रत्यक्षपृष्ठभाविविकल्पवशात् सामान्यं गृह्यते। तदुक्तं ज्ञानश्रीपादेन—"एकव्यक्तिदर्शनेऽपि सर्वं सजातीयव्यक्तिविषयत्वेन सामान्यविषयम्'......................'न सामान्यं नाम किञ्चिदन्यदेव किन्तु स्वलक्षणान्येव परस्परमविवेचितभेदानि सामान्यमुच्यन्ते" (ज्ञा० नि० १६६) इति। बौद्धमते सकलवह्निसाधारणं रूपं समारोपितमेवास्ति। व्याप्तिकाले समारोपितार्थस्य दृश्यस्यार्थस्य च भेदतिरस्कारोऽनाद्यविद्यावशाद् भवति। तदुक्तं दुर्वेकेण—"विकल्पाः खल्वनाद्यविद्यावशात् स्वप्रतिभासमनग्निव्यावृत्तमवस्यतो बाह्योऽप्यनग्निव्यावृत्त इति तदध्यवसानमेव बाह्यो वह्निरध्यवसितः। अनग्निव्यावृत्ततया बाह्यसदृशवह्न्यध्यवसाय एव बाह्यवह्न्यध्यवसायः" इति। उक्तञ्च धर्मोत्तरेण—"आरोपितो ह्यर्थो गृह्यमाणः स्वलक्षणत्वेनावसीयते यतस्ततः स्वलक्षणमवसितं प्रवृत्तिविषयोऽनुमानस्य, अनर्थस्तु ग्राह्यः" (पृ० ७३) इति। एतेषां मते प्रत्यक्षादनुमानस्यायमेव भेदो यत् प्रत्यक्ष-

स्य ग्राह्यमनारोपितं रूपम्, अध्यवसेयमारोपितम्; अनुमानस्य तु स्वलक्षणमवसेयं ग्राह्यन्तु आरोपितमेवेति। बौद्धमते च समारोपितरूपत्वादन्यथाद्यनुमानस्य यद्यपि भ्रान्तत्वं तथापि प्रतिबन्धवशात् प्रामाण्यं सिद्ध्यत्येव। उक्तं च—"भ्रान्तिरपि सम्बन्धतः प्रमा" (धर्मो० प्र० पृ० ७८) इति। इयञ्च समारोपितसामान्यप्रतीतिर्विशेष-व्याप्त्यैव प्रसिध्यति, सामान्यवादिनाऽपि अग्निसम्बद्धधूमव्यक्त्यवधारणपूर्वकमेवा-ग्निनियतधूमसामान्यावधारणमङ्गीकर्त्तव्यम्। अत एव सिद्धान्तिनोऽधूमव्या-वृत्तरूपं धूममनग्निव्यावृत्तस्याग्निमात्रस्य कार्यमवधारयन्ति। यथा एकत्र तथा सर्वत्रैव एतद्रूपं धूममग्निजन्यमेवेति स्थापयन्ति। अन्यथा अग्निमात्रसम्बन्धितया धूमस्य ग्रहणं न स्यात्।

न्यायमञ्जर्यां (पृ० १०१) जयन्तेन क्षणयोः सन्तानयोर्वा न कार्यकारणभावो व्यावृत्तयोर्वा न सम्बन्धो न च तथा लिङ्गलिङ्गिभाव इत्याद्याक्षिप्तं दोषजातं किन्तु प्रायो वस्तुनोऽक्षणिकत्वमधिकृत्यैव। क्षणिकत्वाक्षणिकत्वविचारस्तु न व्याप्तिविचारकक्षे साक्षादापतत्यतो मुख्यविचारात्पलायनं नोचितं जयन्तस्य।

वैशेषिकसूत्रोपस्कारे शङ्करमिश्रैर्यद्यपि साध्यसाधनयोरव्यभिचरितत्वम्, अविनाभावत्वम्, कात्स्न्येन सम्बन्धत्वम्, स्वाभाविकत्वम्, अनौपाधिकत्वम्, सम्बन्ध-मात्रत्वं च व्याप्तेर्लक्षणं पूर्वपक्षीकृत्य अनौपाधिकः सम्बन्धो व्याप्तिरिति सिद्धान्तितं तथापि सौगतापादितदोषेभ्यो गौतमीयाः काणादाश्च न विमोचिताः। वस्तुतो गौत-मीयबौद्धयोरयमप्येको महान् भेदो यद् गौतमीया व्याप्तिबलेन एकजातिकाशेष-व्यक्तिकं ज्ञानमिच्छन्ति, सौगतास्तु एकव्यक्तिकसर्वसजातीयव्यक्तिविषयकं ज्ञानं स्थाप-यन्ति। गौतमीयेषु बाह्यं सामान्यमस्ति नित्यम्, वस्तु सत्; अतः परमार्थसतो लिङ्ग-लिङ्गिसामान्ययोर्ग्रहणेन बहिर्व्याप्तिः सम्मता। सामान्यस्य बहिःस्वीकारादेव वाचस्पति-मिश्रास्तात्पर्यटीकायां व्याप्तिग्राहकं बाह्येन्द्रियमेव प्रमाणं स्वीकुर्वन्ति, अथ च बौद्ध-मतापातभयात् स्वाचार्यत्रिलोचनस्वीकृतं मानसप्रत्यक्षं ससंरम्भं खण्डयन्ति। किन्तु पश्चाद्वर्तिभिः ज्ञानश्री-रत्नकीर्तिप्रभृतिभिर्बौद्धनैयायिकैः केन सन्निकर्षेण सामान्यस्ये-न्द्रियप्रत्यक्षमिति पृष्टे सामान्यलक्षणप्रत्यासत्त्येति स्वपूर्वाचार्येभ्यो भिन्नं नवीन-मेवोत्तरं चिन्तामण्यां गङ्गेशोपाध्यायेन प्रदत्तम्—तथा हि—"व्याप्तिग्रहस्तु नाना-

व्यक्तिसाध्यहेतुकस्थले वह्निमान् धूमादित्यादौ सामान्यलक्षणाप्रत्यासत्त्या सकलवह्नि-धूमादिविषयको जन्यते" (चि० २ पृ० १७) इति।

यवनानां कर्कशाघातैः स्वमातृभूमितः प्रच्यावितैर्बौद्धनैयायिकैर्यद्यपि पश्चाद्-वर्तिनाऽऽचार्यगङ्गेशेन कल्पितायाः सामान्यलक्षणायाः प्रतिक्षेपस्यावसरो न लब्धः, किन्तु प्रायशस्तमनुगामिभिः शाङ्कराद्वैतिभिः सामान्यलक्षणायाः प्रतिक्षेपः कृतः। स विदुषां पुरतः स्पष्ट एवेति विरम्यते॥

———

# जैनदर्शनदृष्ट्या ज्ञानविमर्शः

श्रीअमृतलालो जैनः, संस्कृतविश्वविद्यालये जैनदर्शनव्याख्याता।

जगति यावन्तो जीवाः सन्ति तेषु सर्वेष्वपि ज्ञानं वर्त्तते। यान् सूक्ष्मातिसूक्ष्मान् जीवान् वयं सूक्ष्मेक्षणयन्त्रतोऽपि वीक्षितुमक्षमास्तेष्वपि ज्ञानस्य सत्ता सम्भवति। ज्ञानमेव जीवस्य स्वरूपम्। नहि स्वरूपं विना स्वरूपवतः सत्ता सम्भवा प्रतिभाति। समेषां जीवानां ज्ञानं मात्रया साम्यं न बिभर्तीति त्वन्या वार्त्ता। जीवानां ज्ञानं तेषां हिताहितप्रवृत्तिनिवृत्तिदर्शनादनुमीयते। पशवः पक्षिणः कीटपतङ्गादयश्च स्वेष्टानिष्टप्राप्तिप्रतीकारोपायानवगच्छन्ति। अयं निजः परो वेति सर्वेऽपि जीवा जानन्ति। तमस्तोमव्याप्तायामपि यामिन्यां गावः स्वान् वत्सान् वत्साश्च ताः परिचिन्वन्ति। पशवः पक्षिणश्च दूरतरं गत्वापि स्वस्थानस्याध्वानं न विस्मरन्ति। स्वस्थानगमनवेलाञ्च ते नातिक्रामन्ति। कीराः कपोताश्च स्वस्वामिनां पत्रं पत्रवाहका इव तत्सम्बन्धिनामन्तिकं नयन्ति। शिक्षिताः सारमेयाश्चौरान् प्रकाशयन्ति। विनीतास्तुरङ्गमा मितङ्गमा गोलाङ्गूलाश्च नृत्यन्ति। पिका वसन्तम्, मयूरा वर्षाः, हंसाः शरदमेवमन्येऽपि पक्षिणः पशवश्च स्वं स्वमृतुं बुद्ध्यन्ते। पादपा लताश्च स्वविकासाविकासकालं कलयन्ति। ताम्रचूडाः प्रातस्तरामेव प्रबुध्य सुप्तान् मानवान् प्रतिदिनं प्रबोधयन्ति। अस्मिन् वैज्ञानिके युगेऽपि यत्र घटिकायन्त्रं नास्ति तत्र ताम्रचूडास्तत्कार्यं विदधति। घटिकायन्त्रं कदाचिन्मन्दं कदाचिदमन्दं चलति कदाचिच्च मनागपि न चलति, किन्तु ताम्रचूडाः सृष्टिप्रारम्भत एव प्रतिदिनं नियतकालं प्रभातवेलां सूचयन्ति। मधुमक्षिकाः पुष्परसानयनाय दूरवर्तिनमपि प्रदेशं येनैव पथा गच्छन्ति तेनैव पुनरागच्छन्ति। मक्षिकाः स्वभक्ष्ये लीयन्ते न विषनिषेकदूषिते वस्तुनि। एवमेव सर्वेषामपि प्राणभृतां प्रवृत्तीर्निरीक्ष्य तज्ज्ञानमनुमातुं शक्यते। केचिज्जीवाः पशुत्वे पक्षित्वेऽपि वा ज्ञानप्रकर्षापेक्षया नरायन्ते, केचिच्च नरत्वेऽपि ज्ञानापकर्षापेक्षया पशूयन्ते। ज्ञानं विना प्राणभृतामैहिकं पारलौकिकं वा किमपि कार्यं भवितुं नार्हति।

भारते वर्षे नास्तिका आस्तिका वा यावन्तो दार्शनिकाः सन्ति ते सर्वेऽपि येन केनापि रूपेण ज्ञानस्य सत्तां स्वीकुर्वन्ति, केवलं तत्स्वरूपनिरूपण एव ते विवदन्ते।

"सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति प्रतिपादयद्भिर्जैनैः, "तत्त्वज्ञानान्मुक्तिः" इति स्वीकुर्वद्भिर्नैयायिकैः, "श्रद्धाविशेषोपगृहीतं हि सम्यग्ज्ञानं वैराग्यनिमित्तं परां काष्ठामापन्नमन्त्यनिःश्रेयसहेतुः" इत्यङ्गीकुर्वद्भिर्वैशेषिकैरेवमन्यैरपि दार्शनिकशिरोमणिभिर्मुक्तिं प्रति ज्ञानस्य हेतुत्वमङ्गीकृतम्। अतो भारतीयदार्शनिकग्रन्थेषु ये प्रतिपाद्या विषयाः सन्ति, तेषु ज्ञानमपि वर्तत इति न परोक्षं प्रेक्षावताम्।

स्वपरव्यवसायात्मकत्वं ज्ञानत्वम्। सामान्यापेक्षया ज्ञानमेकम्, किन्तु विशेषापेक्षया पञ्चविधम्—मतिज्ञानम्, श्रुतज्ञानम, अवधिज्ञानम, मनःपर्ययज्ञानम्, केवलज्ञानञ्चेति। तदुक्तमुमास्वामिभिः—"मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम्"।

मतिज्ञानम्—पञ्चेन्द्रियमनोभिर्यज्ज्ञानं जायते तन्मतिज्ञानम्। तदुक्तमुमास्वामिभिः—"तदिन्द्रियानिन्द्रियनिमित्तम्" इति। अत्र तत्पदेन मतिज्ञानं निर्दिष्टम्। तदुदाहरणानि—एष मृदुः, इदं कटु, सुरभि पुष्पम्, शुक्लः पटः, शङ्खः श्रूयते, स एवायम्। अत्र प्रथममुदाहरणं स्पर्शनेन्द्रियजन्यमतिज्ञानस्य, द्वितीयं रसनेन्द्रियजन्यमतिज्ञानस्य, तृतीयं घ्राणेन्द्रियजन्यमतिज्ञानस्य, तुरीयं चक्षुर्जन्यमतिज्ञानस्य, पञ्चमं कर्णेन्द्रियजन्यमतिज्ञानस्य, षष्ठं मनोजन्यमतिज्ञानस्य। मतिज्ञानस्य पर्यायनामानि पञ्च सन्ति—मतिः, स्मृतिः, संज्ञा, चिन्ता, अभिनिबोधश्चेति। तदुक्तमुमास्वामिभिः—"मतिः स्मृतिः संज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरम्"। मतिः अनुभवः। स्मृतिः स्मरणम्। संज्ञा प्रत्यभिज्ञानम्। चिन्ता तर्कः। अभिनिबोधः अनुमानम्।

मतिज्ञानं चतुर्विधम्—अवग्रहः, ईहा, अवायः, धारणा चेति। तदुक्तमुमास्वामिभिः—"अवग्रहेहावायधारणाः" इति। वस्तुनः सामान्यावबोधोऽवग्रहः। यथाऽयं मनुष्यः। अवग्रहगृहीतेऽर्थे विशेषाकाङ्क्षणमीहा। यथायं मनुष्य उदीच्य उत दाक्षिणात्यः? भाषादिविशेषनिर्ज्ञानाद्याथात्म्यागमनमवायः। यथा कन्नडभाषाभाषित्वा-

दनेन दाक्षिणात्येनैव भवितव्यम्। अवेतस्य कालान्तरेऽविस्मरणकारणं धारणा। यद्वशादुत्तरकालेऽपि 'स एवायं दाक्षिणात्यः पुमान् यमहं पूर्वाह्णेऽद्राक्षम्' इत्यवगमः स्यात्।

मतिज्ञानस्येमे भेदा येन क्रमेण समुत्पद्यन्ते तेनैव क्रमेण तेषां सूत्रे निर्देशः कृतः।

अवग्रहादीनि ज्ञानानि येषामिन्द्रियमनसां साहाय्येन भवन्ति, तेषु स्पर्शनरसन-घ्राणाख्यानि त्रीणीन्द्रियाणि प्राप्यकारीणि न चक्षुर्मनश्च प्राप्यकारिणी। चक्षुर्यमर्थं पश्यति न तमुपसर्पति, न च तत्किरणा वा तमुपसर्पन्तः समवलोक्यन्ते। एवं मनोऽपि यं पदार्थं चिन्तयति न तं प्रति गच्छति। अतश्चक्षुषो मनसश्चाप्राप्यका-रित्वमेवानुभूयते। तदुक्तं भगवता पूज्यपादेन देवनन्दिना सर्वार्थसिद्धौ—"अप्राप्य-कारि चक्षुः स्पृष्टानवग्रहात्। यदि प्राप्यकारि स्यात् त्वगिन्द्रियवत् स्पृष्टमञ्जनं गृह्णी-यात्। न तु गृह्णात्यतो मनोवदप्राप्यकारीत्यवसेयम्" इति।

श्रुतज्ञानम्। मतिज्ञानानन्तरं जायमानं विचारात्मकं ज्ञानं श्रुतज्ञानम्। अयं घट इति मतिज्ञानात्मकश्रवणानन्तरं तद्विषये 'घटः कम्बुग्रीवादिमान् भवति, स जल-भरणार्थमुपयुज्यते' इत्यादिरूपा या विचारधारा प्रवहति सा श्रुतज्ञानपदवाच्या। आगमस्यान्तर्भावोऽस्मिन्नेव ज्ञाने जायतेऽतोऽत्र श्रुतपदेन शास्त्रमपि गृह्यते। तच्च नैकविधम्। तदुक्तमुमास्वामिभिः—"श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम्" इदञ्च सूत्रं विवृतं पूज्यपादेन देवनन्दिना—"भेदशब्दः प्रत्येकं परिसमाप्यते, द्विभेदमनेकभेदं द्वादशभेदमिति। द्विभेदं तावद् अङ्गबाह्यमङ्गप्रविष्टमिति। अङ्गबाह्यमनेकविधं दशवै-कालिकोत्तराध्ययनादि। अङ्गप्रविष्टं द्वादशविधम्। तद्यथा—आचारः, सूत्रकृतम्, स्थानम्, समवायः, व्याख्याप्रज्ञप्तिः, ज्ञातृधर्मकथा, उपासकाध्ययनम्, अन्तकृद्दशम्, अनुत्तरोपादिकदशम्, प्रश्नव्याकरणम्, विपाकसूत्रम्, दृष्टिवाद इति। दृष्टिवादः पञ्चविधः—परिकर्म, सूत्रम्, प्रथमानुयोगः, पूर्वगतम्, चूलिका चेति। तत्र पूर्वगतं चतुर्दशविधम्—उत्पादपूर्वम्, अग्रायणीयम्, आत्मप्रवादम्, कर्मप्रवादम्, प्रत्या-ख्याननामधेयम्, विद्यानुप्रवादम्, कल्याणनामधेयम्, प्राणावायम्, क्रियाविशालम्, लोकबिन्दुसारमिति। सर्वज्ञेन परमर्षिणा तीर्थकृताऽर्थतो य आगम उपदिष्टः तत्सा-

क्षाच्छिष्यैर्गणधरैः सङ्कलितः सोऽङ्गप्रविष्टश्रुतपदेनोच्यते। पश्चाज्ज्ञान्यैराचार्यैस्तमेवार्थमनुसृत्य य आगमो लिखितः सोऽङ्गबाह्यश्रुतपदेन व्यवह्रियते।

अवधिज्ञानम्। रूपिद्रव्यमात्रविषयकं जन्मिनां भूतभविष्यज्जन्मावबोधकं ज्ञानमवधिज्ञानम्। समासतस्तद् द्विविधम्—भवप्रत्ययं गुणप्रत्ययञ्चेति। भवो जन्म प्रत्ययः कारणं यस्य तद् भवप्रत्ययमवधिज्ञानम्। इदं देवानां नारकाणां तीर्थङ्कृताञ्च जायते। तदुक्तमुमास्वामिभिः—"भवप्रत्ययोऽवधिर्देवनारकाणाम्" इति। गुणः प्रत्ययः कारणं यस्य तद्गुणप्रत्ययमवधिज्ञानम्। क्षयोपशमनिमित्तमिति तस्यैव नामान्तरम्। इदं षड्विधम्—अनुगामि, अननुगामि, वर्द्धमानम्, हीयमानम्, अवस्थितम्, अनवस्थितञ्चेति। इदञ्चावधिज्ञानं मानवानां तिरश्चाञ्च केषाञ्चन जायते। तदुक्तमुमास्वामिभिः—"क्षयोपशमनिमित्तः षड्विकल्पः शेषाणाम्" इति। यज्ज्ञानं छायेव स्वस्वामिनं क्षेत्रान्तरम्, भवान्तरम्, तदुभयं वानुगच्छति तदनुगामिनामकमवधिज्ञानम्। तद्विपरीतस्वरूपमननुगामिसंज्ञमवधिज्ञानम्। यज्ज्ञानं वलक्षपक्षक्षपाकरवदनुदिनं तपश्चरणादिजन्यात्मशुद्धिवशात् सम्यग्दर्शनादिगुणप्रकर्षाच्च वर्द्धते तद्वर्द्धमानाभिधमवधिज्ञानम्। यज्ज्ञानं वलक्षेतरपक्षक्षपाकरवदनुदिनमात्मशुद्ध्यपकर्षवशात् सम्यग्दर्शनादिगुणापकर्षाच्च हीयते तद्धीयमाननामकमवधिज्ञानम्। यज्ज्ञानं न हीयते न वर्द्धते, किन्तु सूर्यमण्डलवत्सततं तदवस्थं भवति तदवस्थिताख्यमवधिज्ञानम्। यज्ज्ञानं चन्द्रमण्डलवत्कदाचिद् वर्द्धते कदाचिच्च हीयते तदनवस्थितं नामावधिज्ञानम्।

मनःपर्ययज्ञानम्—येन ज्ञानेन परमनोगतोऽर्थः परिज्ञायते तन्मनःपर्ययज्ञानम्। तद् द्विविधम्—ऋजुमतिमनःपर्ययज्ञानम्, विपुलमतिमनःपर्ययज्ञानञ्चेति। यज्ज्ञानं सरलमनोगतमर्थमवगच्छति तद् ऋजुमतिमनःपर्ययज्ञानम्। यज्ज्ञानं कुटिलमनोगतमप्यर्थमवगच्छति तद् विपुलमतिमनःपर्ययज्ञानम्। तदुक्तमुमास्वामिभिः—"ऋजुविपुलमती मनःपर्ययः" इति।

केवलज्ञानम्। अखिलावरणविलये यज्ज्ञानमेककालावच्छेदेन जगत्त्रयगतानखिलानर्थांस्तत्पर्यायांश्च परिच्छिनत्ति तत् केवलज्ञानमिति।

उक्तेषु पञ्चविधेषु ज्ञानेषु मतिज्ञानं श्रुतज्ञानञ्च परोक्षम्। परैरिन्द्रियादिभिरुदयते सिञ्च्यत इति परोक्षम्। इन्द्रियमनःप्रकाशादिसामाग्रीं यज्ज्ञानमपेक्षते

तज्ज्ञानं परोक्षम्। अवधिज्ञानं मनःपर्ययज्ञानञ्च विकलप्रत्यक्षम्, केवलज्ञानवत् पूर्णताभावात्। केवलज्ञानं तु सकलप्रत्यक्षम्। मुख्यप्रत्यक्षमस्यैव नामान्तरम्। तदुक्तं विद्यानन्दैराप्तपरीक्षायाम्—"अक्ष्णोति व्याप्नोति जानातीत्यक्ष आत्मा, तमेव प्रतिगतं प्रत्यक्षमिति हि भिन्नार्थमेवेन्द्रियप्रत्यक्षात्, तस्याशेषार्थगोचरत्वान्मुख्यप्रत्यक्षत्वसिद्धेः। तथा हि—विवादाध्यासितमर्हत्प्रत्यक्षं मुख्यम्; निःशेषद्रव्यपर्यायविषयत्वात्, यन्न मुख्यं तन्न तथा, यथाऽस्मदादिप्रत्यक्षम्, सर्वद्रव्यपर्यायविषयञ्चार्हत्प्रत्यक्षम्, तस्मान्मुख्यम्। न चेदमसिद्धं साधनम्। तथा हि—सर्वद्रव्यपर्यायविषयमर्हत्प्रत्यक्षं क्रमातिक्रान्तत्वात्। क्रमातिक्रान्तं तत्, मनोऽक्षानपेक्षत्वात्। मनोऽक्षानपेक्षं तत्, सकलकलङ्कविकलत्वात्। सकलाप्रशमाज्ञानादर्शनावीर्यलक्षणाकलङ्कविकलं तत्, प्रक्षीणतत्कारणमोहज्ञानावरणवीर्यान्तरायत्वात्। यन्नेत्थं तन्नेत्थम्, यथाऽस्मदादिप्रत्यक्षम्, इत्थञ्च तत्, तस्मादेवमिति हेतुसिद्धिः" इति। उक्तञ्च माणिक्यनन्दिभिः परीक्षामुखे—"सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यम्। सावरणत्वे करणजन्यत्वे च प्रतिबन्धसम्भवात्" इति। "न चामूर्त्तत्वादात्मन आवरणासिद्धिः, अमूर्त्ताया अपि चेतनाशक्तेर्मदिरामदनकोद्रवादिभिरावरणोपपत्तेः" इत्यनन्तवीर्यैरप्यभाणि। "विवादाध्यासितः संसारी बन्धवान् परतन्त्रत्वाद्, आलानस्तम्भागतहस्तिवत्। परतन्त्रोऽसौ हीनस्थानपरिग्रहवत्त्वात्, कामोद्रेकपरतन्त्रवेश्यागृहपरिग्रहवच्छ्रोत्रियब्राह्मणवत्। हीनस्थानं हि शरीरं तत्परिग्रहवांश्च संसारी प्रसिद्ध एव। कथं पुनः शरीरं हीनस्थानमात्मनः? उच्यते; हीनस्थानं शरीरम्, आत्मनो दुःखहेतुत्वात् कस्यचित्कारागृहवत्। ननु देवशरीरस्य दुःखहेतुत्वाभावात्पक्षाव्यापको हेतुरिति चेन्न, तस्यापि मरणे दुःखहेतुत्वप्रसिद्धेः पक्षाव्यापकत्वव्यवस्थानात्" इति विद्यानन्दा अपि जगदुः।

अतीन्द्रियं ज्ञानं केवलं कल्पनाशिल्पिकल्पितमिति न मन्तव्यम्। अस्मदादिजनानां ज्ञानमिन्द्रियाणि मनःप्रकाशादिकञ्चापेक्षत इति सत्यम्, किन्तु मन इन्द्रियापेक्षया बलीयः, मनोऽपेक्षया चात्मा बलीयान्। अनन्तशक्तिरचिन्त्यशक्तिरात्मेति न परोक्षं प्रेक्षावताम्। यथेन्द्रियाणि विना केवलं मनसा ज्ञानमुत्पद्यते तथेन्द्रियाणि मनो विना च विशिष्टपुरुषाणां ज्ञानं सञ्जायते। सर्वावरणविलये तज्ज्ञानं

स्वयमेवोत्पद्यते। घनपटलावरणमुक्तसूर्यमण्डलमिव च प्रकाशते। एवंविधं ज्ञानं यस्य जायते स एव केवली सर्वज्ञो वा कथ्यते।

यथाऽग्निसंयोगात् स्वर्णस्य किट्टिमा कालिमा च विलीयते तथा तपःसम्बन्धादात्मनः सर्वाणि कर्माणि क्षीयन्ते। तदुक्तं तार्किकचूडामणिभिः समन्तभद्रस्वामिभिः—

दोषावरणयोर्हानिर्निःशेषाऽस्त्यतिशायनात्।
क्वचिद्यथा स्वहेतुभ्यो बहिरन्तर्मलक्षयः॥

आत्मा चेतन इन्द्रियाणि चाचेतनानि। आत्मनः स्वभाव आत्मन्येव भवितुमर्हति, नाचेतनेष्विन्द्रियेषु, तत इन्द्रियैरुपलब्धं वस्तु कथमात्मनः प्रत्यक्षं स्यात्? वस्तुषु परतो यज्ज्ञानं जायते तन्नूनं परोक्षमेव। परमसहायेन केवलज्ञानेन यद्वस्तु परिज्ञातं भवति तदेव प्रत्यक्षम्। तदुक्तं भगवद्भिः कुन्दकुन्दाचार्यपादैः—

परदव्वं ते अक्खा णेव सहावो त्ति अप्पणो भणिदा।
उवलद्धं ते हि कधं पच्चक्खं आपणो होदि॥
जं परदो विण्णाणं तं तु परो क्खत्ति भणिदमट्ठेसु।
जदि केवलेण णादं हवदि हि जीवेण पच्चक्खं॥

भावनावशात् कामुकोऽतिदूरवर्त्तिनीमपि प्रेयसीं पुरो वर्त्तमानामिव पश्यति। यथोक्तम्—

पिहिते कारागारे तमसि च सूचीमुखाग्रदुर्भेद्ये।
मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम्॥

तत्तपश्चरणकरणादनिशमात्मनः परमात्मनश्च चिन्तनाद् गुणगणविकासादखिलमलविलयाच्च यदि कश्चन पुमान् यद्यतीन्द्रियानर्थानवलोकयति तत्किमद्भुतम्?

ज्ञानावरणविच्छेदे तत्किं ज्ञेयं यन्न ज्ञायेत? अप्राप्यकारित्वाच्च ज्ञानस्य तदात्मस्थितमपि त्रिजगद्वर्तिनोऽखिलानर्थानवलोकयति। यदाहुरकलङ्का न्यायविनिश्चये—

ज्ञानावरणविच्छेदे ज्ञेयं किमवशिष्यते।
अप्राप्यकारिणस्तस्मात् सर्वार्थानवलोकते॥

प्रतिबन्धकाभावे ज्ञाता ज्ञेयमवश्यमवगच्छति। प्रतिबन्धकाभावेऽग्निरिन्धनमवश्यं दहति। तदुक्तं वीरसेनस्वामिभिः—

ज्ञो ज्ञेये कथमज्ञः स्यादसति प्रतिबन्धरि।
दाह्येऽग्निर्दाहको न स्यादसति प्रतिबन्धरि॥

षट्खण्डागमटीकायां श्रीवीरसेनैर्व्यलेखि—"यथांशावलोकनादंश्यनुमीयते तथाऽपूर्णज्ञानात् पूर्णज्ञानमनुमीयते। सर्वज्ञस्य ज्ञानं पूर्णज्ञानमस्मदादीनाञ्चापूर्णम्" इति।

अत्यन्तपरोक्षेऽर्थे यदि मानवमतिर्न प्रवर्तेत तज्ज्योतिर्ज्ञानस्य सत्यत्वं कथं स्यात्? यदाहुर्भट्टाकलङ्काः—

धीरत्यन्तपरोक्षेऽर्थे न चेत् पुंसां कुतः पुनः।
ज्योतिर्ज्ञानाविसंवादः श्रुताच्चेत् साधनान्तरम्॥

केवलज्ञानं मुक्तावस्थायामपि तिष्ठति। नैयायिका एव मुक्तौ बुद्ध्यादिविशेषगुणानामुच्छेदमिच्छन्ति, न जैनाः; गुणानां (विशेषगुणानां) समुच्छेदे गुणिनोऽप्युच्छेदापत्तेः। इति शम्॥

———

# जैनन्यायस्य विकासक्रमः

श्रीदरबारीलालो जैनः, हिन्दूविश्वविद्यालये जैनदर्शनव्याख्याता ।

## पूर्वपीठिका

यद्यप्यत्र जैनन्यायस्य विकासक्रम एव विचारणीयः, किन्तु ततोऽपि पूर्वं तदङ्गत्वात् तदितिहासस्य तदुद्गमस्य च विचार उचित आवश्यकश्च वर्तते। अतः प्रथमं स एव प्रस्तूयते।

जैनसाहित्यस्याध्ययनेनानुश्रुत्या चेदं परिज्ञायते यत्प्रतियुगं चतुर्विंशतिस्तीर्थङ्करा भवन्ति। अस्मिन् युगे प्रथमं प्रथमतीर्थङ्कर ऋषभदेवो बभूव। प्रजापतिः[1], आदिब्रह्मा, आदिनाथः, वृषभश्च तस्यैव नामान्तराणि। जिनधर्मप्रवर्त्तकत्वेन तदुल्लेखो भागवतपुराणेऽपि समुपलभ्यते। तदनन्तरं क्रमशो विंशतिस्तीर्थङ्करा[2] बभूवुः, येषां सत्ता महाभारतकालतोऽपि पूर्वं निश्चीयते। महाभारतकालेऽरिष्टनेमिनामा द्वाविंशतितमस्तीर्थङ्करो बभूव, यो वसुदेवसहोदरस्य श्रीसमुद्रविजयस्य सुतत्वाद् भगवतः कृष्णस्य भ्राताऽऽसीत्। तदनन्तरमतीते वर्षसहस्रे त्रयोविंशतितमस्तीर्थङ्करः पार्श्वनाथोऽत्रैव काशिराजस्य श्रीविश्वसेनस्य पुत्रः समजनि। ततः पञ्चाशदुत्तरशतद्वयवर्षानन्तरं चतुर्विंशतितमस्तीर्थङ्करो महावीरो बभूव।

इतिहासावलोकनात् प्रतीयते यत्तीर्थङ्कृतामुपदेशं तच्छिष्या गणधरा द्वादशाङ्गरूपेण निबध्नन्ति। तन्निबद्ध उपदेशो 'द्वादशाङ्गश्रुतम्' इति व्यवह्रियते। आर्षम्,

---

१. प्रजापतिर्यः प्रथमं जिजीविषुः शशास कृष्यादिषु कर्मसु प्रजाः।
स विश्वचक्षुर्वृषभोऽर्चितः सतां समग्रविद्यात्मवपुर्निरञ्जनः॥
पुनातु चेतो मम नाभिनन्दनो जिनो जितक्षुल्लकवादिशासनः॥
(समन्तभद्रीये स्वयम्भूस्तोत्रे)

२. अजितः, शम्भवः, अभिनन्दनः, सुमतिः, पद्मप्रभः, सुपार्श्वः, चन्द्रप्रभः, पुष्पदन्तः, शीतलः, श्रेयान्, वासुपूज्यः, विमलः, अनन्तः, धर्मः, शान्तिः, कुन्थुः, अरः, मल्लिः, मुनिसुव्रतः, नेमिश्चेति।

आगमः, सिद्धान्तः, प्रवचनमिति च तस्यैव श्रुतस्य पर्यायनामानि ज्ञेयानि। ऋषभतो महावीरं यावत् सर्वेषां तीर्थंकृतामुपदेशो द्वादशाङ्गश्रुतं कथ्यते। प्रथमतः श्रुतं द्विविधम्—अङ्गबाह्यम्, अङ्गप्रविष्टञ्चेति। तत्राङ्गबाह्यमनेकविधं दशवैकालिकोत्तराध्ययनादि। अङ्गप्रविष्टञ्च द्वादशविधम्—आचारः, सूत्रकृतम्, स्थानम्, समवायः, व्याख्याप्रज्ञप्तिः, ज्ञातृधर्मकथा, उपासकाध्ययनम्, अन्तकृद्दशम्, अनुत्तरौपपादिकदशम्, प्रश्नव्याकरणम्, विपाकसूत्रम्, दृष्टिवादश्चेति। दृष्टिवादः पञ्चविधः—परिकर्म, सूत्रम्, प्रथमानुयोगः, पूर्वगतम्, चूलिकाश्चेति। तत्र पूर्वगतं चतुर्दशविधम्—उत्पादपूर्वम्, आग्रायणीयम्, वीर्यप्रवादम्, अस्तिनास्तिप्रवादम्, ज्ञानप्रवादम्, सत्यप्रवादम्, आत्मप्रवादम्, कर्मप्रवादम्, प्रत्याख्याननामधेयम्, कल्याणनामधेयम्, प्राणावायम्, क्रियाविशालम्, लोकबिन्दुसारञ्चेति[1]।

अङ्गप्रविष्टश्रुतमवलम्ब्य आचार्यैर्या ग्रन्थरचना क्रियते साऽङ्गबाह्यश्रुतपदेनाभिधीयते। तीर्थंकृतामुपदेशं समाकर्ण्य कुशाग्रबुद्धयो गणधराः सङ्कलयन्ति। तत्सङ्कलितः स तीर्थंकृदुपदेश एवाङ्गप्रविष्टसंज्ञां भजते।

श्रुतं बहुविधासु शाखासु, उपशाखासु, प्रशाखासु च विभक्तं वर्तते। सागर इव च तदतिगम्भीरमपारञ्च समस्ति। द्वादशाङ्गश्रुतमवलम्ब्य चोत्तरकालवर्तिन आचार्या नानाविषयकान् ग्रन्थान् रचयन्ति। द्वादशाङ्गेषु दृष्टिवादोऽन्तिममङ्गम्। तस्मिन्[2] विभिन्नवादिनां मान्यतानां निरूपणं तत्समालोचना च भवति। एष दृष्टिवाद एव जैनन्यायस्योद्गमस्थानं वर्तते। अतः श्रुतप्रवाहापेक्षातो जैनन्यायस्योद्गमो भगवत ऋषभदेवस्य द्वादशाङ्गश्रुतगतदृष्टिवादतः सञ्जातः।

---

१. एतेषां विस्तृतं स्वरूपादिविवेचनं श्रीभट्टाकलङ्कदेव( सप्तमशताब्दी )कृते तत्त्वार्थवार्त्तिके, षट्खण्डागम( प्रथमशताब्दीसमय )स्य वीरसेनाचार्य ( नवमशताब्दी )-कृतायां बृहत्यां धवलाख्यायां व्याख्यायाञ्च ( प्रथमपुस्तके पृ० ९९-१२२ ) द्रष्टव्यम्।

२. एषां दृष्टिशतानां त्रयाणां षष्ट्युत्तराणां ( ३६३ ) प्ररूपणं निग्रहश्च दृष्टिवादे क्रियते।

## जैनन्यायस्य विकासक्रमः

भगवत ऋषभदेवतो भगवन्तं पार्श्वनाथं यावत् सकलं द्वादशाङ्गश्रुतं लुप्तम्, अत एवेदानीं नोपलभ्यते। तथा भगवतो महावीरस्य द्वादशाङ्गश्रुतमपि लुप्तमतो द्वादशतमस्य दृष्टिवादाङ्गस्यैवाल्पीयानंशः साम्प्रतमुपलभ्यते। शेषाण्येकादशाङ्गानि द्वादशतमस्याङ्गस्य च बहुभागो लोपमवाप। यद्यपि श्वेताम्बरपरम्परा एकादशाङ्गानामुपलब्धिं द्वादशतमाङ्गस्य च विच्छेदं स्वीकरोति, तथापि प्रामाणिकाचार्याणां परम्परातोऽनुश्रुत्या पुराणानाञ्च विश्वसनीयानेकाख्यानतश्च स्पष्टमेव प्रतीयते यद् भगवतो महावीरतः पूर्वमपि चिरं सः श्रुतप्रवाहोऽविच्छिन्नतयोपलब्ध आसीत्। स मुख्यतया कण्ठस्थिततयैव। तस्मिन् युगे विदुषां धारणाशक्तिरतिबलवत्यासीत्। भगवतो महावीरस्यापि श्रुतप्रवाहस्तन्निर्वाणानन्तरं प्रायः पञ्चशतवर्षाणि यावत् कण्ठस्थित एवासीत्। पश्चात् स प्रवाहोऽतिस्वल्पमात्रया लिपिबद्धो विहितः।

अद्यापि यो दृष्टिवादस्याल्पीयानंशः श्रुतावशेषतयोपलभ्यते, स सहस्रद्वयवर्षेभ्यः प्राग् विक्रमस्य प्रथमशताब्द्यां ग्रन्थरूपेण लिखितः। एतस्मिन्नपि जैनन्यायस्योद्गमबीजानि मिलन्ति। आचार्यवर्याभ्यां श्रीभूतबलि-पुष्पदन्ताभ्यां भूयसा प्रयासेन सङ्कलिते ग्रन्थरूपतया च विलिखिते षट्खण्डागमे—"सिया पज्जत्ता सिया अपज्जत्ता……" अर्थात् स्यात्पर्याप्ताः, स्यादपर्याप्ताः, अपर्याप्ता मनुष्याः कियन्तः? असंख्याताः। तथाऽऽचार्यशिरोमणीनां श्रीकुन्दकुन्दानां प्रवचनसार–पञ्चास्तिकायादिनानाग्रन्थेषु "जम्हा, तम्हा, सिय अत्थि णत्थि……" अर्थाद् यस्मात्, तस्मात्, स्यादस्ति, स्यान्नास्ति प्रभृतियुक्तिगर्भः शब्दप्रयोगः प्रश्नोत्तराणि च प्रचुरमात्रया समवलोक्यन्ते। तदवलोकनेन स्पष्टं प्रतीयते यज्जैनन्यायस्योद्गमस्थानं द्वादशाङ्गश्रुतगतो दृष्टिवाद एव। श्वेताम्बरागमेष्वपि "से केणट्ठेणं भन्ते, एवमुच्चइ", "जीवाणं भन्ते। किं सासया असासया? गोयमा! जीवा सिय सासया सिय असासया। गोयमा! दव्वट्ठयाए सासया भावट्ठयाए असासया" अर्थात् "भगवन्! केन प्रकारेणेदमुच्यते जीवाः शाश्वता अशाश्वताः। गौतम! जीवाः स्याद् शाश्वताः, स्यात् अशाश्वताः। गौतम! द्रव्यदृष्ट्या शाश्वताः, भावदृष्ट्या अशाश्वताः" इत्यादिरूपेण तर्कगर्भाणि प्रश्नोत्तराणि यत्र तत्र समुपलभ्यन्ते। अतश्चेदं वक्तुं पार्यते यज्जैनन्यायस्योद्गमबीजं तेष्वपि निहितमस्ति। सप्तदशशताब्द्यामुपाध्याययशोविजयेन[1]

१. द्रष्टव्यमष्टसहस्रीटीकायाः प्रथमं पृष्ठम्।

स्पष्टरूपेणोक्तं यत् "स्याद्वादार्थो दृष्टिवादार्णवोत्थः" इति। वस्तुतः स्याद्वादन्याय एव जैनन्यायः। अत एव सर्वेषां तीर्थङ्कृतामुपदेशः स्याद्वादन्याययुक्त उक्तः। विक्रमस्य द्वितीयतृतीयशताब्दीमध्ये युगप्रवर्तकाचार्येण श्रीसमन्तभद्रेण महावीरः, तत्पूर्ववर्तिनोऽन्ये तीर्थङ्कराश्च—"स्याद्वादिनो नाथ तवैव युक्तम्[1]" "स्याद्वादस्तावके न्याये[2]", "स्याद्वादन्यायविद्विषाम्"[3] इत्यादिपदप्रयोगतः स्याद्वादन्यायप्रतिपादकाः प्रतिपादिताः। अत इदं सर्वथा युक्तियुक्तं प्रतिभाति यज्जैनन्यायस्योद्गमस्थानं दृष्टिवाद एवेति।

केचित् कथयन्ति यज्जैनन्यायो ब्राह्मणबौद्धन्यायप्रणयनानन्तरं प्रतिष्ठितो बभूव। ततस्तस्योद्गमस्थानं ब्राह्मणन्यायो बौद्धन्यायश्च प्रतीयते। किन्तु नेदं कथनमभ्रान्तम्। यतो हि भगवतो महावीरस्योपलब्धेषूपदेशेषु जैनन्यायस्योद्गमबीजानि प्रचुरमात्रया दरीदृश्यन्ते, विशेषतस्तस्मिन् दृष्टिवादे, यत्र नानावादिनां दृष्टीनां मतानां सिद्धान्तानाञ्च समालोचना पक्षप्रतिपक्षरूपेण युक्तिं प्रतियुक्तिं हेतून् तर्कांश्च प्रदर्श्य विहिता। ततो नात्र कश्चन सन्देहो यज्जैनन्यायस्योद्गमस्थानं जैनं श्रुतमेव।

उक्तकथनस्य पुष्टिरनेन प्रमाणेनापि भवति। जैनन्यायस्य समुद्धर्ता महांस्तार्किको भट्टाकलङ्को न्यायविनिश्चये लिलेख यच्छलजातिनिग्रहस्थानबलेन कैश्चन तार्किकैर्यो जैनन्यायो मलिनीकृतः स मया ज्ञानजलेन निर्मलीकृतः[4]। अनेनोल्लेखेन ज्ञायते यज्जैनन्यायस्य समुद्गमो जैनेतरन्यायतो न जातः। यस्मिन् युगे प्रतिपदं शास्त्रार्थस्य प्रचार आसीत् तस्मिन् युगे जैनन्यायस्य खण्डनमन्यैर्विहितम्। अतस्तस्मादपि युगात्पूर्वं जैनन्यायस्य सत्ता सुतरां सिद्ध्यति।

---

१. द्रष्टव्यः स्वयम्भूस्तोत्रान्तर्गतशम्भवजिनस्तुतेश्चतुर्दशः श्लोकः।

२. द्रष्टव्योऽरजिनस्तोत्रे द्व्यधिकशततमः श्लोकः।

३. द्रष्टव्य आप्तमीमांसायां त्रयोदशः श्लोकः।

४. बालानां हितकामिनामतिमहापापैः पुरोपार्जितै-
माहात्म्यात्तमसः स्वयं कलिबलात् प्रायो गुणद्वेषिभिः।
न्यायोऽयं मलिनीकृतः कथमपि प्रक्षाल्य नेनीयते
सम्यग्ज्ञानजलैर्वचोभिरमलैस्तत्रानुकम्पापरैः॥
(न्यायविनिश्चये श्लो० २)

## जैनन्यायस्य विकासक्रमः

यद्यपि छान्दोग्योपनिषदि 'वाकोवाक्य'संज्ञया शास्त्रविद्याया उल्लेख उपलभ्यते, यदर्थः तर्कशास्त्रम्, उत्तरप्रत्युत्तरशास्त्रम्, युक्तिप्रतियुक्तिशास्त्रं वा क्रियते[१]। ब्राह्मणसाहित्ये आन्वीक्षिकीविद्यायाः चर्चा समवलोक्यते, यदर्थो न्यायशास्त्रं क्रियते[२]। तथा तक्षशिलायां विश्वविद्यालये दर्शनशास्त्रस्य न्यायशास्त्रस्य चाध्ययनाध्यापनयोः प्रबन्ध आसीदिति सङ्केतोऽपि मिलति[३]। तथापि मया नेदमुच्यते यज्जैनन्यायकाले जैनेतरन्यायस्य सद्भाव एव नासीत्, किन्तु मम तु केवलमयमेवाभिप्रायो यज्जैनन्यायस्य समुद्भवो दृष्टिवादतोऽजायत नान्यस्मान्न्यायात्। इदमप्यवश्यमवधेयं यज्जैनेतरन्यायेऽपि क्वचित् क्वचिदनेकान्तसमर्थनस्य शैली विलोक्यते, सापि नूनं दृष्टिवादतः समायाता प्रतिभाति। दृष्टिवादो महान् रत्नाकरः खनिर्वा वर्तते, यत्रानेकान्तद्युतिभाञ्जि नानाप्रमेयरत्नानि प्रचुरतया समुपलभ्यन्ते। आचार्यवर्याः श्रीसिद्धसेनः[४], भट्टाकलङ्कः[५], विद्यानन्द[६]श्चेदमेवाहुः। आचार्यसिद्धसेनो[७] जगाद—यथा समस्ताः सरितः समुद्रं प्रविशन्ति तथा भगवंस्तव शासने समस्ता एकान्तदृष्टयोऽवतीर्णाः। किन्तु यथा पृथक् पृथग् नदीषु नदीपतिर्नावलोक्यते तथा समस्तासु परस्परं

---

१. द्रष्टव्यम्—डाक्टरभगवानदासकृत 'दर्शन का प्रयोजन' पुस्तकस्य पृ० १।

२. "कः पुनरयं न्यायः? प्रमाणैरर्थपरीक्षणं न्यायः। आन्वीक्षिकी न्यायविद्या न्यायशास्त्रम्।" वात्स्यायनकृते न्यायभाष्ये पृष्ठं चतुर्थं द्रष्टव्यम्।

३. विक्रमस्मृतिग्रन्थे ७१८ तमे पृष्ठे श्रीकृष्णदत्तवाजपेयीलिखितः 'प्राचीनभारत के शिक्षाकेन्द्र' शीर्षको निबन्धो द्रष्टव्यः।

४. सुनिश्चितं नः परतन्त्रयुक्तिषु स्फुरन्ति याः काश्चन सूक्तिसम्पदः।
तवैव ताः पूर्वमहार्णवोत्थिता जगत्प्रमाणं जिनवाक्यविप्रुषः॥
(द्वात्रिंशत्कायां १।३० श्लोकः)

५. अवलोकनीयं तत्त्वार्थवार्त्तिके २६५ पृष्ठम्।

६. द्रष्टव्यमष्टसहस्र्यां २३८ पृष्ठम्।

७. उदधाविव सर्वसिन्धवः समुदीर्णास्त्वयि सर्वदृष्टयः।
न च तासु भवानुदीक्ष्यते प्रविभक्तासु सरित्स्विवोदधिः॥
(द्वात्रिंशत्कायां ४।१५ श्लोकः)

भिन्नास्वेकान्तदृष्टिषु तत्र स्याद्वादशासनं न समीक्ष्यते। अतश्चात्रैषोऽर्थः प्रतिफलति यत् स्याद्वादन्यायस्योद्गमः सर्वथा नित्यत्वाद्येकान्तसमर्थकदृष्टितो न जातः, किन्तु स्याद्वादात्मकदृष्टिवादतः[१]। परमिदं सत्यं यत्पश्चाद्वर्तिनि कालेऽन्यन्यायस्य क्रमिक-विकासेन समं जैनन्यायस्यापि विकासः समजायत। अथ चेतरन्यायग्रन्थानां प्रणयनं जैनन्यायग्रन्थानां प्रणयनं प्रति निमित्तं समजनि।

## जैनन्यायस्य विकासक्रमः—

जैनन्यायस्य विकासक्रमः समासतस्त्रिषु कालेषु विभक्तो वर्तते। तद्यथा—

१. समन्तभद्रकालः (ख्रिष्टीयद्वितीयशताब्दीतः सप्तमशताब्दीपर्यन्तम्)

२. अकलङ्ककालः (अष्टमशताब्दीत एकादशशताब्दीपर्यन्तम्)

३. प्रभाचन्द्रकालः (द्वादशशताब्दीतः सप्तदशशताब्दीपर्यन्तम्)

## १. समन्तभद्रकालः

जैनन्यायस्य प्रथमो विकासकालः समन्तभद्रकालोऽस्ति। भारतीयदार्शनिक-क्षेत्रे मुख्यतया जैनदर्शनक्षेत्रे समन्तभद्रो युगप्रवर्त्तकत्वेन समवतीर्णः। पुरा जैनदर्शनस्य प्राणभूतस्य स्याद्वादतत्त्वस्य रूपमागमानुरूपमेवासीत्। तस्मिन् सरलया भाषया सुगमया रीत्याऽऽगमिकतत्त्वानां निरूपणं भवति स्म। विशेषयुक्तिवादप्रयोगस्या-वश्यकता तदा नासीत्। किन्तु समन्तभद्रस्य समये तस्यावश्यकताऽनिवार्यतया बभूव। इदं तु विद्वज्जना जानन्त्येव यद् विक्रमस्य द्वितीयतृतीयशताब्द्यां भारतीयदार्शनिकक्षेत्रे महती क्रान्तिरभूत्। तस्मिन् समये सर्वेष्वपि दार्शनिकेषु क्षेत्रेषु नानाक्रान्तिकारका दार्शनिका बभूवुः। यद्यपि भगवतो महावीरस्य बुद्धस्य च काले वैदिकपरम्परायाः प्रभावो ह्रासमुपगतः, श्रमण-(जैन-बौद्ध)परम्परायाश्च प्रभावः सर्वतो वृद्धिमवाप।

१. सूत्रम् (दृष्टिवादः) अष्टाशीतिलक्षपदैः ८८००००० अबन्धकः, अवलेपकः, अकर्त्ता, अभोक्ता, निर्गुणः, सर्वगतः, अणुमात्रः, जीवा न सन्ति जीवोऽस्ति, पृथिव्यादीनां समुदयेन जीव उत्पद्यते, निश्चेतनः, ज्ञानेन विना सचेतनः, नित्यः, अनित्यः, आत्मेति वर्णयति।.........नियतिवादं विज्ञानवादं शब्दवादं प्रधानवादं द्रव्यवादं पुरुषवादं च वर्णयति।—षट्खण्डा-गमस्य धवलाटीकायां ११० पृष्ठम्।

किन्तु गतासु कासुचिच्छताब्दीषु वैदिकपरम्परायाः प्रभावः पुनः परितः प्रससार। वैदिकैर्विद्वद्‌भिः श्रमणपरम्पराया दार्शनिकेषु विषयेषु क्षोदक्षेमादिकं कृतम्। फलतः श्रमण-( बौद्ध- )परम्परायामश्वघोष-मातृचेट-नागार्जुनप्रभृतयो विद्वांसः प्रादुर्बभूवुः। तैश्च वैदिकसिद्धान्तानां खण्डनं स्वसिद्धान्तानाञ्च मण्डनं प्रबलतया कृतम्। ततो वैदिकपरम्परायामपि प्रतिभामूर्तयः कणाद-बादरायण-जैमिनि-प्रभृतयो विद्वांसः समभवन्। तैश्च वैदिकसिद्धान्तानां संरक्षणायाश्वघोषादिबौद्धविदुषां खण्डनं प्रबलयुक्तिप्रयुक्तिपूर्वकं विहितम्। तस्मिन्नेव च सङ्घर्षकाले द्वयोरपि परम्परयोः ईश्वरकृष्ण-असङ्ग-वसुबन्धु-विन्ध्यवासि-वात्स्यायनादयो विद्वांसः प्रादुर्बभूवु। एवं भारतीये दार्शनिके क्षेत्रे यत्र तत्र स्वपक्षमण्डनाय परपक्षखण्डनाय च बुधा बद्धपरिकरा बभूवुः। प्रायः सर्व एव दार्शनिका मिथो मल्लप्रतिमल्ललीलां धारयामासुः। शास्त्रार्थक्षेत्रं नियुद्धक्षेत्रमनुचकार। तदा ये ग्रन्था अश्वघोष-मातृचेट-नागार्जुन-कणाद-गौतम-जैमिनि-बादरायण-प्रभृतिभिः प्रणीतास्तेषामवलोकनेनोक्तकथनं स्पष्टतया याथार्थ्यं प्रकटयति।

एतस्मिन्नेव समये दक्षिणप्रान्ते प्रतिभामूर्तिः क्षत्रियतेजाः स्वामिपदसमलङ्कृतः श्रीसमन्तभद्राचार्यः श्रमण-(जैन-)परम्परायां समजनि। तस्य कुशाग्रमतिः, सर्वपथीन-पाण्डित्यम्, समन्वयकारिणी दृष्टिश्चासाधारणासीत्। अत एव तस्मिन्नवसरे तदासनं सर्वोपरि स्थानं भूषयामास[1]। तस्मादेव श्रीमता एस०एस०रामस्वामि-आय्यंगरमहोद-येन लिखितम्—

'दक्षिणभारते समन्तभद्रस्योदयो न केवलं दिगम्बरजैनसम्प्रदायस्येतिहासे, किन्तु समग्रसंस्कृतसाहित्येऽप्यसामान्यं युगं समुपस्थापयामास।'[2]

समन्तभद्रस्य समये येषामेकान्तवादानामधिकं प्राबल्यमासीत्, ते भावैकान्त-अभावैकान्त-द्वैतैकान्त-अद्वैतैकान्त-नित्यैकान्त-अनित्यैकान्त-भेदैकान्त-अभेदैकान्त-

---

१. यथोक्तं जिनसेनाचार्येण ( नवम्यां शताब्द्यां ) स्वकीय आदिपुराणे—

कवीनां गमकानां च वादिनां वाग्मिनामपि।
यशः समन्तभद्रीयं मूर्ध्नि चूडामणीयते॥

२. द्रष्टव्यम्—'स्टडीज इन साउथ इण्डियन जैनिज्म' नाम पुस्तकम्।

हेतुवाद-अहेतुवाद-अपेक्षावाद-अनपेक्षावाद-दैववाद-पुरुषार्थवाद-प्रभृतयः सन्ति । एषां समन्वयं कुर्वता समन्तभद्रेणान्यविदुषां गमनार्हः सर्वथा सुखावहो नवीनो मार्गः प्रदर्शितः, स्वयशसा च समस्तं जगत् समुद्भासितम् ।

१—भावैकान्तवादिनो निरूपयन्ति स्म—सकलं वस्तुजातं सर्वथा भावरूपमेव; तथैव तस्यानुभवात्, 'सर्वं सर्वत्र विद्यते' इति प्रतिपादनात् । जगति कोऽपि पदार्थः प्रागभावरूपः, प्रध्वंसाभावरूपः, अन्योन्याभावरूपः, अत्यन्ताभावरूपो वा नास्त्येव । अभाववादिनश्च तद्विपरीतमेव प्रतिपादयन्ति स्म— सर्वं जगच्छून्यमेव वर्तते । 'सकलं जगद् भावरूपम्' इति कथनं तु मृषैव । दार्शनिकानामेष प्रथमः सङ्घर्षः ।

२—अद्वैतवादिनो वदन्ति स्म—निखिलं जगदेकत्वानुस्यूतमेव । नानात्वं सर्वथा मायाविजृम्भितमेव । द्वैतवादिनश्च तद्विपरीतं कथयन्ति स्म–जगन्नानात्मकमेव, भेदरूपेणैव तस्य प्रतीतेः । समस्तजगत एकत्वात्मकत्वे कस्मिन्नपि एकस्मिञ्जाते मृते वा सर्वेषां तत्प्रसङ्गः स्यात् । न तथेष्टं क्वचिद् दृष्टं वा । एष द्वितीयः सङ्घर्षः ।

३—नित्यत्ववादिनो निगदन्ति स्म – समस्तजगन्नित्यमेव । यदि तदनित्यमेव स्यात् तदेकवारं यस्य कस्यापि वस्तुनो जाते नाशे पुनरुत्पत्तिस्तस्य कथं स्यात् । अनित्यत्ववादिनः कथयन्ति स्म—यदि समस्तं जगन्नित्यमेव स्यात् तदा क्वचिद् मनागपि परिवर्तनं न स्यात्, न च भविनां जन्म मरणं विनाशोऽभावो वा कदाचित् स्यात् । एष तृतीयः सङ्घर्षः ।

४—सर्वथा भेदवादिनः कार्यकारणयोः, गुणगुणिनोः, सामान्यसामान्यवतोश्च सर्वथा पृथक्सत्तां मेनिरे । यदि तयोः सर्वथाऽभेद एव स्यात्तदा एकस्मिन्नन्यस्य प्रवेशात् तदस्तित्वमेव नङ्क्ष्यति । सर्वथाऽभेदवादिनः तद्विरुद्धमेव तत्त्वं साधयन्ति स्म—कार्यकारणप्रभृतयो यदि सर्वथा भिन्ना एव तदा भिन्नयोर्घटपटयोर्यथा परस्परं कार्यकारणभावो गुणगुणिभावः सामान्यसामान्यवद्भावो वा नास्ति, तथैव परस्परं सर्वथा भिन्नयोः कार्यकारणयोः गुणगुणिनोः सामान्यतद्वतोर्वा मनागपि कार्यकारणभावादयः सम्बन्धा न भवेयुः । एष चतुर्थः सङ्घर्षः ।

५—अपेक्षैकान्तवादिनो निरूपयन्ति स्म—एकं परापेक्षयैव सिद्ध्यति । इदं को न वेत्ति यत्प्रमेयं तत्प्रमाणापेक्षयैव सिद्ध्यति । ततश्च प्रमेयसिद्धिः प्रमाणापेक्षैव । यदि प्रमेयं प्रमाणापेक्षां न कुर्यात्तदा तत्सिद्धिः कथं स्यात्? अनपेक्षैकान्तवादिन-

श्चोदयन्ति स्म—सर्वेऽपि पदार्थाः परस्परं सर्वथा निरपेक्षा एव। सापेक्षत्वे तयोः परस्पराश्रयान्नैकस्यापि सिद्धिः स्यात्। एष पञ्चमः सङ्घर्षः।

६—हेतुवादिनो वदन्ति स्म—हेतुनैव ( युक्त्यैव ) सर्वं सिद्ध्यति, न प्रत्यक्षादिना। यतो हि प्रत्यक्षतो दृष्टमपि वस्तु यदि युक्तिपथं नावतरति तदा तन्न श्रद्धेयं भवेत्—'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः', 'युक्त्या यन्न घटामुपैति तदहं दृष्ट्वाऽपि न श्रद्दधे' इति बहुलमुपलम्भात्। अहेतुवादिनस्तद्विपरीतमेव मतं स्थापयामासुः—आगमत एव ( वेदादेव ) सर्वं वस्तु निर्णीयते। यदि नेदं मन्यते तद् ग्रहोपरागादीनां ज्ञानं कथं स्यात्; तत्परिज्ञाने हेतोरप्रवेशाद् आगमादेव तन्निर्णयात्। एष षष्ठः सङ्घर्षः।

७—दैववादिनः प्रचोदयन्ति स्म—दैवादेवार्थसिद्धिर्न पौरुषात्, 'भाग्यं फलति सर्वत्र न च विद्या न च पौरुषम्' इत्युक्तेः। यदि दैवमनुकूलं स्यात्तदा किमनुकूलं न भवति—'दैवेऽनुकूले किन्नानुकूलम्।' भाग्यं विना किमपि लब्धुं न शक्यते। 'तादृशी जायते बुद्धिर्व्यवसायश्च तादृशः। सहायास्तादृशाः सन्ति यादृशी भवितव्यता॥' इति प्रसिद्धेः। पुरुषार्थवादिनः कथयन्ति स्म—पुरुषार्थत एव सर्वं सम्पद्यते, पुरुषार्थं विना ग्रासोऽपि मुखं न प्रविशति। एष सप्तमः सङ्घर्षः।

एवं दार्शनिकक्षेत्रे नानासङ्घर्षा आसन्। सर्वेऽपि दार्शनिकाः स्वकीयं पक्षं प्रबलतया समुपस्थापयन्ति स्म बहुभिर्युक्तिभिश्च समर्थयन्ति स्म। किन्तु परेषां दृष्टिकोणं सम्यगवगन्तुं मनागपि न प्रयतन्ते स्म। श्रीसमन्तभद्रेण सर्वेषां दार्शनिकानां दृष्टिकोणानवगन्तुमेव केवलं प्रयत्नो न कृतः, अपि तु तत्समन्वयं कर्तुमपि सफलः प्रयासः कृतः। न केवलं तेन विदुषा स्याद्वादन्यायं तत्प्रयोगप्रक्रियारूपां सप्तभङ्गीमपि चाविष्कृत्य दार्शनिकक्षेत्रतः सङ्घर्षकण्टका एव निष्काषिताः, परं दार्शनिकजगत्यभिनवा क्रान्तिरुत्पादिता जैनविदुषां कृतेऽपूर्वः पन्थाश्च प्रदर्शितः। अत एव तदुत्तरवर्तिभिरकलङ्क-विद्यानन्दप्रभृतिभिस्तार्किकैः स कलौ काले स्याद्वादतीर्थप्रभावकत्वेन स्याद्वादाग्रेसरत्वेन च स्मृतः[१]। मया पूर्वमेवोक्तं यद् यद्यप्यागमेऽपि स्याद्वादस्य सप्तभङ्गीविधया

१. तीर्थं सर्व-पदार्थतत्त्व-विषय-स्याद्वाद-पुण्योदधे-
भव्यानामकलङ्कभावकृतये प्राभावि काले कलौ।...
येनाचार्यसमन्तभद्रयतिना तस्मै नमः सन्ततम्॥ ( अष्ट० श० ६।१ )

योजना समुपलभ्यते[1], तथापि अपेक्षानपेक्षयोः दैवपौरुषयोः हेतुवादाहेतुवादयोः स्याद्वादस्य सप्तभङ्गीप्रक्रियया प्रयोगः प्रथमतः समन्तभद्रेणैव स्वग्रन्थेषु विहितः। तेन 'नययोगान्न सर्वथा[2]', 'नयैर्नयविशारदः[3]'प्रभृतिपदप्रयोगतो नयवादद्वारा वस्तुव्यवस्थाया विधानमुपदिष्टम्, 'कथञ्चित्ते सदेवेष्टम्[4]', 'सदेव सर्वं को नेच्छेत्[5]...' इत्यादिवचनरचनया तद्व्यवहाररूपमपि प्रदर्शितम्।

अमुनाऽऽचार्यमहोदयेन तदा समस्तसङ्घर्षाणामुपशमनं केन विधिना कृतम्? परेषामेकान्तग्रहोपशमनाय च वस्तुव्यवस्थायाः साधनभूतममोघं स्याद्वादाभिधमौषधं केन प्रकारेणाविष्कृतं केन प्रकारेण च प्रयुक्तमिदमेवेदानीं संक्षेपतो विचार्यतेऽत्र।

समन्वयभावनया समन्तभद्रेण प्रथमसङ्घर्षस्य विषये लिखितम्[6]—वस्तुजातं कथञ्चिद् भावरूपं कथञ्चिचाभावरूपम्, न सर्वथा भावरूपं न च सर्वथाऽभावरूपम्, सर्वथा भावरूपतायामभिमतायां प्रागभावस्य प्रध्वंसाभावस्यान्योन्याभावस्यात्यन्ताभावस्य च लोपप्रसङ्गात्[7], तल्लोपे च वस्तुजातमनाद्यनन्तं सर्वात्मकं रूपहीनञ्च स्यात्। वस्तुजातस्याभावरूपतायामङ्गीकृतायां भावस्य विलोपः स्यात्। तद्विलोपे चाभावसाधकस्य ज्ञानस्य वचनरूपस्यान्यस्य वा कस्यचित्प्रमाणस्यापि चाभावाद्भावैकान्तस्य विधिर्भावैकान्तस्य च निषेधः कथं सिद्ध्येत्? सर्वथैकान्तवादे च नोभयरूपता सम्भवति, तयोः परस्परमहिनकुलवद् विरोधात्। न च तयोर्विरोधादवाच्यतैव युक्ता, तस्या अवाच्यरूपत्वादेव वक्तुमशक्यत्वात्। अत एव घटपटादिकं समस्तं वस्तुजातं स्वद्रव्यक्षेत्रकालभावापेक्षया कथञ्चिद् भावरूपं परद्रव्यक्षेत्रकाल-

---

१. सिय अत्थि णत्थि उहयं अव्वत्तव्वं पुणो य तत्तिदयं।
दव्वं खु सत्तभंगं आदेसवसेण संभवदि॥ (पञ्चास्तिकाये, गा० १४)

२. आ० मी० का० १४

३. आ० मी० का० २३

४. आ० मी० का० १४

५. आ० मी० का० १५

६. आ० मी० का० १४–१५

७. आ० मी० का० ९–११

भावापेक्षया च कथञ्चिदभावरूपम् । घटो घटत्वापेक्षया भावरूपः, पटत्वापेक्षया चाभावरूपः । न च भावाभावरूपयोः परस्परं विरोधादेकाश्रयत्वानुपपत्तिः, एकस्मिन्नेवाश्रयेऽपेक्षाभेदतो द्वयोरप्यनुभवात् । अनुभवस्य च प्रमाणतायां न कस्यचिद्विप्रतिपत्तिः । विरोधिरूपमपि यद्यर्थेभ्यो रोचते तर्हि वयं तद्रुचिं निरोद्धुमक्षमाः—'यदीदं स्वयमर्थेभ्यो रोचते तत्र के वयम्' । ततश्च भाववादिनः कथनं यथाऽवितथं तथाऽभाववादिनोऽपि, यद्येकान्ताभिनिवेशो न वर्तेत ।

द्वितीयसङ्घर्षविषये समन्तभद्रेणोक्तम्[1]—सत्सामान्यापेक्षया वस्तुजातमेकरूपम्, द्रव्य-गुण-पर्यायादिविशेषापेक्षया चानेकरूपम् । यदि वस्तुजातं सर्वथैकरूपमेव भवेद् यथाऽद्वैतवादिनो वदन्ति तदा प्रत्यक्षदृष्टाः क्रियाकारकादिभेदा लुप्येरन्[2] । नह्येकस्यैवार्थस्योत्पाद्योत्पादकत्वे सम्भवतः, उत्पाद्योत्पादकयोः परस्परं भिन्नत्वात्, 'नैकं स्वस्मात्प्रजायते' इति वचनात् । अथ च सर्वथाऽद्वैतेऽङ्गीकृते पुण्यपापद्वैतम्, सुखदुःखद्वैतम्, लोकपरलोकद्वयम्, विद्याऽविद्याद्वयम्, बन्धमोक्षद्वयञ्च कथं सिद्ध्येत् । एवमेव वस्तुजातं न सर्वथाऽनेकरूपम् । अन्यथा कथं सन्तानः साधर्म्यं प्रेत्यभावश्च सिद्ध्येयुः । अतश्च वस्तुनः कथञ्चिदेकत्वं सत्सामान्यापेक्षया, कथञ्चिच्चानेकत्वं द्रव्यादिविशेषापेक्षया स्वीकरणीयम् ।

तृतीयसङ्घर्षस्य विषये स्वामिना प्रोक्तम्[3]—वस्तुजातं कथञ्चिन्नित्यं कथञ्चिचानित्यम् । द्रव्यापेक्षया नित्यम्, पर्यायापेक्षया चानित्यम् । वस्तुजातं न केवलं

---

१. सत्सामान्यात्तु सर्वैक्यं पृथग्द्रव्यादिभेदतः ।
भेदाभेदविवक्षायामसाधारणहेतुवत् ॥
(आ० मी० का० ३४)

२. अद्वैतैकान्तपक्षेऽपि दृष्टो भेदो विरुद्ध्यते ।
कारकाणां क्रियायाश्च नैकं स्वस्मात्प्रजायते ॥
कर्मद्वैतं फलद्वैतं लोकद्वैतं च नो भवेत् ।
विद्याऽविद्याद्वयं न स्याद्बन्धमोक्षद्वयं तथा ॥
(आ० मी० का० २४–२७ आदिकारिका द्रष्टव्याः)

३. द्रष्टव्या—आप्तमीमांसा, का० ५६, ३७, ३८; ३९, ४०, ४१, ५१ आदि ।

द्रव्यात्मकमेव परिणामभेदाद् बुद्धिभेदाच्च। न च पर्यायात्मकमेव तत्, 'तदेवेदं यत्पूर्वमासीत्' इत्यभ्रान्तप्रत्यभिज्ञादर्शनात्। सा च वस्तुनः सर्वथाऽनित्यत्वाभ्युपगमे नोदेतुं क्षमा। किञ्च, यदि सर्वथा नित्यमेव वस्तु स्यात् तदा तस्य परिवृत्तिः (विकृतिः) कथं स्यात्? पुण्यपापयोः फलानुभवः प्रेत्यभावः—जन्म, मरणम्, बन्धः, मोक्षश्च कथं सिद्ध्येत्? नित्यत्वैकान्ते यो यथा स तथैव स्यात् परिवर्तनाभावात्। एवं वस्तुजातस्य सर्वथाऽनित्यत्वे 'तदेवेदम्' इति प्रत्यभिज्ञाप्रतीतिर्न स्यात्। क्षणे क्षणे वस्तुनो भिन्नत्वेन य एव बद्ध्यते स एव मुच्यत इति कुतः स्यात्? तत्र ह्यन्य एव बद्धः स्यादन्य एव च मुक्तः स्यात्। बद्धस्यैव मोक्ष इति न स्यात्। एवं कारणादेव कार्योत्पत्तिः कुतः स्यात्? यो दाता स ग्रहीता कथं स्यात्? यस्य हिंसायाः सङ्कल्पः स क्षणिकत्वाद्धिंसां कथं कुर्यात्? क्षणिकत्वादेव च स हिंसायाः फलभाक् कथं स्यात्?

हिनस्त्यनभिसंधातृ न हिनस्त्यभिसन्धिमत्।
बद्ध्यते तद्द्वयापेतं चित्तं बद्धं न मुच्यते॥
अहेतुकत्वान्नाशस्य हिंसाहेतुर्न हिंसकः।
चित्तसन्ततिनाशश्च मोक्षो नाष्टाङ्गहेतुकः॥

अतो मन्तव्यं यद् वस्तुजातं द्रव्यपर्यायात्मकत्वात्कथञ्चिन्नित्यं कथञ्चिच्चानित्यमिति।

एवमन्येषामपि सङ्घर्षाणां परिशमनाय सर्वथाऽभिनवमार्गं प्रदर्श्य दार्शनिकानां पुरतः स्याद्वादन्यायतो वस्तुव्यवस्था समुपस्थापिता। समन्तभद्रस्येयमपूर्वा दृष्टिः, नात्र मनागपि संशीतिः। समन्तभद्रेण स्पष्टमुट्टङ्कितम्[१]—भाव-अभाव-एक-अनेक-नित्य-अनित्यप्रभृतयो यावन्तो दृष्टिभेदाः सन्ति ते सर्वे सर्वथा-प्रयोगतो दुष्यन्ति

---

१. सदेक-नित्य-वक्तव्यास्तद्विपक्षाश्च ये नयाः।
सर्वथेति प्रदुष्यन्ति पुष्यन्ति स्यादितीहिते॥
सर्वथानियमत्यागी यथादृष्टिमपेक्षकः।
स्याच्छब्दस्तावके न्याये नान्येषामात्मविद्विषाम्॥
(स्वयम्भू० का० १०१, १०२)

स्यात्प्रयोगतश्च पुष्यन्ति । निरपेक्षा दृष्टिभेदा अनर्थकृतः सापेक्षाश्चार्थकृतः। विस्तारभियाऽन्येषां सङ्घर्षाणां विषये समन्वयात्मकाः समन्तभद्रीया अन्ये विचारा अत्र नो समुपस्थाप्यन्ते। जिज्ञासुजनैस्तत्कृता आप्तमीमांसा-युक्त्यनुशासन-स्वयम्भू-स्तोत्रप्रभृतयो ग्रन्था अवलोकनीयाः।

आचार्यसमन्तभद्रेण प्रमाण-नय-सप्तभङ्गी-हेतु-प्रमाणफलप्रभृतिजैनन्यायप्रतिपाद्यविषयाणां परिष्कृतानि लक्षणानि व्यवस्थितरीत्याऽभिधाय जैनन्याये नानावर्णनीयान्यङ्गानि प्रत्यङ्गानि च प्रदर्शितानि। एतत्सर्वं समन्तभद्रतः पूर्वं नासीदस्पष्टं वाऽऽसीत्। अत एव समन्तभद्रो जैनन्यायविकासस्य प्रथमयुगस्य प्रतिष्ठापको वर्त्तते। तेन जैनन्यायविकासीयप्रथमयुगस्य तन्नाम्ना सङ्कीर्तनमुचितमेव। समन्तभद्रीयविचारधारा श्रीदत्त-पूज्यपाद-सिद्धसेन-मल्लवादि-सुमतिदेव-पात्रस्वामिप्रभृतिभिस्तदुत्तरवर्तिभिर्जैनाचार्यैः स्वरचितविविधग्रन्थरचनामुखेन प्रसारमार्गं प्रापिता सम्पोषिता च। 'सन्मतितर्कः' समन्तभद्रीयसूत्रात्मकवचनरचनाया विशदोऽनुपमश्च भाष्यभूतो ग्रन्थो वर्त्तते। समन्तभद्रो यं विषयं समासतः प्रतिपादयामास, अथवा यस्य विषयस्य केवलं सङ्केतमेव चकार, तमेव विषयं सिद्धसेनस्तत्पद्धतिमनुसरन् व्यासतो विलिख्य स्वस्यानुपमां प्रतिभां प्रदर्शयामास। समस्तैकान्तवादानां समन्वयं विधाय सिद्धसेनेनानेकान्तवादस्य प्रतिष्ठा संवर्द्धिता। समन्तभद्रयुगे श्रीदत्तेन जल्पनिर्णयः, पूज्यपादेन सारसंग्रहः सर्वार्थसिद्धिश्च, मल्लवादिना नयचक्रम्, पात्रस्वामिना त्रिलक्षणकदर्थनम्, जैनन्यायस्यैते ग्रन्थाः प्रणीताः। एषु ग्रन्थेषु जल्पनिर्णय-सारसंग्रह-त्रिलक्षणकदर्थनाभिधा ग्रन्था इदानीं नोपलभ्यन्ते। केवलं तेषां नामोल्लेखानि पदवाक्यानि चोत्तरवर्तिन्यायग्रन्थेषु दृश्यन्ते। मन्ये समन्तभद्रयुगेऽन्येऽपि ग्रन्था रचिता आसन्। श्रमणानां समयः पठने, पाठने, सदुपदेशे, ग्रन्थप्रणयने च याति स्म। 'साधोः कार्यं तपःश्रुते' इतीदं वाक्यं तस्मिन्

---

य एव नित्य-क्षणिकादयो नया मिथोऽनपेक्षाः स्वपरप्रणाशिनः।
त एव तत्त्वं विमलस्य ते मुनेः परस्परेक्षाः स्वपरोपकारिणः॥
(स्वयम्भू० श्लो० ६१)

निरपेक्षा नया मिथ्या सापेक्षा वस्तु तेऽर्थकृत्।
(आप्तमी० का० १०८)

 

युगेऽद्वारशः सत्यमासीत् । सप्तम्यामष्टम्यां वा शताब्द्यां जातेन प्रसिद्धेन बौद्धविदुषा श्रीशान्तरक्षितेन तच्छिष्येण कमलशीलेन च तत्त्वसंग्रहे तट्टीकायाञ्च सुमति-पात्रस्वामिप्रभृतिजैनतार्किकाणां ग्रन्थानां समालोचना तदंशानुद्धृत्य कृता[1] । किन्तु ते ग्रन्थाः साम्प्रतं नोपलभ्यन्ते[2] । इत्थं समन्तभद्रकाले जैनन्यायस्य योग्यतमा श्रेष्ठतमा च भूमिका निर्मिता ।

## २. अकलङ्ककालः

समन्तभद्रकाले निर्मितायां भूमिकायां येन प्रतिभाभिरामशिल्पिना सर्वाङ्गरम्योऽत्युन्नतो न्याय-प्रासादो निर्मितः स एवाचार्यो 'अकलङ्क' नाम्ना विश्वम्भरायां विश्रुतः । समन्तभद्रस्येवाकलङ्ककालेऽपि दार्शनिकक्षेत्रे महती क्रान्तिरभवत् । एकस्मिन् पक्षे शब्दाद्वैतप्रतिपादको भर्तृहरिः, प्रसिद्धमीमांसको भट्टकुमारिलः, न्यायनिष्णात उद्योतकरः, एवं तत्समर्थका वैदिकविद्वांस आसन् । अपरपक्षे च धर्मकीर्तिः, तच्छिष्यास्तर्कपटुत्वाद्यतिशयविशिष्टाः प्रज्ञाकर-धर्मोत्तर-अर्चट-शान्तरक्षित-कर्णकगोमिप्रभृतयश्च बौद्धतार्किका आसन् । तदात्वे शास्त्रार्थस्य शास्त्रप्रणयनस्य च परम्परा परां काष्ठामवाप । सर्वेऽपि दार्शनिकाः प्राणपणेन स्वपक्षस्योत्कर्षं परपक्षस्य चापकर्षमभिलषन्तो विजयं प्रतिष्ठाञ्च लब्धुं कटिबद्धा आसन् । येन केनाप्युपायेन प्रतिवादिनो विजित्य तेषां तेषां सिद्धान्तानाञ्च परिहास एव तैरानन्दोऽन्वभावि । प्रतिवादिनः प्रति जड-पशु-अह्रीकप्रभृतिनानाऽशिष्टाश्लीलपदानां प्रयोगः प्रायः सार्वत्रिको जातः । वस्तुतः स कालः सत्तर्कस्य मध्यंदिनमासीत्, किन्तु तदा न्यायशास्त्रस्य स्थितिर्विरूपोपहासास्पदमजायत । अनुमानस्योत्कृष्टैर्नियमैश्छलजातिनिग्रहस्थानानि वस्तुनिर्णयकारीणि समुद्घोषितानि । तस्मिन् समये केवलं हेतोरेव शास्त्रार्थस्याङ्गत्वम्, क्षणभङ्गवादः, नैरात्म्यवादः, विज्ञानवादः, शून्यवादश्च सततं समर्थनीयाः सिद्धान्ता आसन् । अक-

---

१. द्रष्टव्यस्तत्त्वसंग्रहः ( पृ० ३७६, ३८६, ३८३ आदि ) ।

२. श्रवणबेलगोलाख्ये नगरे चन्द्रगिरौ शकस्यैकादश्यां शताब्द्यामुत्कीर्णे चतुःपञ्चाशत्तमे सप्तषष्टितमे च शिलालेखे सुमतिसप्तकाख्यस्य तर्कग्रन्थस्योल्लेखः समुपलभ्यते ।

लङ्केन[1] 'न्यायस्य पवित्रः पन्थाः पङ्किलो जातः, समन्तभद्रस्य सोदात्ता स्याद्वादन्याय-भूमिका दूषिता विकृता च संवृत्ता' इति विचार्य कार्यद्वयं विहितम्—१. निर्मलैर्वचः-प्रवाहैर्न्यायमार्गो निर्मलीकृतः । २. अनेके न्यायग्रन्थाः प्रणीताः । अस्य न्याय-ग्रन्थेषु न्यायविनिश्चयाख्यो निबन्धो महीयान् वर्त्तते । अन्ये च त्रयः—सिद्धिविनिश्चयः, प्रमाणसंग्रहः, लघीयस्त्रयश्च तदपेक्षया लघवः सन्ति । अकलङ्कस्यानयोर्द्वयोः कार्ययोः संक्षेपतः परिचयोऽत्र प्रस्तूयते ।

## दूषणोद्धारः

(क) आप्तमीमांसायामाचार्यसमन्तभद्रेण[2] प्राधान्येनाप्तस्य सर्वज्ञता साधिता, सर्वज्ञोपदिष्टस्याद्वादोपदेशस्य च संसिद्धिः कृता । केवलज्ञान-स्याद्वादयोः साक्षादसाक्षाच्च सर्वतत्त्वप्रकाशनकृतो भेदः प्रदर्शितः[3] । अर्थात् केवल-ज्ञानं सर्वतत्त्वानां साक्षात्प्रकाशकं स्याद्वादश्चासाक्षात् । भट्टकुमारिलेन मीमांसा-श्लोकवार्त्तिके धर्मकीर्तिना च प्रमाणवार्तिके क्रमशः सर्वज्ञता स्याद्वादश्च (अनेकान्त-सिद्धान्तः) समालोचितौ । कुमारिलेनोक्तम्—

एवं यैः केवलज्ञानमिन्द्रियाद्यनपेक्षिणः ।
सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥
नर्ते तदागमात्सिद्ध्येन्न च तेनागमो विना ।
(मी० पृ० ८७)

अर्थात् यत् सूक्ष्मादिविषयकमतीन्द्रियं केवलज्ञानं पुरुषस्याभिमतं तज्जैन-मान्यतानुसारेणागमं विना न सिद्ध्यति, आगमश्च तद्विना नोपपद्यते । ततः सार्वज्ञ्यं (केवलज्ञानं) परस्पराश्रयदोषेण दूषितं वर्त्तते ।

---

१. द्रष्टव्या न्यायविनिश्चयस्याद्या कारिका ।

२. द्रष्टव्या आप्तमीमांसा (कारिका ५, ११३) ।

३. स्याद्वाद-केवलज्ञाने सर्वतत्त्व-प्रकाशने ।
भेदः साक्षादसाक्षाच्च ह्यवस्त्वन्यतमं भवेत् ॥
(आप्तमी० का० १०५)

अकलङ्कः कुमारिलस्यैतद्दूषणमुद्धर्तुमित्थमाह—

एवं यत्केवलज्ञानमनुमानविजृम्भितम् ।
नर्ते तदागमात् सिद्ध्येत् न च तेन विनाऽऽगमः ॥
सत्यमर्थबलादेव पुरुषातिशयो मतः ।
प्रभवः पौरुषेयोऽस्य प्रबन्धोऽनादिरिष्यते ॥

( न्यायविनि० का० ४१२-४१३ )

अर्थादिदं सत्यं यत्केवलज्ञानमागमं विनाऽऽगमश्च तद् विना न सिद्ध्यति, तथापि नान्योन्याश्रयदोषप्रसङ्गः, पुरुषातिशयस्य (केवलज्ञानस्य) अर्थबलादेव (प्रतीतिबलादेव) स्वीकरणात् । बीजाङ्कुरवच्च तयोः प्रवाहोऽनादिरिष्टः ।

(ख) धर्मकीर्तिना प्रमाणवार्त्तिके (१-१८३) स्याद्वाद इत्थमाक्षिप्तः—

सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः ।
चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ॥

अर्थात् समस्तं वस्तुजातं यद्युभयरूपं (अनेकान्तात्मकं) स्यात् तदा दधि भोक्तुमाज्ञप्त उष्ट्रमत्तुं कथं नाभिधावति ?

एष आक्षेपोऽकलङ्केनेत्थं समाहितः—

दध्युष्ट्रादेरभेदत्वप्रसङ्गादेकचोदनम् ।
पूर्वपक्षमविज्ञाय दूषकोऽपि विदूषकः ॥
सुगतोऽपि मृगो जातो मृगोऽपि सुगतः स्मृतः ।
तथापि सुगतो वन्द्यो मृगः खाद्यो यथेष्यते ॥
तथा वस्तुबलादेव भेदाभेदव्यवस्थितेः ।
चोदितो दधि खादेति किमुष्ट्रमभिधावति ॥

( न्यायवि० का० ३७२-३७४ )

अर्थाद् दध्युष्ट्रयोरभेदप्रसङ्गात्तयोरेकत्वकथनं धर्मकीर्तेः पूर्वपक्षानवगमस्यैव फलम् । अतश्च स दूषकोऽपि विदूषक एव । तत्र भगवान् बुद्धः पूर्वजन्मनि मृग आसीदन्यस्मिंश्च बुद्धः, तथापि बुद्धो वन्द्यो मृगश्च खाद्य इति यथाऽभ्युपगम्यते, यथा च पर्यायापेक्षया वन्दनीय-भक्षणीययोर्भेदः कर्त्तुं क्रियते । तथा द्रव्यापेक्षया दध्यु-

ष्ट्रयोरेकत्वेऽपि पर्यायापेक्षया नानात्वमस्त्येवेत्यपि कथन्नाङ्गीक्रियते। वस्तुबलादेव भेदाभेदव्यवस्था न कपोलकल्पनया। ततो दधि भोक्तुमाज्ञप्तस्योष्ट्रभक्षणाय धावनं कथं भवितुमर्हति[1] भेदाभेदात्मकत्वं वस्तुनः स्वभावो वर्त्तते। अतः स दुर्निवारः।

एवमकलङ्कप्रकाशिता दूषणोद्धारपद्धतिर्विद्वज्जनानां मनो जरीहर्ति।

## जैनन्यायस्य नवनिर्माणम्

अकलङ्केन जैनन्यायस्याविकसितानामङ्गानां प्रत्यङ्गानाञ्च विकासः कृतस्तत्प्रतिष्ठा च वर्द्धिता। इदं तेषां द्वितीयं महत्वपूर्णं कार्यम्, पूर्वमेव मयोक्तं यदकलङ्केन न्यायशास्त्रविषये चत्वारो निबन्धा लिखिताः। अत एव तैर्न्यायस्य सर्वाङ्गीणविकासकरणमुचितमेव। नीयते ज्ञायते वस्तुतत्त्वं येन स न्यायः। स च प्रमाणनयात्मकोऽभिमतः[1]। प्रमाणतो नयतश्च वस्तुतत्त्वं परिज्ञायते। अकलङ्केन प्रमाणनयगोचरा विप्रतिपत्तीर्निरस्यानयोः प्रमाणनययोः स्वरूप-संख्या-विषय-फलानां विशदतया विवेचनं कृतम्। प्रत्यक्षस्य सांव्यवहारिक-मुख्याभिधौ द्वौ भेदौ प्रतिपादितौ। परोक्षप्रमाणस्य स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदात् पञ्चविधत्वं प्रतिपाद्य तदियत्ताया अवधारणम्, तत्सत्तायाः प्रसाधनम्, तल्लक्षणानाञ्च निरूपणं कृतम्। एष्वेव च भेदेषूपमानार्थापत्तिसम्भवाभावाख्यानामितरदर्शनाङ्गीकृतानां प्रमाणानामन्तर्भावो विभावितः। सर्वज्ञत्वस्य प्रबलयुक्तिभिः साधनम्, अनुमानाङ्गयोः साध्यसाधनयोः लक्षणं भेदनिरूपणञ्च विहितम्। हेतोः पूर्वोत्तरसहचरप्रभृतयोऽवान्तरभेदाः प्रसाधिताः। अन्यथानुपपत्तेरभावेऽकिञ्चित्कराभिधस्याभिनवस्य हेत्वाभासस्य स्वीकारः कृतः, तस्यासिद्धविरुद्धादयो भेदाश्च संसाधिताः। दृष्टान्त-धर्मि-वाद-जाति-निग्रहस्थानादीनां जैनदृष्ट्या व्याख्यानं कृतम्, जयपराजयव्यवस्था च निरूपिता। इत्थं विविधान् न्यायविषयान् परिष्कृत्य प्रतिष्ठाप्य च न केवलं जैनन्यायस्य समृद्धिः कृता, अपि तु भारतीयेषु दर्शनेषु तस्य गौरवास्पदं स्थानमपि समुत्पादितम्। बौद्धन्यायस्य यावानुत्कर्षो धर्मकीर्तिना सम्पादितः, जैनन्यायस्य तावानेवोत्कर्षोऽकलङ्केन। अत एव तस्य युगस्याकलङ्कसंज्ञया कथनं साम्प्रतमेव।

---

१. 'प्रमाणनयैरधिगमः'—तत्त्वार्थसूत्रे १-६।

अकलङ्केन जैनन्यायस्य या दिशा रूपरेखा च निर्धारिता तामुत्तरवर्तिनो जैनाचार्या नातिचक्रमुः। हरिभद्र-वीरसेन-विद्यानन्द-सिद्धसेनगणि-वादिराज-सोमदेव-माणिक्यनन्दिप्रभृतिभिस्तदुत्तरवर्तिभिर्जैनाचार्यैरकलङ्कस्य कार्यं सवर्द्धितं प्रसारितं सम्पोषितञ्च। हरिभद्रेणानेकान्तजयपताका शास्त्रवार्तासमुच्चयश्च, वादीभसिंहेन स्याद्वादसिद्धिः, वीरसेनेन तर्कगर्भा धवलाख्या जयधवलाभिधा च षट्खण्डागमटीका कृता। कुमारनन्दिना वादन्यायः, विद्यानन्देन विद्यानन्दमहोदयः, तत्त्वार्थश्लोकवार्त्तिकम्, अष्टसहस्री, आप्तपरीक्षा, प्रमाणपरीक्षा, पत्रपरीक्षा, सत्यशासनपरीक्षा, युक्त्यनुशासनालङ्कारञ्च, अनन्तवीर्येण सिद्धिविनिश्चयटीका, प्रमाणसंग्रहभाष्यञ्च, सिद्धसेनगणिना तत्त्वार्थाधिगमभाष्यटीका, वादिराजेन न्यायविनिश्चयविवरणम्, प्रमाणनिर्णयश्च, माणिक्यनन्दिना च परीक्षामुखम्, एवमन्यैरपि जैनविद्वद्भिर्नाना-न्यायग्रन्थाः प्रणीताः। अयमकलङ्ककालो जैनन्यायकमलस्य विकासाय मध्यदिनमासीत्।

## ३. प्रभाचन्द्रकालः

अकलङ्ककालानन्तरं प्रभाचन्द्रकालोऽवतरति। स जैनन्यायस्य विकासायापराह्णकालः। प्रभाचन्द्रेण जैनन्यायस्य व्याख्यात्मकौ प्रमेयकमलमार्त्तण्डन्याय-कुमुदचन्द्राभिधौ ग्रन्थौ रचितौ। दिगम्बरजैनपरम्परायां तत्तुल्या ग्रन्थाः पश्चान्न रचिताः। श्वेताम्बरजैनपरम्परायामभयदेवेन सन्मतितर्कटीका, देवसूरिणा च स्याद्वादरत्नाकरः प्रभाचन्द्रपद्धत्या लिखितस्तया प्रभावितश्च। अस्मिन्नेव काले लघ्वनन्तवीर्य-अभयदेव-वादिदेवसूरि-अभयचन्द्र-हेमचन्द्र-मल्लिषेणसूरि-आशाधर-भावसेनत्रैविद्य-अजितसेन-अभिनवधर्मभूषण-नरेन्द्रसेन-चारुकीर्ति-विमलदास-यशोविजयप्रभृतिभिर्विद्वांवरैर्जैनन्यायः सम्पोषितः। लघ्वनन्तवीर्येण प्रमेयरत्नमाला, अभयदेवेन सन्मतितर्कटीका, वादिदेवसूरिणा प्रमाणनयतत्त्वालोकालङ्कारस्तट्टीका च, स्याद्वादरत्नाकरः, अभयचन्द्रेण लघीयस्त्रयस्य वृत्तिः, हेमचन्द्रेण प्रमाणमीमांसा, मल्लिषेणसूरिणा स्याद्वादमञ्जरी, आशाधरेण प्रमेयरत्नाकरः, भावसेनत्रैविद्येन विश्वतत्त्वप्रकाशः, अजितसेनेन न्यायमणिदीपिका, चारुकीर्तिना अर्थप्रकाशिका, अभिनवधर्म-

भूषणेन न्यायदीपिका, नरेन्द्रसेनेन प्रमाणप्रमेयकलिका, विमलदासेन सप्तभङ्गीतरङ्गिणी, यशोविजयेन ज्ञानबिन्दुः, जैनतर्कभाषा, अष्टसहस्रीटिप्पणञ्चोल्लेखनीया न्यायग्रन्थाः प्रणीताः। एषु विद्वत्सु द्वाभ्यामन्तिमाभ्यां नव्यन्यायशैल्या ग्रन्था लिखिताः।

इत्थं जैनविद्वद्भिर्जैनन्यायस्यानेके ग्रन्था निर्मिताः। ये चाद्यापि सुरभारतीभवनं समलङ्कुर्वाणा न्यायवाङ्मयस्य श्रियं गौरवञ्च संवर्धयन्ति। इति शम्॥

# शून्यवादव्याख्यारूपा नूतनकारिका

डॉ० श्रीरामकुमारचतुर्वेदः, मोतीझीलवाराणसीस्थः ।

शून्यमदः शून्यमिदं शून्यात् शून्यमुदच्यते ।
शून्यस्य शून्यमादाय शून्यमेवावशिष्यते ।।

यदा कश्चित् साधारणोऽपि नियमः सूत्ररूपतां कारिकारूपतां वाऽऽप्नोति तदा स व्यापकत्वमावहतीति विज्ञाने दर्शनशास्त्रे चातिप्रसिद्धम् । अत एव शास्त्रेष्वपि परिभाषाया महत्त्वम् । वेदान्तेष्वपि बहूनि सूत्राणि कारिकाश्च दृष्टान्तरूपेणोपलभ्यन्ते । यथा—"सर्वं खल्विदं ब्रह्म",

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

इत्यादीनि । नागार्जुनः शून्यवादस्य माध्यमिकसिद्धान्तस्य वा प्रचारक आसीत् । यद्यपि नागार्जुनस्य स्थितिकालोऽद्यावधि अनिर्णीत एवास्ति, तथापि तस्य प्रगाढवैदुष्यं पूर्णपाण्डित्यं प्रतिभासम्पन्नत्वञ्च जगद्विख्यातं वर्तते । अत एव तस्य महती कीर्तिश्चिरकालतोऽधुनाप्यक्षुण्णा तिष्ठति स्थास्यति च ।

नागार्जुनस्य विशिष्टरचना माध्यमिककारिका अस्ति । माध्यमिककारिकाया उपरि आचार्यमल्लकृतः प्रज्ञाप्रदीपः, तथा आचार्यचन्द्रकीर्त्तिना विरचिता 'प्रसन्नपदा' इत्यादयो महत्त्वशालिन्यो वृत्तयः सन्ति । प्रज्ञापारमिताशास्त्रम्, दशभूमिविभाषाशास्त्रम्, दशभूमिसूत्रस्य वृत्तिश्च महायानसिद्धान्तानां विश्वकोष एव ।

प्रसिद्धेषु शून्यवादाचार्येषु आर्यदेवः ( २००–२२४ ईश० ) चतुःशतकनिर्माता बभूव । यत्र धर्मपालेन चन्द्रकीर्त्तिना च टीका कृता, तथा हूएन-च्वांगनामकेन चीनदेशीयेन विदुषा ६५० ईशवीयवर्षस्य समीपेऽस्य चीनीभाषायामनुवादः कृतः । चीनीभाषायामस्याभिधानं शतशास्त्रवैपुल्यमिति वर्तते । इदं च पुस्तकं प्रामाणिकं प्रमेयबहुलञ्च वर्तते ।

बुद्धिपालितः (५ शताब्दीभवः) प्रमाणभूताचार्येष्वन्यतमः। अनेन रचिता वृत्तिरधुना भोटभाषायामुपलभ्यते।

भावविवेकनाम्ना प्रसिद्धः कश्चिदन्य आचार्यो वर्तते। अनेन रचितः प्रज्ञाप्रदीपोऽधुना भोटभाषायामनूदित एवोपलभ्यते। अनेन निर्मिता अन्ये ग्रन्था मध्यमहृदयकारिका, परमार्थसङ्ग्रहः, हस्तरत्नमित्यादयः सन्ति।

आचार्यचन्द्रकीर्त्तिर्विश्वविख्यातस्य नालन्दाविश्वविद्यालयस्य मुख्याध्यापकेष्वन्यतम आसीत्। अनेन निर्मिता ग्रन्था इमे—१ माध्यमिकावतारः,२ प्रसन्नपदा, ३ चतुःशतकवृत्तिश्चेति।

आचार्यशान्तरक्षितः (८ शताब्दीयः) नालन्दाविश्वविद्यालयेऽध्यापक आसीत्। अयञ्च निमन्त्रितो भूत्वा तिब्बतदेशं गतः। अस्य प्रसिद्धो विपुलकायः प्रामाणिकश्च ग्रन्थस्तत्त्वसंग्रहोऽस्ति।

शून्यशब्दो ब्राह्मणदर्शनेषूपलभ्यते। अस्यार्थस्तत्र सर्वत्र सकलसत्ताया निषेधः। नागार्जुनात् पूर्वं हीनयानेष्वपि शून्यवादस्योल्लेख उपलभ्यते। संयुत्तनिकाये कात्यायनवादे शून्यताया उल्लेखोऽस्ति, यतो हि तत्र सदसतोरुभयोरपि निषेधः कृतो विद्यते। चन्द्रकीर्त्तिना प्रसन्नपदायां प्रदर्शितं यत् प्रज्ञापारमितासूत्रस्य मूलं पूर्वशैलापरशैलानुयायिनोरुभयोरपि मान्यमासीत्। (द्रष्टव्यम्—कीथरचिते बौद्धदर्शने २१६ पृष्ठे)। एवं महायानग्रन्थानामवलोकनेन स्पष्टमिदं प्रतीयते यत् प्रारम्भिकं बौद्धदर्शनं प्राधान्येन सर्वास्तिवादेन प्रभावितमपि बीजरूपेण शून्यवादमपि बिभर्ति स्म। शून्यवादस्य निष्कर्षो नागार्जुनस्य प्रथमायां सप्तम्यां च कारिकायां वर्णितो दृश्यते। तद्यथा—

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावा क्वचन केचन॥
न सन् नासन् न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥ इति।

आचार्यनागार्जुनेन द्विविधा सत्ता स्वीकृता—पारमार्थिकी सांवृतिकी च। तथ्यसंवृति-मिथ्यासंवृतिभेदेन संवृतिरपि द्विधा। परमार्थस्त्वितो विलक्षण एव। शून्यं त्रिकालाबाधितत्वेन परमार्थरूपम्। तत्तु योगिजनैरेव प्रत्यक्षीक्रियते।

## शून्यवादव्याख्यारूपा नूतनकारिका

सर्वे धर्माः स्वभावरहिता इति नागार्जुनस्य परमः सिद्धान्तः। परपक्षखण्डनरतस्यास्य नहि कश्चिदपि स्वकीयः पक्षः। 'सर्वे धर्माः स्वभावरहिताः' अस्य तात्पर्यं शून्यत्वमेव, यद्धि परमार्थसद् विद्यते। शून्यवादो निषेधात्मकः। अनेन सर्वस्य निषेध एव, सर्वत्र दोषोद्भावनमेव कृतं वर्तते। अनयैव च पद्धत्या शून्यवादस्य पारमार्थिकी सत्यता प्रतिपादितास्ति।

नागार्जुनमतेन चत्वारि आर्यसत्यान्यपि न सन्ति, प्रतीत्यसमुत्पादः, प्रमाणम्, गतिः, गन्ता, गन्तव्यं चेति सर्वाणि न सन्ति। अध्वत्रयम्, द्रष्टा, द्रष्टव्यम्, दर्शनम्, संस्कृतधर्माः, पुद्गलः त्रिकायवादश्च न सन्ति। तेन तथागतस्यास्तित्वम्, अन्ततो निर्वाणमपि च निषिद्धम्। एवं शून्यवादो निषेधात्मकः। केवलं शून्यमेव तत्र परमार्थसद्विद्यते। अतः—

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

इति वाक्यपद्धत्या—

शून्यमदः शून्यमिदं शून्यात् शून्यमुदच्यते।
शून्यस्य शून्यमादाय शून्यमेवावशिष्यते॥

इत्यस्या नूतनायाः शून्यवादव्याख्यामूलायाः कारिकाया अपि निर्माणं समुचितमेव॥

---

# प्रतीत्यसमुत्पादसिद्धान्तः

श्रीपरमानन्दशास्त्री, बिहारराष्ट्रभाषापरिषद्, पटना।

य: प्रतीत्यसमुत्पादवादो बौद्धैर्विपश्चितः।
तस्योत्पादविकासौ हि व्यवस्थातुं व्यवस्थितः॥
श्रीयनिरुद्धपदाम्भोजमधुपायितमानसः।
आचार्यः परमानन्दशास्त्री मैथिलभूसुरः॥

सर्वोऽपि हि जन्तुः स्वस्वज्ञानशक्त्या क्रियाशक्त्या च यावच्छक्ति सुखप्राप्तये दुःखनिवृत्तये च सर्वदा यतत एवेत्यत्र नास्ति विप्रतिपत्तिलेशोऽपि प्रेक्षावताम्। यतो हि सर्वेषाञ्च प्राणिनां नैसर्गिकी प्रवृत्तिरात्मसुखाय सर्वेष्वपि देशेषु कालेषु च सर्वेषु सर्वैरेव हि प्रेक्षावद्भिरीक्षितचरैव।

व्यतिकरे चात्र दुःखं वर्त्तमानमनागतं चेति द्विविधाकारम्। सुखमपि सातिशयं निरतिशयं चेति द्वैविध्यमुपगतम्। तत्रापि निरतिशयं सुखं सर्वतोऽधिकमभिलष्यते जनैरित्यत्रापि नैव प्रसरति लेशमपि विप्रतिपत्तेरवसरः। एतदेव च निरतिशयं सुखं पुरुषार्थप्रधानीभूतं मोक्षशब्देनात्यन्तिकदुःखनिवृत्तिरूपार्थसूचकेन निर्वाणपदेन च तत्तद्दर्शनेषु प्रतिपादितमित्यपि सम्प्रति सार्वजनीनमेव। येषां च दर्शनकाराणां श्रौत-दार्शनिकतार्किकदार्शनिकेति भेदद्वयमपि क्वचित् क्वचिदुपलब्धमुपलभ्यत एव। प्रथमे च पक्षे मीमांसका वेदान्तिनश्च। द्वितीये च सर्व एव दर्शनप्रभेदा आस्तिका नास्तिकाश्च।

इदमपि सम्प्रति नाविदितचरं विदुषां यत् तार्किकदार्शनिकेष्वर्हन्त एव सर्वथाऽर्हन्ति प्राथमिकताम्। अर्हत्वं च बौद्धजैनोभयपर्याप्तमित्यपि साधारं वक्तुं साम्प्रतम्। अर्हत्स्वरूपं च हेमचन्द्रसूरिभिराप्तनिश्चयालङ्कारे यद्यप्येवं निरटङ्कि—

सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः।
यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः॥

तथापि सारिपुत्रप्रभृतीनां तथागतप्रमुखशिष्याणामर्हद्भावप्रतिपादकप्रमाण-निकरैर्भगवतो बुद्धस्यापि तत्ताकल्पनमपि कल्पनापोढमेव।

स्मरति चात्र—

उपदेशोऽपि बुद्धस्य धर्माधर्मादिगोचरः ।
अन्यथा नोपपद्येत सार्वज्ञं यदि नाभवत् ॥ इति ।

वयं तु युक्तमुत्पश्यामः । द्विविधा ह्यर्हन्तः—अनैकान्तिकाः, ऐकान्तिकाश्च । जिनस्य हि तर्कसहायेन वस्तुस्वरूपयाथातथ्यमन्वेषयतोऽपि 'इदमीदृशमेव' इति न क्वापि निश्चिताऽभून्मतिः । केनचिदिदं दुःखमित्युक्ते स्याद्दुःखमित्यमुष्य मतिः । इदं सुखमित्युक्तेऽपि स्यात् सुखमित्येव मतिः । अत एव चानिश्चयार्थकानेकान्तद्योतकनिपातपदेन 'स्यात्' इत्यनेनैषां वादः 'स्याद्वाद' इति सर्वत्रोद्घोषितः । तथागतस्य च भगवतस्तर्कसहायेन वस्तुस्वरूपयाथातथ्यमन्वेषयतः पुनः सर्वत्रैव निश्चयात्मिका मतिरुदभूत् । तेन हि 'इदम् ईदृशमेव' इत्यवधारितं सम्यक् । अत एव चास्योपदिष्टं तत्त्वचतुष्टयमार्यसत्यमित्युच्यते लोकैः । प्रतीत्यसमुत्पादसिद्धान्तश्चात्र सर्वसिद्धान्तानां मूलम् ।

## प्रतीत्यसमुत्पादपदार्थः

प्रतीत्यसमुत्पादवाद एव हि बौद्धदर्शनस्य सर्वसम्मत आधारपीठो यत्र प्रतिष्ठितो भूत्वा तथागतसिद्धान्तोऽद्यत्वेऽपि मानवजातेर्निरतिशयं मङ्गलमाचरति ।

तत्रभवतो नागार्जुनस्य मतेन सोऽयं वादो माध्यमिककारिकायाम्—

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम् ।
अनेकार्थमनानार्थमनागममनिर्गमम् ॥
यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवम् ।
देशयामास सम्बुद्धस्तं वन्दे वदतां वरम् ॥

इति तथागताभिवादनव्याजेन संस्तुतः ।

अस्मिन् सतीदं भवति, अस्योत्पादादयमुत्पद्यत इतीदं प्रत्ययार्थः प्रतीत्यसमुत्पादार्थ इति माध्यमिकवृत्तिः (९म पृष्ठे)। अतश्च कमपि वस्तुविशेषमाश्रित्यैवान्यद् वस्तूत्पद्यते । अकारणं च न किमपि वस्तूत्पद्यत इति प्रतिनियतः कार्यकार्यकारणभावः प्रतीत्यसमुत्पादस्य फलम् । यदीयश्च प्रत्ययपदार्थः कल्पतरौ (२।२।१९) विवृतो यथा—हेतुमन्यं प्रति अयते गच्छतीति इतरसहकारिभिर्मिलितो

हेतुः प्रत्यय इति। कारणकूटव्यतिरेकविशेषवशेन चास्य द्वादशाङ्गता प्रतीत्य-समुत्पादस्याभिधर्मकोशे (३।२०) स्पष्टमुद्भाविता।

स प्रतीत्यसमुत्पादो द्वादशाङ्गस्त्रिकाण्डकः।
पूर्वापरान्तयोर्द्वे द्वे मध्येऽष्टौ परिपूरणाः॥

इति हि तत्राचार्यवर्याणां धर्मकीर्त्तिपादानां वचः। अविद्या (१), संस्काराः (२), विज्ञानम् (३), नामरूपे (४), षडायतनानि इन्द्रियाणि (५), स्पर्शः (६), वेदना (७), तृष्णा (८), उपादानम् (९), भवः (१०), जातिः (११), जरामरणे (१२) चेति द्वादशाङ्गानि, यत्र प्रथमयोर्द्वयोरविद्यासंस्कारतत्त्वयोरतीतेन जन्मना चरमयोश्च द्वयोर्जातिजरामरणतत्त्वयोरनागतेन जन्मना शेषाणां चाष्टानां विज्ञानादिभवान्तानां वर्त्तमानेन जन्मना सम्बन्धः सविशेषं प्रतिपादित एव। अत एव च—

पञ्च गतयः कर्त्तव्याः—नारकाः, तिर्यञ्चः, प्रेताः, देवाः, मनुष्याश्च। तत्राध-स्तान्नारकाः कर्त्तव्यास्तिर्यञ्चः प्रेताश्चोपरिष्टाद् देवा मनुष्याश्च चत्वारो द्वीपाः कर्त्तव्याः पूर्वविदेहोऽपरगोदानीय उत्तरकुरुर्जम्बूद्वीपश्च। मध्ये रागद्वेषमोहाः कर्त्तव्याः। रागः पारावताकारेण, द्वेषो भुजङ्गाकारेण, मोहः शूकराकारेण। बुद्धप्रतिमाश्चैत-न्निर्वाणमण्डलमुपदर्शयन्त्यः कर्त्तव्याः। औपपादुकाः सत्त्वा घटीयन्त्रप्रयोगेण च्यव-माना उपपद्यमानाश्च कर्त्तव्याः। समन्तकेन द्वादशाङ्गः प्रतीत्यसमुत्पादोऽनुलोम-प्रतीलोमः कर्त्तव्यः। सर्वमनित्यतया ग्रस्तं कर्त्तव्यम्। गाथाद्वयं च लेखितव्यम्—

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनित मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥
यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥

इति दिव्यावदान( २१, पृ० ३०० कावेल सं० )वचनोक्तः प्रतीत्यसमुत्पादवाद-चित्रणप्रकारोऽपि संगच्छते। संगच्छते च—

अनुलोमप्रतिलोमद्वादशाङ्गः प्रतीत्यसमुत्पादो लिखितव्यो गाथाद्वयं च लेखयितव्यम्।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनित मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥
यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति ।
प्रहाय जातिसंस्कारं दुःखस्यान्तं करिष्यति ॥

इति च (तत्रैव ५४७ पृष्ठे) भगवतो बुद्धस्यैव प्रतीत्यसमुत्पादचित्रणदेशना ।

अत एव हेतुक्रियपरम्परावादोऽयं प्रतीत्यसमुत्पादवाद इति साधु प्रतीमः। यतो हि बुद्धचरिताख्यापकपरमप्रमाणीभूतस्य ललितविस्तरस्यैव वचसा "तथागतस्य तारायणमूले विहरतः प्रथमाभिसंबुद्धस्यैकस्य रहोगतस्य प्रतिसंलीनस्थ लोकानुवर्तिनां प्रत्येतदभवत् ।...तस्यां च वेलायामिमां गाथामभाषत ।...

न च पुनरिह कश्चिदस्ति धर्मः
सोऽपि न विद्यति यस्य नास्ति भावाः ।
हेतुक्रियपरम्परा य जाने
तस्य न भोति ह अस्तिनास्तिभावाः ॥ इति ।

मते चैतेषाम्—

...म्रियति न चेह न कश्चि जायते वा ।
प्रकृति इति निरात्मसर्वधर्मा
तदमां व्याकरि बुद्धदीपनामा ॥

इति च तत्रैव ललितविस्तरेऽध्येषणापरिवर्त्ते। कौण्डिन्यायापि परमकारुणिकेन भगवता तथागतेन च यदुपदिष्टं ततोऽपि हेतुक्रियपरम्परावाद एवायाति पर्यालोचनाप्रस्थानेन ।

इदमत्रावबोद्धव्यम्—ज्ञानिनामत्रभवता भगवता बुद्धेन यस्य हि ज्ञानस्य साग्रहं देशना कृता, तत्र संसारस्यार्थो भवचक्रमेव प्रागुपदर्शितरूपम् । संसारोऽयं क्षणिको दुःखमयश्च । अविद्या चास्य संसारस्य जननी, सर्वेषाञ्चैव दुःखानां परं कारणकारणमपि । अविद्यानाशाच्च ज्ञानजनिताद् दुःखोच्छेद इति ।

अविद्यायाश्चास्या वराक्याः संसारकारकता सुत्तनिपातेऽपि भगवता स्पष्टमेवमुक्ता । यथा—

प्रतीत्यसमुत्पादसिद्धान्तः

जातिमरणसंसारं ये वजन्ति पुनप्पुनम् ।
इत्थभावञ्ञथाभावं अविज्जायेव सागति ॥ इति ।

विद्यागतानां निर्वाणमपि तत्रैवैवं स्पष्टीकृतम् । यथा—

अविज्जा इयं महामोहो येनिदं संसितं चिरम् ।
विज्जागता च ये सत्ता नागच्छंति पुनब्भवंति ॥ इति ।

अविद्याप्रत्ययतो दुःखस्कन्धसमुदयो निरोधाच्च दुःखस्कन्धनिरोधो महावस्तावपि स्पष्टमुक्तः । यथा—"अविद्याप्रत्ययाः संस्काराः, संस्कारप्रत्ययं विज्ञानम्, विज्ञानप्रत्ययं नामरूपम्, नामरूपप्रत्ययं षडायतनम्, षडायतनप्रत्ययं स्पर्शः, स्पर्शप्रत्यया वेदना, वेदनाप्रत्यया तृष्णा, तृष्णाप्रत्ययमुपादानम्, उपादानप्रत्ययो भवः, भवप्रत्यया जातिः, जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपयासाः । एवमस्य महतो दुःखस्कन्धस्य समुदयो भवति ।"

अपि च "अविद्यानिरोधात् संस्कारनिरोधः, संस्कारनिरोधाद् विज्ञाननिरोधः, विज्ञाननिरोधान्नामरूपनिरोधः, नामरूपनिरोधात् षडायतननिरोधः, षडायतननिरोधात् स्पर्शनिरोधः, स्पर्शनिरोधाद् वेदनानिरोधः, वेदनानिरोधात् तृष्णानिरोधः, तृष्णानिरोधादुपादाननिरोधः, उपादाननिरोधाद् भवनिरोधः, भवनिरोधाज्जातिनिरोधः, जातिनिरोधाज्जरामरणनिरोधः, जरामरणनिरोधात् शोकपरिदेवदुःखदौर्मनस्योपयासा निरुध्यन्ते । एवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोधो भवति ।" [ ३यभागे ४४६ पृ० ] । संस्कारोत्पत्तिनिरोधावपि सहेतुप्रत्ययकौ भगवता यदुक्तौ तदपि महावस्तावेवं स्पष्टमुट्टङ्कितम् । तथा हि—"अथ खलु संस्कारा एव उत्पद्यन्ति संस्कारा एव निरुध्यन्ति । ते च सहेतुप्रत्यया उत्पद्यन्ति, सहेतुप्रत्यया निरुध्यन्ति" इति [ ३ये भागे ४४८ पृष्ठे ] ।

तदयं परमार्थः—(मम)

बुद्धिगम्यः पदार्थो यः सापेक्षः सर्व एव सः ।
अविद्या कारणं तस्य भवचक्रप्रवर्त्तने ॥
अविद्यायां विनष्टायां प्रज्ञप्तिर्जायते नृणाम् ।
प्रपञ्चशून्यताज्ञानं स्वयमेव प्रजायते ॥

चतुष्कोटिविनिर्मुक्तं सर्वं तत्त्वं हि वस्तुतः ।
नैव शून्यं न चाशून्यं नोभयानुभयात्मकम् ॥
स्वभावशून्यं कथितं केवलं व्यवहारतः । इति ।

अत एव च—

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे ।
सा प्रज्ञप्तिरुपादाय प्रतिपत् सैव मध्यमा ॥

इति माध्यमिककारिका (२४।१८) आचार्यनागार्जुनस्य संगच्छते ।

## प्रतीत्यसमुत्पादवादभेदौ

इदमप्यधुना नाविदितं विदुषां यदस्य प्रतीत्यसमुत्पादवादस्य द्वयी विधापि भगवता तथागतेनैव प्रतिष्ठापिता ।

यदा इमे प्रादुर्भवन्ति धर्मा आतापिनो ध्यायतो ब्राह्मणस्य ।
अथास्य काङ्क्षा व्यपनेति सर्वा यदा प्रजानाति सहेतुधर्मा ॥

अयमनुलोमो प्रतीत्यसमुत्पादः ।

यदा इमे प्रादुर्भवन्ति धर्मा आतापिनो ध्यायतो ब्राह्मणस्य ।
अथास्य काङ्क्षा व्यपनेति सर्वा क्षयं प्रत्ययानाम् अवैति ॥

अयं प्रतिलोमः प्रतीत्यसमुत्पादः ।

(महावस्तु २ भागे १६-१७ पृ०)

प्रादुर्भावनिरोधोभयभेदवतश्चास्य प्रतीत्यसमुत्पादवादस्य तथागतधर्माभिन्नरूपतापि स्पष्टमुद्भाविता तत्रभवता भगवता गौतमीपुत्रेणैव—

यो पटिच्चसमुप्पादं पस्सति सो धम्मं पस्सति ।
यो धम्मं पस्सति सो पटिच्चसमुप्पादं पस्सति ॥

(मज्झिमनिकाये महाहत्थिपदोपमसुत्ते)

यः प्रतीत्यसमुत्पादं पश्यतीदं स पश्यति ।
दुःखं समुदयं चैव निरोधं मार्गमेव च ॥

इत्याचार्यनागार्जुनोऽपि (माध्यमिककारिकायाम् २४।४०)। यतो हि जगतः प्रतीत्यसमुत्पन्नत्वाभावकल्पने उत्पाद-स्थिति-भङ्ग-बन्ध-मोक्षादिका व्यवहारा

नोपपद्यन्ते, सतोऽहि जगतस्त्रिकालाबाधसत्ताकत्वात्, असतो वा जगत उत्पाद-स्थित्याद्यसंभवात्। प्रतीत्यसमुत्पादत्वपरिकल्पने च प्रतीत्युपादानौ परित्यजदिदं जगद् द्वयं प्रपञ्चरहितं परमार्थमिव जायत इति सर्वमेवोपपद्यते। तथा हि—यदिदं जगत् प्रतीत्युपादानावभिलक्ष्य भवचक्रमिव प्रवर्त्तते तदेवेदमप्रतीत्यनुपादानावभिलक्ष्य निर्वाणमिति भवति। अतश्च—

निर्वाणस्य च या कोटिः कोटिः संसरणस्य च।
न तयोरन्तरं किञ्चित् सुसूक्ष्ममपि विद्यते॥

इत्याचार्यनागार्जुनोक्तापि सम्यगुपपद्यते माध्यमिककारिका (२५।२०)।

## वादस्यास्य पूर्वानुसङ्गिता

इदमपि नाविदितचरं विदुषां यद् बौद्धप्रस्थानमूलभूतस्य प्रतीत्यसमुत्पाद-वादस्यास्यापि पूर्वानुसङ्गिता सुस्पष्टा। भारतीयगणतन्त्रराष्ट्रराष्ट्रपतिपदमलङ्कुर्वतो विपश्चिद्वरेण्यस्य सर्वपल्लिराधाकृष्णन्शर्मणोऽपि स्पष्टमुक्तिरियं यद् बौद्धमतं जैनमतं च सांख्यसिद्धान्ताधारीति केचन विवेचकाः। सांख्यसिद्धान्त-मात्रप्रचारको बौद्धवाद इति (प्रसिद्धपाश्चात्त्यविद्वान्) बर्नूफमहोदयः। गौतमो बौद्धः कपिलः सांख्यसिद्धान्ताचार्यश्चैक एवेत्यपि नासम्भवीति वेवरमतम्। भवन्ति चात्र—

वस्तुसत्तादिसम्बन्धे समानौ सांख्यसौगतौ।
द्वयोः समीक्षया सम्यग् वक्ति पाश्चात्त्यविल्सनः॥
द्वैतवादे तत्त्वसंख्यानिर्णये चापि भूयसा।
गार्वेजाकोबिकौ ब्रूतो बौद्धात् सांख्यस्य पूर्वताम्॥
अविद्यायाः प्रधानेन संस्कारस्य मनीषया।
अहङ्कारेण विज्ञानसमता स्पष्टलक्षिता॥
सांख्यप्रवचने भाष्ये चतुःसत्यं यदीरितम्।
चतुर्णामार्यसत्यानां तुल्यमेवेति निश्चितम्॥
तिर्येन्ताहंसम्प्रदायश्चीनदेशेऽभिलक्षितः।
बौद्धाश्वघोषसिद्धान्ताधारीत्यपि मतं मम॥

चीचेताशी नाम महाविद्वान् चीनेऽतिविश्रुतः।
सद्धर्मपुण्डरीकाख्यमुपजीव्यैव सुस्थितः ॥
केगोनसम्प्रदायश्च योगाचारमतानुगः।
तूफाशुना चीनदेशे स्थापितः केन न श्रुतः ? ॥
सिगोनसम्प्रदायश्च वज्रबोधिप्रचारितः।
चीने तथा च जापाने देशेऽद्याप्युपलभ्यते ॥
अद्याप्यखिलविश्वस्य दृष्टः सर्वमहानयम्।
धर्मो बौद्धः सुप्रतीत्यसमुत्पादत्वमूलकः ॥

इति ( मम )।

## उपसंहारः

एतस्य हि विश्वविश्रुतस्य बौद्धधर्मस्य परमाधारभूतो यः प्रतीत्यसमुत्पाद-वादस्तस्य याथातथ्येनोत्पादविकासव्याकरणमस्मादृशैरल्पज्ञैरतीव दुष्करमेव, तथापि संक्षेपत एव योऽयं प्रयासो मया विहितस्तत्र भगवतो बुद्धस्यैव परमकारुणिकता शम्बलम्।

नमो वाच्यावाच्यमपि दयया येन देशितम्।
धीमते वीतरागाय बुद्धायाचिन्त्यशक्तये ॥

इत्यलं विस्तरेण ॥

---

# दर्शनपरिषदो विवरणम्

दार्शनिकप्रवराः सभापतिमहाभागाः, विद्यागोत्राणि विद्वांसः, अन्यानि कल्याणमित्राणि, प्रेयांसश्छात्राश्च !

सारस्वतानां समाराधनभूमिं ज्ञानतीर्थीभूतां काशमानामिमां काशीं स्वसंविदः प्रतिष्ठां को न जानाति। इमञ्च ब्रह्मदेशं को न जानाति, यत्रोपनिषदः स्वयमाविर्भूताः। अस्मिन्नेव ब्रह्मावर्ते महाकारुणिकस्य तथागतस्य भगवतो 'एतदहोसि कस्स नु खो अहं पठमं धम्मं देस्सेयं। को इमं धम्मं खिप्पमेव आजानिस्सतीति ?' धर्मोपदेशमनीषा समजायत।

अस्मिन्नेव चिरन्तनप्रवाहप्रसङ्गे, अयञ्च वाराणसेयसंस्कृतविश्वविद्यालयः सहस्रावधि महाविदुषां पौरस्त्यानां पाश्चात्त्यानामपि तपसा ब्रह्मचर्येण विद्यया श्रद्धया संवर्द्धितः स्वे महिम्नि प्रतिष्ठितो ब्रह्मावर्त्ते भारते महाभारते च विजयते। मूर्त्या च बहुलीभवतोऽस्य विश्वविद्यालयस्य पूर्वरूपमासीत् काशिकराजकीयसंस्कृतमहाविद्यालयः, यदध्यक्षश्रीकुबेरनाथशुक्लमहोदयानुरोधवशंवदेन विद्याचरणसम्पन्नेन डाक्टरसम्पूर्णानन्दमहाभागेन स्वप्रवचनोपज्ञं संस्थापिता, विदुषां प्रवचनपरम्परया श्रुत्या तदर्थचिन्तया तद्भावनया चानुपालितेयं दर्शनपरिषदद्य सहृदयावतां तत्रभवतां विद्वद्धौरेयाणां समुपस्थित्या विविधविद्यास्रोतोभिः प्रवहन्ती बहुमाना विराजते। पञ्चपञ्चाशदुत्तरैकोनविंशतितमे ई०वर्षे समुद्भवन्त्यपीयं दर्शनपरिषद् यथाभिलषितं यदुद्देश्यं सम्यङ् नापूपुरत्, तत्रास्माकमेव परिषत्कार्यकर्तृसदस्यानामनवधानं निदानम्। तथापि भवतां दयावतां क्रियायोगेन पञ्चाशदधिकसन्निबन्धानां पाठो मुद्रणञ्च, अनेकानेकमहाविदुषां भाषणानि, परिचर्यात्मकं सम्मेलनम्, छात्राणां परिचर्यात्मकः शास्त्रार्थो भाषणञ्चेति यथाकालं यथायथं सम्पन्नमेव। कार्यविधेः सम्यगसम्पादने नास्माकमेव दोषः, आसीद् मध्ये नियतिनाटिकायाः कश्चन गर्भाङ्कः कल्याणावाहकः कल्याणतमो यत्र विश्वविद्यालयस्याविर्भावः। अयं विश्वविद्यालयः समेषां दर्शनानामुदितानामुद्यतामुदेष्यतां च व्यतिकरभूमिरिव संवृत्तः। प्रायशः

सर्वेषां मुख्यदर्शनप्रस्थानानां न्यूनाधिकभावेन विकसन्तो विभागास्तत्र च महान्तो विद्वांसः समवेताः। अस्तमायतां विरलत्वप्राप्तानाञ्च शैवागमबौद्धजैनदर्शनादीनां वेदधर्मशास्त्रमीमांसाप्रभृतीनां समुज्जीवनं सम्पन्नम्। न केवलं देवभाषाबद्धविद्याना-मपि तु पालिप्राकृतभोटचीनादिभाषानिबद्धानां प्राचीनभारतीयविद्यानामपि प्रस्थान-भेदा अत्रायोजिताः। अतोऽप्यतिरिच्यमानानां प्रतीच्यदर्शनानामध्ययनार्थमपि यथाशीघ्रमेव विभागा विदग्धविद्वद्भिरधिष्ठिताः सम्भविष्यन्तीति मन्ये। एतत् सकलमपि विद्यायतनं दर्शनपरिषदुद्देश्यसिद्धौ आद्या योगभूमिरिव जातम्। अस्ति परिषदोऽन्यतममुद्देश्यमेकस्मिन् दर्शने प्रौढपाण्डित्यसम्पादनाय तदितरविभिन्नदर्श-नानां परिचयः, अभिनवानां प्राच्यप्रतीच्यदर्शनानां तुलनात्मकं समीक्षात्मकं चाध्ययन-मिति। एतदुद्देश्यसिद्धये संस्कृतविश्वविद्यालयः स्वजन्मना स्वाध्यायोपकरणानि उपाहृत्य परिषत्सदस्यानां कृतेऽप्रमादभूमिरेव जातः। इदानीमपि प्रमाद्यतोऽ-स्मान् कः क्षमेत। अत एवास्मिन् वर्तमानसंवत्सरे (१९६०) वर्तमानोपकुलपति-श्रीको०अ०सुब्रह्मण्य-अय्यरमहोदयनिर्देशेनेयं परिषद् नवविधानेन सङ्घटिता नवी-नानि कतिपयानि लक्ष्याणि समाकलयति। तदनुरोधेनास्याः परिषद ईदृशो विकाशो विधेयः, येनेयं संस्कृतविदुषां कृते विश्वविख्याताखिलभारतीयदर्शनपरिषदनुरूप-मखिलभारतीयप्राच्यविद्यापरिषदनुरूपं वा महत्त्वपूर्णं कार्यं विदधीत। अयं हि संकल्पस्तदा सत्यो भवेद् यदोत्तरोत्तरमधिकाधिकविद्वद्भिर्विद्यासंस्थानैश्च एष वृतः स्यात्। एतस्य गुहाहितस्य क्रतोराविर्भावने इदमधिवेशनं प्रथमः क्रमः। स्वार्त्विज्यदक्षैर्मूर्त्विग्भिर्यज्ञ इवायं दर्शनपरिषत्सदस्यानामभिक्रमो विद्वद्भिर्विभावितो विश्वविद्यालयेन भवतां पुरस्तादुपस्थापितः। महतो दर्शनतत्त्वाभिनयस्य पूर्वरङ्ग इवायं स्वीक्रियताम्, इदञ्चात्र चित्रं यद् भवन्त एव सूत्रधारा अप्यत्र।

एतन्न विस्मर्तव्यं यदयं कालः सङ्घटनस्यास्ते। भेदस्य कालः प्रायशो निरस्त एव। जीवितुः समक्षं सन्ति राजनीति-धर्म-संस्कृति-सभ्यतासु विकटा जटिला ग्रन्थयः समुपस्थिता अनुदिनं भीषणं चेष्टमानाः। अद्य दिशां कालस्य चायामस्तृणीभूतः। बाह्यविज्ञानस्योन्मिषताऽमितेन तेजसा जडोऽपि पदार्थश्चेतनायितः। अद्य जड-पदार्थाः पूर्वतोऽधिकमन्तस्थं विजानतामप्यविज्ञातं वैचित्र्यं बहिः प्रकाशयन्ति। अनुदिनमेतया अपरया विद्यया पराया विद्याया भेदविस्तरः क्रियते। एतेन मनुष्यस्य

न केवलमनादितः सञ्चितो विश्वास आन्दोलितः, अपि त्वद्धरा सुदुर्दर्शा गूढा गह्वरेष्ठा पुराणी धर्मदृष्टिः सत्यदृष्टिरप्यान्दोलितेव जाता। एतस्यां स्थितौ पुरातन्यो विचिकित्साः पुनरपि नवीभूता असमाहिता इव जाताः। जीवस्य किं लक्ष्यम्? कश्च तस्य परमः पुरुषार्थः? जीवजगतोः कः सम्बन्धः? नीतेर्धर्मस्य च कः सम्भवी सम्बन्धः? एतेषां समेषामस्माभिरप्रमत्तैः प्रज्ञया तपसा च समाधिर्विधेया। एतदर्थं यथाऽनवसादोऽप्रमादश्चापेक्ष्येते, तथा बुद्धेरौदार्यमप्यपेक्ष्यत एव। बुद्धेरौदार्यं नाम यत्सत्यं सा दृष्टिः, न तु या दृष्टिस्तत्सत्यमिति। सत्यं सर्वत्र प्रतिष्ठितम्, सत्ये च सर्वं प्रतिष्ठितमित्यत्रापि न कस्यचिद् विमतिः। अवरोहक्रमेण यदेवैकं सत्यं भेदेन विमृश्यते, आरोहक्रमेण तदेवाभेदे पर्यवस्यद् आपूर्यते। तदेवमवरोहारोहयोर्भेदाभेदाभ्यां तत्त्वं पूर्यते नान्यतमेन। अत एव यथा सर्वस्मिन्नेकं विज्ञानं सत्यं तथा एकस्मिन् सर्वविज्ञानमपि सत्यम्। इदानीन्तनो जडविज्ञानेन विजृम्भितः पदार्थविमर्श आरोहक्रमेण सत्यदृष्टये एव प्रभविष्यतीति सुदृढः प्रत्ययः कर्तुं शक्यः। अयमारोहावरोहक्रमनियमो जडचेतनयोः समाजव्यक्त्योः सत्यनीत्योः सर्वत्रैव जृम्भते। एतदवरोहारोहाभ्यां यत्सत्यस्य आपूरणं साक्षात्कारो वा तदेव पारदृश्वनां दार्शनिकानां रिक्थम्। एतद्रिक्थमेवास्माकं सत्याय शिवाय च कल्पिष्यते। एतत्सर्वं तदा संभवेद् यदाऽस्माकं ज्ञानकायो विकलाङ्गो न भवेत्। एतदस्माभिः स्वीकर्त्तव्यमेव यत् प्राचीनैर्व्यक्तिहितदृष्ट्या व्यक्तितत्त्वदृष्ट्या च यथा सत्यमाकलितं तथा समाजहितदृष्ट्या समाजतत्त्वदृष्ट्या च नैवालोचितम्। किं समाजस्य अस्तित्वं नास्ति? किं स्वतन्त्रा व्यक्तिरेकाकिनी विकसति रमते वा? किं धर्मः समाजानुरोधेन न प्रवर्तते? किं धर्मस्य प्रसूतिभूमिर्व्यक्तिरेव न समाजः? किं समाजस्य किमपि स्वरूपं नास्ति? तस्य च किमप्यर्थ्यमानं नास्ति? एतादृशा अर्वाचीना अनेके प्रश्नाः समाधानमपेक्षन्ते।

क्षणमेवं कल्प्यताम्—अस्ति समाजसंवित्तिव्यक्तिसंवित्त्योर्भेदाभेदः सम्बन्धः। अस्ति चान्योन्यवशादेव उभयोः प्रवृत्तिः। तत्र समाजसंवित्तिरपरिच्छिन्नाकारा अपरिच्छिन्नालम्बना, व्यक्तिसंवित्तिश्च परिच्छिन्नाकारा परिच्छिन्नालम्बना। व्यक्तिः समाजसंवित्तिमालम्ब्यात्मानमादधाति विकासयति च, समाजो व्यक्तिकर्मभ्यः परिपुष्टो व्यक्तेर्भुक्तौ मुक्तौ च कारणं भवति। एवमनादिकालतः

प्रवर्तमानो व्यक्तिसमाजयोः कार्यकारणभावः, अविनाभूतश्च तयोः सम्बन्धः। एवं हेयत्वे उपादेयत्वे वा व्यक्तिसमाजयोः सत्त्वं सहस्थितिकमेव। एवं सति व्यक्तितन्त्राणि शास्त्राणि यथा पराविद्यायामुपयुज्यन्ते, तथैव समाजतन्त्राणि शास्त्राण्यपि। समाजवादः प्रजातन्त्रादिकञ्च न केवलं शुष्कव्यवहारशास्त्रम्, अपि त्वन्यतममुत्कृष्टं दर्शनम् उत्कृष्टा च संस्कृतिरस्ति यन्मानवजीवनं सर्वथा व्याप्य तिष्ठति। एवंविधदर्शनानामुत्सभूमिर्विशेषतः सामूहिकं सामाजिकजीवनम्। एतैरेव दर्शनैरिदानीन्तनं मानवजीवनमापूर्यते, सामूहिक्यश्च जटिलाः समस्याः समाधीयन्ते। एतेषां समेषामेव ज्ञानमद्य सत्यदृष्ट्ये अपेक्ष्यत एव।

एतत्सर्वमालोच्य दर्शनपरिषदा सामाजिकजीवनस्याधारभूतानां दार्शनिकतत्त्वानामाकलने तदुन्नयने च यत्नः करिष्यते। तत्र यथा प्राचीनदर्शनप्रस्थानानां तथैव नवीनप्रस्थानानामपि परिषदो विधास्यन्ते। यथा संस्कृतिदर्शनपरिषत्, यस्यां नीतेराचारशास्त्रस्य, विभिन्नमानवीयसंस्कृतिपरम्परासु भारतीयसंस्कृतेर्विभिन्नविचारपरम्परास्वन्तरवलम्बनदृष्टेश्च संग्रहो भविता। यथा वा नवीनदर्शनपरिषत्, यस्यां पुराणानामभिनवानां च पाश्चात्त्यदर्शनानामर्वाचीनभारतीयदर्शनानां चालोचनं संगृह्येत।

इदमधिवेशनं तत्र च भाविन्यश्चतस्रः परिषदः, तत्र पञ्चाशदधिकनिबन्धानां पाठः, यात्रादिक्लेशं सोढ्वापि वंगगुर्जरादिदूरप्रदेशेभ्यः समागत्य शास्त्रचर्चायां विदुषां योगलाभो महते प्रोत्साहनाय कल्पन्ते। नूनमेव विदुषामनुदिनं प्रवर्धमानकृपावलम्बेन इयं परिषद् विद्वद्भूयिष्ठा जगतः कल्याणाय भवेदिति निवेदयति—

परिषन्मन्त्री

श्रीजगन्नाथ उपाध्यायः



———



## रजिस्टर्ड न्यूज पेपर्स एक्ट के नियम के अन्तर्गत

## विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | मुद्रक का नाम | अमलकुमार बसु |
| | राष्ट्रियता | भारतीय |
| | पता | इंडियन प्रेस ( प्राइवेट ) लिमिटेड मलदहिया, वाराणसी । |
| ४. | प्रकाशक का नाम | श्री टी० वी० रामचन्द्र दीक्षित |
| | राष्ट्रियता | भारतीय |
| | पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |
| ५. | सम्पादक का नाम | श्री टी० वी० रामचन्द्र दीक्षित |
| | राष्ट्रियता | भारतीय |
| | पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |
| ६. | स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |

मैं श्री टी० वी० रामचन्द्र दीक्षित घोषित करता हूँ कि उपरि लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है ।

श्री टी० वी० रामचन्द्र दीक्षित
हस्ताक्षर

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका ।
२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रपदमार्गशीर्षफाल्गुनपूर्णिमासु भवति ।
३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।
४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्य विदुषां मौलिकविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।
५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः ।
६. अस्या वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते ।
७. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी-२" इति संकेतेन विधेयः ।

---

प्रकाशक—श्री टी० वी० रामचन्द्र दीक्षित, संचालक—अनुसन्धान संस्थान, संस्कृत विश्वविद्यालय, वाराणसी ।

मुद्रक—अमलकुमार वसु, इण्डियन प्रेस (प्राइवेट) लिमिटेड, वाराणसी शाखा ।